**कुलधर्मं हि मोहेन योऽन्यधर्मेण दुर्मतिः ।**
**बद्धः संसारपाशेन सोऽन्त्यजानां प्रियो भवेत् ॥ १८ ॥**

यदि कोई मूर्ख अज्ञान में पड़कर अन्य धर्म को कुल धर्म से अधिक मान बैठता है तो वह सांसारिक बन्धनों में बंध जाता है और निम्न जाति के लोगों का प्रिय बन जाता है ॥ १८ ॥

**यो वा कुलाधिकं धर्ममज्ञानाद्वदति प्रिये ।**
**ब्रह्महत्याधिकं पापं स प्राप्नोति न संशयः ॥ १९ ॥**

हे प्रिये ! जो अज्ञान में पड़कर कुल धर्म से अधिक अन्य धर्मों के विषय में चर्चा करता है तो वह निःसन्देह ब्रह्महत्यादि से भी अधिक पाप को प्राप्त करता है ॥ १९ ॥

**कुलधर्मप्रवहणं समारुह्य नरोत्तमः ।**
**स्वर्गादि द्वीपान्तरं गत्वा मोक्षरत्नं समश्नुते ॥ २० ॥**

हे देवि ! कुलधर्म के रथ पर चढ़कर श्रेष्ठ मनुष्य इस लोक को पारकर स्वर्ग को जाता है और मोक्षरूपी रत्न को प्राप्त करता है ॥ २० ॥

**दर्शनेषु च सर्वेषु चिराभ्यासेन मानवाः ।**
**मोक्षं लभन्ते कौले तु सद्य एव न संशयः ॥ २१ ॥**

सभी अन्य दर्शनों में दीर्घकालीन प्रयास से ही मनुष्यों को मोक्ष की प्राप्ति हो सकती है किन्तु कौल धर्म में अभ्यस्त साधक शीघ्र ही जीवन्मुक्त हो जाता है इसमें सन्देह नहीं है ॥ २१ ॥

**बहुनात्र किमुक्तेन शृणु मत्प्राणवल्लभे ।**
**न कौलसमधर्मोऽस्ति त्वां शपे कुलनायिके ॥ २२ ॥**

हे मेरी प्राणवल्लभे ! हे कुलनायिके ! अधिक कहने से क्या लाभ? आप सुन लें कि मैं आपके द्वारा अभिशप्त हूँ कि कुलधर्म से अधिक संसार में कुछ भी नहीं है ॥ २२ ॥

**योगी चेन्नैव भोगी स्याद्भोगी चेन्नैव योगवित् ।**
**भोगयोगात्मकं कौलं तस्मात् सर्वाधिकं प्रिये ॥ २३ ॥**

**भोगयोगात्मक 'कौल'**—जो योगी होता है, वह भोगी नहीं होता और जो भोगी होता है, वह योग को नहीं जानता । किन्तु कौल भोग और योग दोनों से युक्त है । अतः हे प्रिये ! वह सबसे श्रेष्ठ है ॥ २३ ॥

**विमर्श**—हे प्रिये ! साधक कुलाचार में योगी होकर भी सांसारिक भोग का आनन्द लेता है । किसी अन्य आचार में ऐसा नहीं है कि योगी योग में रहकर भोग का आनन्द प्राप्त करे ।

**भोगो योगायते साक्षात् पातकं सुकृतायते ।**
**मोक्षायते च संसारः कुलधर्मे कुलेश्वरि ॥ २४ ॥**

हे कुलेश्वरि ! कुलधर्म में भोग ही साक्षात् योग का रूप ले लेता है, पातक सुकृत बन जाता है और संसार मोक्ष का साधन हो जाता है ॥ २४ ॥

**ब्रह्मेन्द्राच्युतरुद्रादिदेवतामुनिपुङ्गवाः ।**
**कुलधर्मपरा देवि मानुषेषु च का कथा ॥ २५ ॥**

**देवता भी कुलधर्मपरायण**—हे देवि ! ब्रह्मा, इन्द्र, अच्युत, रुद्रादि देवता और श्रेष्ठ मुनि भी कुलधर्म परायण रहे हैं, अतः मनुष्यों की क्या बात है ॥ २५ ॥

**विहाय सर्वधर्मांश्च नानागुरुमतानि च ।**
**कुलमेव विजानीयाद्यदीच्छेत् सिद्धिमात्मनः ॥ २६ ॥**

अतः यदि आत्मसिद्धि प्राप्त करने की इच्छा हो, तो सभी धर्मों और नाना मतवादों को छोड़कर कुलधर्म का ही ज्ञान प्राप्त करे ॥ २६ ॥

**पूर्वजन्मकृताभ्यासात् कुलज्ञानं प्रकाशते ।**
**स्वप्नोत्थित प्रत्ययवदुपदेशादिकं विना ॥ २७ ॥**

**पूर्वजन्म के अभ्यास से कुलधर्म का ज्ञान**—

पूर्वजन्मों मे किये गये अभ्यास के फलस्वरूप जीव को कुलधर्म के ज्ञान का प्रकाश स्वतः प्राप्त होता है । यह ज्ञान उपदेश के बिना ही, जैसे स्वप्न में प्राप्त अनुभूतियों से जागकर ज्ञान मिलता है वैसे ही स्वयं प्रतिभासित हो जाता है ॥ २७ ॥

**जन्मान्तरसहस्रेषु या बुद्धिर्विहिता नृणाम् ।**
**तामेव लभते जन्तुरुपदेशो निरर्थकः ॥ २८ ॥**

पिछले सहस्रजन्मों में मनुष्य की जो बुद्धि विकसित होती है, मात्र उसी से जीव को ज्ञान मिलता है, उपदेश की आवश्यकता ही नहीं होती ॥ २८ ॥

**शैववैष्णवदौर्गार्कगाणपत्येन्दुसम्भवैः ।**
**मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते ॥ २९ ॥**

**मन्त्र जपादि से शुद्ध चित्त में कुलधर्म के ज्ञान का स्फुरण**—शैव, वैष्णव, दुर्गा, सूर्य या गणपति, आदि किसी भी सम्प्रदाय के मन्त्रों से जिसका चित्त विशुद्ध हो चुका है, उसे ही कुलधर्म का ज्ञान होता है ॥ २९ ॥

**सर्वधर्माश्च देवेशि पुनरावर्त्तकाः स्मृताः ।**
**कुलधर्मस्थिता ये च ते सर्वेऽप्यनिवर्त्तकाः ॥ ३० ॥**

अन्य सभी धर्म तो 'पुनरावर्तक' हैं अर्थात् उनके पालन करने वाले आवागमन के चक्र में पड़े रहते हैं । किन्तु हे देवेशि ! सभी कुलधर्मानुयायी 'अनिवर्तक' अर्थात् आवागमन से मुक्त हो जाते हैं ॥ ३० ॥

**पुराकृततपोदानयज्ञतीर्थजपव्रतैः ।**
**क्षीणांहसां नृणां देवि कुलज्ञानं प्रकाशते ॥ ३१ ॥**

**कुलधर्म के ज्ञान के अधिकारी**—हे देवि ! पूर्व जन्म में किये हुये तप, दान, यज्ञ तीर्थसेवन, जप, व्रत आदि के द्वारा जिन मनुष्यों के पाप नष्ट हो जाते हैं, उन्हें कुलधर्म का ज्ञान प्राप्त होता है ॥ ३१ ॥

**त्वमहं देवि कल्याणि यस्य तुष्टावुभावपि ।**
**देवतागुरुभक्त्या च कुलज्ञानं प्रकाशते॥ ३२ ॥**

हे देवि ! जिस पर आप ( भगवती ) और हम ( शिव ) दोनों प्रसन्न होते हैं और हे सभी का कल्याण करने वाली देवि ! जिसे देवता एवं गुरु में भक्ति है, उसे कुलधर्म का ज्ञान होता है ॥ ३२ ॥

**शुद्धचित्तस्य शान्तस्य कर्मिणो गुरुसेविनः ।**
**अतिभक्तस्य गुह्यस्य कुलज्ञानं प्रकाशते॥ ३३ ॥**

शुद्धचित्त, शान्त, कर्मशील, गुरु की सेवा में परायण और परम भक्त तथा गुह्य साधक को कुल का ज्ञान होता है ॥ ३३ ॥

**श्रीगुरौ कुलशास्त्रेषु कौलिकेषु कुलाश्रये ।**
**यस्य भक्तिर्दृढा तस्य कुलज्ञानं प्रकाशते ॥ ३४ ॥**

श्री गुरुदेव में, कुलधर्म के शास्त्रों में, कौलिकों में और कौल-परिवारों में जिसकी दृढ़ भक्ति होती है, उसे कुलधर्म का ज्ञान मिलता है ॥ ३४ ॥

**श्रद्धा विनयहर्षाद्यैः सदाचारदृढव्रतैः ।**
**गुर्वाज्ञापालकैर्धर्मैः कुलज्ञानमवाप्यते ॥ ३५ ॥**

श्रद्धा, नम्रता, हर्ष आदि के साथ सदाचार के नियमों का दृढ़ता से

पालन करते हुये जो साधक गुरु की आज्ञा एवं धर्म को मानता है, उसे कुलधर्म का ज्ञान होता है ॥ ३५ ॥

**अनर्हे कुलविज्ञानं न तिष्ठति कदाचन ।**
**तस्मात् परीक्ष्य वक्तव्यं कुलज्ञानं मयोदितम् ॥ ३६ ॥**

**अनधिकारी को कुलधर्म बताने का दोष**—अनधिकारी व्यक्ति कुलधर्म के विज्ञान को समझ नहीं सकता । अतः परीक्षा लेकर ही अधिकारी व्यक्ति को मेरे बताए गए कुलधर्म का ज्ञान कराना चाहिये ॥ ३६ ॥

**न ब्रूयात् कुलधर्मं तमयोग्ये कुलशासनम् ।**
**आज्ञाभङ्गश्च यः कुर्याद्देवताशापमाप्नुयात् ॥ ३७ ॥**

अयोग्य व्यक्ति को कुलधर्म या कुलशास्त्र नहीं बताना चाहिए । इस आज्ञा को भंग करने पर देवता का शाप मिलता है ॥ ३७ ॥

**आराध्य समयाचारं कुलज्ञानं वदेद्यदि ।**
**स गुरुश्चापि शिष्यश्च योगिनीनां भवेत् पशुः ॥ ३८ ॥**

समयाचार का पालन करने वाला यदि कुलधर्म का ज्ञान बताता है, तो वह बताने वाला ( गुरु ) और उस ज्ञान को प्राप्त करने वाला ( शिष्य ) दोनों ही योगिनियों के पशु होते हैं अर्थात् उनके द्वारा नाश को प्राप्त होते हैं ॥३८॥

**विमर्श**—भास्कराचार्य ने सुभगोदय की टीका सौभाग्यभास्कर में श्रीविद्या के उपासक के लिए तीन आचारों का प्रतिपादन किया है । १. समय मत, २. कौल मत और ३. मिश्र मत । समय मत का पालन करने वाला साधक समयाचार शब्द से अभिहित होता है । किन्तु सौन्दर्यलहरी के श्लोक ३१ की लक्ष्मीधरा व्याख्या में लक्ष्मीधर ने समयाचार का अन्य अर्थ भी बताया है ।

**बोधयित्वा गुरुः शिष्यं कुलज्ञानं प्रकाशयेत् ।**
**लभेते तावुभौ साक्षाद्योगिनीवीरमेलनम् ॥ ३९ ॥**

**कुल धर्म की महिमा**—यदि गुरु अधिकारी शिष्य को उद्बोधित कर उसे कुलधर्म का ज्ञान कराये तो इससे दोनों को नित्य योगिनियों और वीरों के साक्षात् सम्मिलन का आनन्द प्राप्त होगा ॥ ३९ ॥

**विमर्श**—योगिनीवीरमेलनम्—शिव और शक्ति का साक्षात् सामरस्य प्राप्त करता है ।

**अनायासेन संसारसागरं यस्तितीर्षति ।**
**कुलधर्ममिमं ज्ञात्वा मुच्यते नात्र संशयः ॥ ४० ॥**

जो अनायास ही संसार सागर को पार करना चाहता है, वह इस कुलधर्म को जानकर मुक्ति को प्राप्त करता है इसमें संदेह नहीं ॥ ४० ॥

**कुलधर्ममहामार्गगन्ता मुक्तिपुरीं व्रजेत् ।**
**अचिरान्नात्र सन्देहस्तस्मात् कौलं समाश्रयेत् ॥ ४१ ॥**

कुलधर्म के महामार्ग से जाकर अविलम्ब ही मुक्तिपुरी में पहुँचा जाता है, इसमें सन्देह नहीं । अतएव कौल मार्ग का आश्रय ग्रहण करना चाहिये ॥४१॥

**कुलशास्त्रमनादृत्य पशुशास्त्राणि योऽभ्यसेत् ।**
**स्वगृहे पायसं त्यक्त्वा भिक्षामटति पार्वति ॥ ४२ ॥**

हे पार्वति ! कुलशास्त्र का अनादर कर जो पशु शास्त्रों ( ? ) का अभ्यास करता है, वह मानों अपने घर की खीर छोड़कर अन्य लोगों से भीख माँगता फिरता है ॥ ४२ ॥

**विहाय कुलधर्मं यः परधर्मपरो भवेत् ।**
**करस्थं रत्नमुत्सृज्य दूरस्थं काचमीहते ॥ ४३ ॥**

कुल धर्म का परित्याग कर जो अन्य धर्म में परायण हो जाता है वह मानों हाथ में रखे रत्न को छोड़कर दूर स्थित काँच की इच्छा करता है ॥४३॥

**संत्यज्य कुलमन्त्राणि पशुमन्त्राणि यो जपेत् ।**
**स धान्यराशिमुत्सृज्य पांसुराशिं जिघृक्षति ॥ ४४ ॥**

कुल मन्त्रों को छोड़कर जो अन्य पशु मन्त्रों ( ? ) का जप करता है, वह मानों अन्न के ढेर को छोड़कर भूसे के ढेर की इच्छा करता है ॥ ४४ ॥

**कुलान्वयं समुत्सृज्य योऽन्यमन्वयमीक्षते ।**
**तडागादिव तृष्णार्त्तो मृगतृष्णां प्रधावति ॥ ४५ ॥**

कुल परम्परा को छोड़कर, जो दूसरे परम्परा की इच्छा करता है, वह प्यासा मानों तालाब को छोड़कर मृगतृष्णा के पीछे दौड़ता है ॥ ४५ ॥

**यथेन्द्राजालजा मायाः क्षणमेव सुखावहाः ।**
**श्रीकौलादन्यसमयास्तादृशाः कुलनायिके ॥ ४६ ॥**

जिस प्रकार इन्द्रजाल से उत्पन्न माया क्षण भर तक ही सुख देती है, उसी प्रकार हे कुलनायिके ! श्री कौल के अतिरिक्त अन्य धर्म (समय) अल्प काल तक ही सुख देते हैं ॥ ४६ ॥

**कुलधर्ममजानन् यः संसारान्मोक्षमिच्छति ।**
**पारावारमपारं स पाणिभ्यां तर्त्तुमिच्छति ॥ ४७ ॥**

**कुल (शक्ति देवी) की उपासना से सद्गति**—कुलधर्म को बिना जाने हुए जो संसार में मोक्ष पाने की इच्छा करता है, वह मानों अपार सागर को हाथों से तैरकर पार करना चाहता है ॥ ४७ ॥

**यो वान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति ।**
**स्वप्नलब्धधनेनैव धनवान् स भवेत्तदा ॥ ४८ ॥**

जो दूसरे दर्शनों द्वारा भुक्ति और मुक्ति की कामना करता है, वह मानों स्वप्न में प्राप्त धन से धनी होना चाहता है ॥ ४८ ॥

**शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ।**
**तथान्यसमयेभ्यश्च भुक्तिर्मुक्तिः प्रकाशते ॥ ४९ ॥**

हे पार्वति ! जिस प्रकार शुक्ति (सीप) में चाँदी की भ्रान्ति होती है, उसी प्रकार अन्य समयों ( धर्मों ) में भुक्ति और मुक्ति प्रतिभासित होती हैं ॥ ४९ ॥

**सर्वकर्मविहीनोऽपि वर्णाश्रमविवर्जितः ।**
**कुलनिष्ठः कुलेशानि भुक्तिमुक्त्योः स भाजनम् ॥ ५० ॥**

हे कुलेशानि ! सब प्रकार के ( नित्य, नैमित्तिक ) कर्मों से रहित और वर्ण तथा आश्रम से हीन व्यक्ति भी कुलधर्म में निष्ठा रखकर भुक्ति और मुक्ति का अधिकारी हो जाता है ॥ ५० ॥

**कुलज्ञानविहीनोऽपि कुलभक्त्याश्रयो भवेत् ।**
**सोऽपि सद्गतिमाप्नोति किमुतास्य परायणः ॥ ५१ ॥**

कुल के ज्ञान से रहित व्यक्ति भी यदि कुल की भक्ति का आश्रय लेता है, तो भी वह सद्गति को प्राप्त करता है । फिर कुलधर्म में परायण व्यक्ति का तो क्या कहना ॥ ५१ ॥

**कुलधर्मो हतो हन्ति रक्षितो रक्षति प्रिये ।**
**पूजितः पूजयत्याशु तस्मात्तं न परित्यजेत् ॥ ५२ ॥**

हे प्रिये ! कुलधर्म को नष्ट करने से वह उसका ही नाश करता है और रक्षा करने से वह उसकी रक्षा करता है और पूजा करने से वह शीघ्र ही उसे पूजनीय बनाता है । अतः उस कुलधर्म को नहीं छोड़ना चाहिए ॥ ५२ ॥

**निन्दन्तु बान्धवाः सर्वे त्यजन्तु स्त्रीसुतादायः ।**
**जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥ ५३ ॥**

सेवे सेवे पुनःसेवे त्वामेव परदेवते ।
त्वद्धर्म नैव मुञ्चामि मनोवाक्कायकर्मभिः ॥ ५४ ॥
एवमापद्गतस्यापि यस्य भक्तिः सुनिश्चला ।
स तु सम्पूज्यते देवैरमुत्र स शिवो भवेत् ॥ ५५ ॥

सभी भाई बन्धु चाहे निन्दा करें, स्त्री पुत्रादि चाहे छोड़ दें, लोग मुझे देखकर चाहे हँसी उड़ाएँ या राजा चाहे दण्ड दें, किन्तु हे परदेवते! मैं आपकी बार-बार सेवा ही करता रहूँगा । मन, वचन, शरीर एवं कर्म से मैं आपके धर्म को नहीं छोडूगाँ–इस प्रकार आपत्ति में पड़कर भी जिसकी भक्ति दृढ़ बनी रहती है, वह देवताओं के द्वारा पूजित होकर शिवत्व को प्राप्त करता है ॥५३-५५॥

रोगदारिद्र्यदुःखाद्यैः पीडितोऽप्यनिशं शिवे ।
यस्त्वामुपास्ते भक्त्या स नरः सद्गतिमाप्नुयात् ॥ ५६ ॥

रोग एवं दरिद्रता के दुःख आदि से सदैव पीड़ित होकर भी, जो साधक भगवती की उपासना भक्तिपूर्वक करता है, हे शिवे ! वह सद्गति को प्राप्त करता है ॥ ५६ ॥

जनाः स्तुवन्तु निन्दन्तु लक्ष्मीर्गच्छतु तिष्ठतु ।
मृतिरद्य युगान्ते वा कुलं नैव परित्यजेत् ॥ ५७ ॥

लोग प्रशंसा करें या निन्दा, लक्ष्मी जाए या रहे, मृत्यु आज हो या युग के अन्त में किन्तु साधक कुलधर्म को कभी भी न छोड़े ॥ ५७ ॥

नापि लोभान्न च क्रोधान्न द्वेषान्न च मत्सरात् ।
न कामन्न भयाद्वापि कुलधर्मं परित्यजेत् ॥ ५८ ॥

न लोभ से, न क्रोध से, न द्वेष से, न मत्सर ( ईर्ष्या ) से, न काम से और न भय से किसी भी परिस्थिति में कुलधर्म का त्याग न करे ॥ ५८ ॥

यो जन्तुर्नार्चयेत्त्वान्तु कुलधर्मसमाश्रितः ।
क्लिश्यते जातमात्रेण भूतारिणात्मशत्रुणा ॥ ५९ ॥

जो जीव कुलधर्म का आश्रय लेकर भगवती की पूजा नहीं करता, वह जन्म लेते ही आत्मशत्रु एवं भूतारियों (घातक जीवों) से क्लेश पाता है ॥५९॥

पुलाका इव धान्येषु पतंगा इव जन्तुषु ।
बुद्बुदा इव तोयेषु ये कौलविमुखा हि ते ॥ ६० ॥

कौलधर्म से जो विमुख हैं, वे जल के बुलबुलों के समान नगण्य हैं, जैसे अन्न में पुलाक (भूंसी) और जीवों में पतङ्ग नगण्य होते हैं ॥ ६० ॥

**तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।**
**स जीवति मनो यस्य कुलधर्मे व्यवस्थितम् ॥ ६१ ॥**

वृक्षों और मृग-पक्षियों का भी जीवन है किन्तु वास्तविक जीवन उसी का है, जिसका मन कुल धर्म में लगा हुआ है ॥ ६१ ॥

**कुलधर्मविहीनस्य दिनान्यायान्ति यान्ति च ।**
**स लोहकारभस्त्रेवश्वसन्नपि न जीवति ॥ ६२ ॥**

कुलधर्म से विहीन जीव के दिन आते हैं और बीत जाते हैं । वह लुहार की धौंकनी के समान श्वास लेता हुआ भी जीवित नहीं है ॥ ६२ ॥

**गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।**
**कुलेश्वरि कुलाज्ञस्य तत् पशोरिव जीवितम् ॥ ६३ ॥**

**कुलधर्म को न जानने वाला सदा पशु के समान**—हे कुलेश्वरि ! कुल धर्म को न जानने वाला मनुष्य चलते-फिरते, बैठते या जागते-सोते पशु के समान ही जीवन व्यतीत करता है ॥ ६३ ॥

**विद्वानपि च मूर्खोऽसौ धार्मिको वाप्यधार्मिकः ।**
**व्रतस्थोऽप्यव्रतस्थो वा यः कौलविमुखो जनः ॥ ६४ ॥**
**जातास्त एव जगति जन्तवः साधु जीविनः ।**
**कुलधर्मपरा देवि शेषाश्च द्वारगर्दभाः ॥ ६५ ॥**

विद्वान् हो या मूर्ख, धार्मिक हो या अधार्मिक, व्रतधारी हो या व्रत से विमुख हो, जो मनुष्य कौल से विमुख है, वह संसार में जन्म भर लेता है, हे देवि! उसका कोई महत्त्व नहीं होता, जैसे द्वार पर बँधे गधे का कोई महत्त्व नहीं। केवल कुल धर्मपरायण व्यक्ति ही पवित्र जीवन जीते हैं ॥ ६४-६५ ॥

**स पुमानुच्यते सद्भिः कुलधर्मपरायणः ।**
**अपरस्तु परं सत्यमस्थिकूटत्वचावृतः ॥ ६६ ॥**

**कुलधर्म के पालन करने वाले ही वास्तविक मनुष्य**—कुलधर्म परायण सज्जन ही मनुष्य कहलाने योग्य हैं । अन्य तो निःसन्देह केवल हड्डियों और खाल के पञ्जर मात्र होते हैं ॥ ६६ ॥

**चतुर्वेदी कुलाज्ञानी श्वपचादधमः प्रिये ।**
**श्वपचोऽपि कुलज्ञानी ब्राह्मणादतिरिच्यते ॥ ६७ ॥**

**कुल को न जाननेवाला वेदज्ञ चाण्डाल से भी अधम**—हे प्रिये ! चारों वेदों का ज्ञाता यदि कुल को नहीं जानता, तो वह चाण्डाल से भी अधम है

और यदि चाण्डाल भी कुल ( = शक्ति ) का ज्ञान रखता है, तो वह ब्राह्मण से भी श्रेष्ठ है ॥ ६७ ॥

**गुरुकारुण्ययुक्तस्तु दीक्षानिर्धूतपातकः ।**
**कुलपूजारतो देवि सोऽयं कौलो न चेतरेः ॥ ६८ ॥**

**देवीभक्त ही कुलज्ञ**—हे देवि ! गुरु की कृपा को प्राप्त करने वाला, दीक्षा-संस्कार द्वारा जिसके पाप नष्ट हो गये हैं, कुल (देवी शक्ति) की पूजा में लगा हुआ मनुष्य ही कौल है, अन्य नहीं ॥ ६८ ॥

**यः कौलिकः कुलज्ञानं न पश्यति न विन्दति ।**
**न पूजयति धिक् तस्य तत् काकस्येव जीवितम् ॥ ६९ ॥**

हे देवि ! जो कौलिक कुल (शक्ति) को नहीं देखता, नहीं पहचानता अथवा उनकी पूजा नहीं करता, उसे धिक्कार है । उसका जीवन कौए के समान निरर्थक है ॥ ६९ ॥

**ते धन्याः पुण्यकर्माणस्ते सन्तस्ते च योगिनः ।**
**येषां भाग्यवशाद्देवि कुलज्ञानं प्रकाशते ॥ ७० ॥**

हे देवि ! वे पुण्यकर्मी योगी धन्य हैं, वे सन्त हैं, और वे योगी हैं जिन्हें भाग्यवश कुल का ज्ञान प्राप्त होता है ॥ ७० ॥

**ते वन्द्यास्ते महात्मानः कृतार्थस्ते नरोत्तमाः ।**
**येषामुत्पद्यते चित्ते कुलज्ञानं मयोदितम् ॥ ७१ ॥**

वे महात्मा वन्दनीय हैं, वे नर श्रेष्ठ कृतार्थ हैं, जिनके मन में मेरा बताया कुलज्ञान उत्पन्न होता है ॥ ७१ ॥

**सर्वप्रकाशगमनं सर्वतीर्थावगाहनम् ।**
**यत् सर्वयज्ञाचरणं कुलधर्मप्रवेशनम् ॥ ७२ ॥**

कुलधर्म में प्रवेश करने से सभी प्रकार का प्रकाश (ज्ञान) प्राप्त होता है, सभी तीर्थों के स्नान और सभी यज्ञों के अनुष्ठान का फल मिलता है ॥७२

**प्रविशन्ति कुलं धर्म ये वै सुकृतिनो नराः ।**
**ते पुनर्जननीगर्भ न विशन्ति कदाचन ॥ ७३ ॥**

जो सुकृती मनुष्य कुलधर्म में प्रवेश करते हैं, वे फिर कभी माता के गर्भ में नहीं पड़ते हैं ॥ ७३ ॥

**प्रसङ्गेनापि यः कश्चित् कुलं कुलमितीरयेत् ।**

**कुल तत् पावनं देवि भवति त्वदनुग्रहात् ।**
**कुलज्ञानस्य कुलेशानि नान्यधर्मैः प्रयोजनम् ॥ ७४ ॥**

प्रसङ्ग से भी जो कोई 'कुल कुल' कहता है, हे देवि ! उसका सम्पूर्ण कुल देवी के अनुग्रह से पवित्र हो जाता है । हे कुलेशानि ! कुलज्ञाता को अन्य धर्मों की आवश्यकता नहीं रह जाती ॥ ७४ ॥

**कुलेशि कुलनिष्ठानां कौलिकानां महात्मनाम् ।**
**ददामि परमं ज्ञानं चान्तकाले न संशयः ॥ ७५ ॥**

हे कुलेशि ! कुलनिष्ठ कौलिक महात्माओं को अन्तकाल में मैं परम ज्ञान प्रदान करती हूँ, इसमें सन्देह नहीं ॥ ७५ ॥

**चिरायासाल्पफलदं काङ्क्षते समयं जनाः ।**
**सुखेन सर्वफलदं कुलं कोऽपि त्यजत्यहो ॥ ७६ ॥**

दीर्घ परिश्रम और थोड़ा फल देने वाले समय (मत) को लोग चाहते हैं। सुख से सभी फलों को देने वाले कुलधर्म को कौन छोड़ता है ॥ ७६ ॥

**कुलज्ञो हि च सर्वज्ञो वेदशास्त्रोज्झितोऽपि वा।**
**वेदशास्त्रागमज्ञोऽपि कुलाज्ञस्त्वज्ञ एव हि॥ ७७ ॥**

वेद शास्त्र से रहित होकर भी कुलज्ञ सर्वज्ञ होता है और वेद शास्त्र तथा आगम का ज्ञाता भी यदि कुल को नहीं जानता, तो वह अज्ञ ( मूर्ख ) ही है ॥ ७७ ॥

**जानन्ति कुलमाहात्म्यं त्वद्भक्ता एव नापरे ।**
**चकोरा एव जानन्ति नान्ये चन्द्रगतां रुचिम् ॥ ७८ ॥**

हे देवि ! आपके भक्त ही कुल की महिमा को जानते हैं, अन्य नहीं जानते। जिस प्रकार चकोर ही चन्द्रमा की छबि को जानते हैं, दूसरे ज़ीव उसे नहीं जानते ॥ ७८ ॥

**कुलज्ञा एव तुष्यन्ति श्रुत्वा कुलकथां प्रिये।**
**स्वल्पा नद्यो विवर्द्धन्ते ज्योत्स्नया किं समुद्रवत् ॥ ७९ ॥**

हे प्रिये ! कुलज्ञ ही कुल की कथा को सुनकर प्रसन्न होते हैं जैसे— ज्योत्स्ना से समुद्र ही वृद्धि को प्राप्त करता है, छोटी नदियाँ नहीं ॥ ७९ ॥

**नान्यधर्ममवेक्षन्ते कौलिकाः सारवेदिनः ।**
**भृङ्गाः पुष्पान्तरं लुब्धा मन्दारामोदसेविनः ॥ ८० ॥**

सार तत्त्व को जानने वाले कौलिक लोग दूसरे धर्मों की ओर ध्यान नहीं देते, जैसे भौंरे अन्य पुष्पों की अपेक्षा मन्दार पुष्प की ही सुगन्ध से आकृष्ट होते हैं ॥ ८० ॥

**मानयन्ते हि सारज्ञाः कुलधर्मं न चेतरे ।**
**शिवः शिरसि धत्तेऽब्जं सैंहिकेया गिलत्यहो ॥ ८१ ॥**

भगवान् शिव जिस चन्द्रमा को मस्तक पर धारण करते हैं, उसको राहु निगल जाता है । इसी प्रकार सारतत्त्व को जानने वाले ही कुलधर्म को सम्मान देते हैं, अन्य नहीं ॥ ८१ ॥

**अभिज्ञा एव जानन्ति नाभिज्ञाः कुलदर्शनम् ।**
**जलमिश्रपयःपानं बकः किं वेत्ति हंसवत् ॥ ८२ ॥**

ज्ञानी लोग ही कुल दर्शन को जानते हैं, अज्ञानी जन नहीं जानते । जैसे जल में मिले हुए दूध को क्या हंस के समान बगुला पक्षी भी जानता है, नही ॥ ८२ ॥

**शिवशक्तिमयो लोको लोके कौलं प्रतिष्ठितम् ।**
**तस्मात् सर्वाधिकं कौलं सर्वसाधारणं कथम् ॥ ८३ ॥**

यह संसार शिवशक्तिमय है और इस संसार में कौल साधक की प्रतिष्ठा है । अतः सबसे श्रेष्ठ कौल है । फिर यह सर्व साधारण कैसे हो सकता है ॥ ८३ ॥

**षड्दर्शनानि मेऽङ्गानि पादो कुक्षिः करौ शिरः ।**
**तेषु भेदन्तु यः कुर्यान्ममाङ्गं च्छेदयेत्तु सः ॥ ८४ ॥**

**छः दर्शन का शिवशक्तिमयत्व एवं वेदात्मक शास्त्र का कौलात्मकत्व—**

छहों दर्शन मेरे अङ्ग हैं—दो पैर, दो हाथ, कुक्षि एवं शिर । इनमें जो भेद करता है, वह मानों मेरे अङ्ग का भेदन करता है ॥ ८४ ॥

**एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि ।**
**तस्माद्वेदात्मकं शास्त्रं विद्धि कौलात्मकं प्रिये ॥ ८५ ॥**

उसी प्रकार ये छः दर्शन ( जो वेदों से निकले हैं ) कुल के छः अंग हैं । अतः हे प्रिये ! कौलशास्त्र को वेदात्मक शास्त्र समझना चाहिए ॥ ८५ ॥

**दर्शनेष्वखिलेष्वेव फलदं चैकदैवतम् ।**
**भुक्तिमुक्तिप्रदं नृणां कुलेऽस्मिन् दैवतं प्रिये ॥ ८६ ॥**

सभी दर्शनों में एक देवता ही फलदायक है । हे प्रिये ! इस कुल में मनुष्य को भुक्ति एवं मुक्ति देने वाला दैवत है ॥ ८६ ॥

**लोकधर्मविरुद्धञ्च सिद्धयोगीश्वरि प्रिये ।**
**कुलं प्रमाणतां याति प्रत्यक्षफलदं यतः॥ ८७ ॥**
**प्रत्यक्षञ्च प्रमाणाय सर्वेषां प्राणिनां प्रिये।**
**उपलब्धिबलात्तस्य हताः सर्वे कुतार्किकाः ॥ ८८ ॥**
**परोक्षं को नु जानीते कस्य किं वा भविष्यति ।**
**यद्वा प्रत्यक्षफलदं तदेवोत्तमदर्शनम् ॥ ८९ ॥**

**प्रत्यक्ष फल देने से कुलशास्त्र की प्रामाणिकता**—हे सिद्धयोगीश्वरि ! हे प्रिये ! लोक धर्म के विरुद्ध होते हुए भी प्रत्यक्ष फल देने के कारण कुलधर्म की प्रामाणिकता है । हे प्रिये ! सभी जीव प्रत्यक्ष फल चाहते हैं । उसकी उपलब्धि के बल से सभी कुतर्की मारे गए, क्योंकि परोक्ष को कौन जानता है कि किसका क्या होगा ? अतः जो प्रत्यक्ष फल देता है, वही उत्तम दर्शन है ॥ ८७-८९ ॥

**कुलधर्ममिमं ज्ञात्वा मुच्यन्ते सर्वमानवाः ।**
**इति मत्वा महेशानि मया कौलं विगर्हितम् ॥ ९० ॥**

**संसार की रक्षा हेतु कुलधर्म की निन्दा**—हे महेशानि ! इस कुलधर्म को जानकर सभी मनुष्य मुक्त हो जाते हैं । यह देखकर मैंने कौल धर्म की निन्दा की है ॥ ९० ॥

**त्वत्कारुण्यविहीनानां कुलज्ञानविरोधिनाम् ।**
**पशुनामनभिज्ञानां कुलधर्मो विगर्हितः॥ ९१ ॥**

वस्तुतः आपकी कृपा से रहित, कुलज्ञान के विरोधी एवं अज्ञानी पशुओं के लिए कुलधर्म की निन्दा की गई है ॥ ९१ ॥

**यस्य जन्मान्तरे पापकर्मबन्धोऽधिको भवेत् ।**
**न तस्य गुरुकारुण्यं कुलज्ञानञ्च जायते ॥ ९२ ॥**

**पापियों के लिए कुल ज्ञान नहीं है**—जिस मनुष्य के पिछले जन्मों के पाप-कर्मों के बन्धन अधिक हैं, उस पर गुरु की कृपा नहीं होती और न उसे कुल का ज्ञान मिलता है ॥ ९२ ॥

**यथान्धो नैव पश्यन्ति सूर्य सर्वप्रकाशकम् ।**
**तथा कुलं न जानन्ति तव मयाविमोहिताः ॥ ९३ ॥**

सबको प्रकाशित करने वाले सूर्य को जैसे अन्धे नहीं देख पाते, उसी प्रकार आपकी माया से मोहित मनुष्य कुल को नहीं जान पाते ॥ ९३ ॥

**शैववैष्णवसौरादि दर्शनान्यपि भक्तितः ।**
**भजन्ते मानवा नित्यं वृथायासफलानि च ॥ ९४ ॥**

शैव, वैष्णव एवं सौर आदि दर्शनों को मनुष्य भक्ति के साथ नित्यप्रति भजते हैं किन्तु उनका परिश्रम व्यर्थ जाता है और उन्हें वाञ्छित फल नहीं मिलता ॥ ९४ ॥

**वेदशास्त्रागमैः प्रोक्तं भोगमोक्षैकसाधनम् ।**
**मूढा निन्दन्ति हा हन्त मत्प्रियं तव दर्शनम् ॥ ९५ ॥**

वेद, शास्त्र एवं आगमों में भोग और मोक्ष का एक ही साधन आपका दर्शन बताया गया है क्योंकी वह मेरा प्रिय है । किन्तु मूढ़ लोग उसकी निन्दा करते हैं ॥ ९५ ॥

**भ्रामिता हि मया देवि पशवः शास्त्रकोटिषु।**
**कुलधर्म न जानन्ति वृथा ज्ञानाभिमानिनः ॥ ९६ ॥**
**पशुशास्त्राणि सर्वाणि मयैव कथितानि हि ।**
**मूर्त्यन्तरन्तु गत्वैव मोहनाय दुरात्मनाम् ॥ ९७ ॥**
**महापापवशान्नृणां तेषु वाञ्छाभिजायते ।**
**तेषाञ्च सदागतिर्नास्ति कल्पकोटिशतैरपि ॥ ९८ ॥**
**प्रेर्यमाणोऽपि पापात्मा कुले नैव प्रवर्त्तते।**
**वार्यमाणोऽपि पुण्यात्मा कुलमेवाभिलम्वते ॥ ९९ ॥**

**दुरात्माओं को भ्रमित करने के लिए ही पशुशास्त्रों का प्रचार—**

हे देवि ! पशुओं को मैंने करोड़ों शास्त्रों से भ्रमित कर रखा है । वे कुलधर्म को नहीं जानते और व्यर्थ के ज्ञान का अभिमान करते हैं । सभी पशु शास्त्रों को मैंने ही दूसरे स्वरूप को ग्रहण कर दुरात्माओं को मुग्ध करने के लिये कहा है । महापाप के वशीभूत होकर उनमें वाञ्छा उत्पन्न होती है । कोटि शतकल्पों में भी उन्हें सद्गति नहीं मिलती । पापात्मा लोग प्रेरित किये जाने पर भी कुल में नहीं आते और पुण्यात्मा लोग मना किये जाने पर भी कुल का ही अवलम्बन करते हैं ॥ ९६-९९ ॥

**कुलधर्मेण देवत्वं देवाः सम्प्रतिपेदिरे ।**
**मुनियोगीश्वराद्याश्च सुसिद्धिं परमां गताः ॥ १०० ॥**

**कुलधर्म से देवताओं को देवत्व-प्राप्ति**—कुलधर्म से देवगणों ने देवत्व को प्राप्त किया है। मुनि एवं योगीश्वरादि ने इसी से सिद्धि पाई है।

**विमर्श**—द्रष्टव्य ज्ञानार्णवतन्त्रम् ॥ १०० ॥

**पशुव्रतादिनिरताः सुलभा दाम्भिका भुवि।**
**ये कौलमेव सेवन्ते ते महान्तोऽति दुर्लभाः ॥ १०१ ॥**

**मिथ्या ज्ञानियों द्वारा कुलधर्म की विडम्बना**—पशुव्रतों आदि में लगे हुये दम्भी लोग पृथ्वी पर सरलता से मिल जाते हैं किन्तु जो कौल धर्म ( शक्ति उपासक ) की ही सेवा करते हैं, वे महापुरुष बड़ी कठिनाई से मिलते हैं ॥ १०१॥

**मानवा बहवः सन्ति मिथ्यातत्त्वार्थवेदिनः।**
**दुर्लभोऽयं महेशानि कुलतत्त्वविशारदः ॥ १०२ ॥**

मिथ्या तत्त्वार्थ को जानने वाले मनुष्य बहुत हैं किन्तु हे महेशानि ! इस कुलतत्त्व के ज्ञाता दुर्लभ हैं ॥ १०२ ॥

**यथा रोगातुराः केचिन्मानवाः कुलनायिके।**
**दिव्यौषधं न सेवन्ते महाव्याधिविनाशनम् ॥ १०३ ॥**
**तद्व्याधिवर्द्धनापथ्यं कुर्वन्ति हि कुभेषजम्।**
**तथैव जन्ममरणकृतं सांसारिकीं क्रियाम् ॥ १०४ ॥**
**समाचरन्ति सततं त्वत्कारुण्यविवर्जिताः।**
**न भजन्ते कुलं धर्मं भववन्धविमोचनम् ॥ १०५ ॥**

हे कुलनायिके ! जिस प्रकार रोग से व्याकुल कुछ मनुष्य महाव्याधि को नष्ट करने वाली दिव्य औषधि का सेवन नहीं करते, अपितु उस व्याधि को बढ़ाने वाले अपथ्य का ही सेवन करते हैं और दूषित औषधि का प्रयोग करते हैं, उसी प्रकार अज्ञ लोग जन्म से मृत्यु तक आपकी दया से रहित होकर सदा सांसारिक कर्मों में लगे रहते हैं और संसार के बन्धन से छुड़ाने वाले कुल धर्म का पालन नहीं करते ॥ १०३-१०५ ॥

**यथा चारण्यजातांस्तु मरीचादीन् वणिग्जनान्।**
**मोहतो मानवाः प्रीत्या याचन्ते कुलनायिके ॥ १०६ ॥**
**अनर्घ्याणि च रत्नानि न याचन्ते हि केचन।**
**तथैव पशुशास्त्राणि कर्मपाशफलानि च ॥ १०७ ॥**
**इति पृच्छन्ति मूर्खास्ते तव मायाविमोहिता।**
**कुलधर्मं न पृच्छन्ति भुक्तिमुक्तिफलप्रदम् ॥ १०८ ॥**

जिस प्रकार लोग व्यापारियों से जंगलों में उत्पन्न होने वाली मिर्च आदि की याचना मोहवश करते हैं और अमूल्य रत्नों को उनसे नहीं माँगते, उसी प्रकार हे कुलनायिके ! आपकी माया के वशीभूत होकर मूर्ख लोग पशुशास्त्रों और कर्म बन्धन में डालने वाले फलों के सम्बन्ध में पूछते रहते हैं और भुक्ति-मुक्ति रूपी फल को देने वाले कुलधर्म के सम्बन्ध में नहीं पूँछते ॥ १०६-१०८ ॥

**कस्तूरीं कर्दमधिया कर्पूरं लवणेच्छया ।**
**शार्करं शकराभ्रान्त्या मणिं काचमनीषया ॥ १०९॥**
**यथादृष्टं न मन्यन्ते करस्थमपि पामराः ।**
**तथा कौलं न जानन्ति त्वत्प्रसादविवर्जिताः ॥ ११० ॥**
**अहो मोहस्य माहात्म्यं त्वन्मायाजनितस्य च ।**
**किमज्ञानपि देवेशि मोहयेदमरानपि ॥ १११ ॥**

जिस प्रकार हाथ में रखी हुई कस्तूरी, कर्पूर और मणि को वह मूर्ख वास्तविक रूप में भ्रमवशात् नहीं पहचान पाता, क्योंकि उसके मन में क्रमशः कीचड़, नमक और कांच पाने की इच्छा रहती है, उसी प्रकार आपकी कृपा से रहित व्यक्ति 'कौल' साधक को पाकर भी उसे नहीं जान पाता । हे देवेशि ! आपकी माया से उत्पन्न मोह की महिमा अपार है, जो देवताओं को भी मुग्ध कर देती है तो फिर अज्ञानियों की क्या बात है ॥ १०९-१११ ॥

**विमर्श**—जिस प्रकार पामर व्यक्ति कीचड़ की बुद्धि से हाथ में रक्खी कस्तूरी को, नमक की इच्छा से कर्पूर को, कंकड़ की भ्रान्ति से चीनी को और शीशे की बुद्धि से मणि को अन्यथा समझ बैठता है उसी प्रकार आपकी कृपादृष्टि से रहित व्यक्ति कुलधर्म को नहीं जान पाता । इस प्रकार आपकी प्रसन्नता से रहित सारा जगत् मोह में पड़ा रहता है ॥ १०९-१११ ॥

**पेयं मद्यं पलं खाद्यं समालोक्य प्रियामुखम् ।**
**इत्येवाचरणं जाप्यं परिप्राप्यं परम्पदम् ॥ ११२ ॥**
**गुरुकारुण्यसंलभ्यमीदृशं कुलदर्शनम् ।**
**त्वद्भक्ता एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ ११३ ॥**

प्रियतमा ( = शक्ति ) का मुखदर्शन कर मद्य पान और मांस भोजनपूर्वक जप करने से परम पद प्राप्त होता है । गुरु की दया से ही यह कुलदर्शन मिलता है । आपके भक्त ही इस भुक्ति एवं मुक्ति दायक कुलदर्शन को जानते हैं, अन्य नहीं ॥ ११२-११३ ॥

**गुरूपदेशरहिता महान्त इति केचन ।**
**मोहयन्ति जनान् सर्वान् स्वयं पूर्वविमोहिताः ॥ ११४ ॥**

गुरूपदेश से रहित व्यक्ति अन्धकार में ही रहते हैं । ऐसे लोग स्वयं पहले से मुग्ध रहकर सभी लोगों को भ्रम में डालते हैं ॥ ११४ ॥

**दुराचारपराः केचिद्वाचयन्ति च पामराः।**
**कथंभूतो भवेत् स्वामी सेवकाः स्युस्तथाविधाः॥ ११५ ॥**

कितने ही पापी लोग दुराचारी होकर कहा करते हैं कि स्वामी और सेवक का सम्बन्ध कैसे सम्भव है ॥ ११५ ॥

**बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः।**
**स्वबुध्द्या कल्पयन्तीत्थं पारम्पर्यविवर्जिताः ॥ ११६ ॥**

ज्ञान का मिथ्या अभिमान करने वाले बहुत से जन अपनी बुद्धि से 'कौलिक धर्म' की परम्पराहीन कल्पना करते हैं ॥ ११६ ॥

**मद्यपानेन मनुजो यदि सिद्धं लभेत वै ।**
**मद्यपानरताः सर्वे सिद्धिं गच्छन्तु पामराः॥ ११७ ॥**

केवल ( लौकिक ) मद्यपान से यदि व्यक्ति को सिद्धि मिल जाती, तो सभी पापी भी मद्यप सिद्धि को प्राप्त कर जाते ॥ ११७ ॥

**मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत्।**
**लोके मासाशिनः सर्वे पुण्यभाजो भवन्ति हि॥ ११८ ॥**

मांस खाने से ही यदि सद्गति मिल जाती, तो संसार के सभी मांसाहारी पुण्यात्मा हो जाते हैं ॥ ११८ ॥

**शक्तिसम्भोगमात्रेण यदि मोक्षो भवेत वै।**
**सर्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवनात् ॥ ११९ ॥**

केवल शक्ति के सम्भोग से ही यदि मोक्ष हो जाता, तो सभी स्त्रीसङ्ग करने वाले जीव जन्तु मुक्त हो जाते ॥ ११९ ॥

**कुलमार्गो महादेवि न मया निन्दितः क्वचित्।**
**आचाररहिता येऽत्र निन्दितास्ते न चेतरे॥ १२० ॥**

हे महादेवि ! कुलमार्ग की मैंने कभी निन्दा नहीं की है । जो आचाररहित हैं, वे ही निन्दनीय हैं, अन्य नहीं ॥ १२० ॥

**अन्यथा कौलिके धर्मे आचारः कथितो मया।**
**विचरन्त्यन्था देवि मूढाः पण्डितमानिनः॥ १२१ ॥**

कौलिक धर्म की आचार पद्धति मैंने बताया है । हे देवि ! उसे छोड़कर भिन्न प्रकार से जो व्यवहार करते हैं, वे पण्डित अहम्मन्य मूर्ख हैं ॥ १२१ ॥

**कृपाणधारागमनात् व्याघ्रकण्ठावलम्बनात् ।**
**भुजङ्गधारणान्नूनमशक्यं कुलवर्त्तनम् ॥ १२२ ॥**

कुलमार्ग पर चलना खड्ग की धार पर चलने, बाघ की गरदन पकड़ने और सर्प को पहनने से भी अधिक कठिन है ॥ १२२ ॥

**वृथा पानन्तु देवेशि सुरापानं तदुच्यते ।**
**तत्महापातकं ज्ञेयं वेदादिषु निरूपितम् ॥ १२३ ॥**
**अनाघ्रेयमनालोक्यमस्पृश्यञ्चाप्यपेयकम् ।**
**मद्यं मांसं पशूनान्तु कौलिकानां महाफलम् ॥ १२४ ॥**

**वेदादि में वृथा-पान की निन्दा**—हे देवेशि ! वृथापान को सुरापान कहते हैं । वेदादि में उसे महापाप बताया गया है । पशु भाव के साधकों के लिये ( लौकिक ) मद्यमांस का सूंघना, देखना, छूना मना है किन्तु कौलिकों के लिये वे ( अलौकिक ) परम फलदायक हैं ॥ १२३-१२४ ॥

**अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु ।**
**द्वादशन्तु महामद्यं सर्वेषामुत्तमोत्तमम् ॥ १२५ ॥**
**सुरा वै मलमन्नानां पाप्मा तु मलमुच्यते ।**
**तस्माद्ब्राह्मणराजन्यौ वैश्य न सुरां पिबेत् ॥ १२६॥**

**द्विजातियों के लिये ग्यारह मद्य अग्राह्य**—द्विजातियों (ब्राह्मण, क्षत्रिय और वैश्य) के लिये ग्यारह प्रकार के मद्य अमेध्य होने के कारण अग्राह्य हैं । बारहवीं ( दिव्य ) महामद्य सभी में उत्तम है और द्विजातियों द्वारा ग्राह्य है । अन्नों का मल होने से 'सुरा' पाप को उत्पन्न करती है । अतः ब्राह्मण, क्षत्रिय और वैश्य को ( लौकिक ) सुरापान नहीं करना चाहिये ॥ १२५-१२६ ॥

**सुरादर्शनमात्रेण कुर्यात् सूर्यावलोकनम् ।**
**तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ १२७ ॥**
**आजानुभ्यां भवेन्मग्नो जले चोपवसेदहः ।**
**ऊर्द्ध्व नाभेस्त्रिरात्रन्तु मद्यस्य स्पर्शने विधिः॥ १२८ ॥**
**सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत् ।**
**मुखे तया विनिर्दग्धे ततः शुद्धिमवाप्नुयात् ॥ १२९ ॥**
**मद्यस्पर्शादिदोषस्य प्रायश्चित्तविधिः स्मृतः ।**

**सुरा के देखने आदि का प्रायश्चित्त**—( लौकिक ) सुरा के देखने मात्र से दोष होता है, उसे दूर करने के लिये सूर्य का दर्शन करे । उसे सूँघने से जो दोष होता है, उसे दूर करने के लिये तीन बार प्राणायाम करे और घुटने तक जल में प्रवेश कर दिन भर उपवास करे । मद्य को छू लेने पर प्रायश्चित्त की विधि यह है कि तीन रात तक नाभि के ऊपर जल में प्रवेश कर दिन में उपवास करे। जानबूझकर सुरापान करने पर जिह्वा को दग्ध करने से मुख की शुद्धि होती है । इस प्रकार मद्य के स्पर्शादि दोष की निवृत्ति के लिए ये प्रायश्चित्त कहे गए हैं ॥ १२७-१३० ॥

**अविधानेन यो हन्यादात्मार्थं प्राणिनः प्रिये ॥ १३० ॥**
**निवसेन्नरके घोरे दिनानि पशुरोमभिः ।**
**स मृतोऽपि दुराचारस्तिर्यग्योनिषु जायते ॥ १३१ ॥**

**वृथा हिंसा करने में दोष**—हे प्रिये ! अपने स्वार्थ के लिये जो प्राणियों की विधि रहित हिंसा करता है, वह उस पशु के शरीर में जितने रोएँ होते हैं, उतने दिनों तक घोर नरक में निवास करता है और मरने पर वह दुराचारी तिर्यग् योनि में जन्म पाता है ॥ १३०-१३१ ॥

**अनुमन्ता विश्वसिता निहन्ता क्रयविक्रयी ।**
**संस्कर्ता चोपहर्त्ता च खादिताऽष्टौ च घातकाः ॥ १३२ ॥**

**आठ प्रकार के पशु-हिंसक**—१. पशु का वध के लिए अनुमान करने वाला, २. पशु को विश्वास में लाने वाला, ३. पशु का वध करने वाला, ४. पशु को खरीदने वाला, ५. पशु को बेचने वाला, ६. पशु का संस्कार करने वाला, ७. पशु को लाने वाला, और ८. पशु मांस को खाने वाला—ये आठ प्रकार के 'घातक' कहे गये हैं ॥ १३२ ॥

**धनैर्विक्रयिको हन्ति खादिता चोपभोगतः ।**
**घातको वध बन्धाभ्यां इत्येष त्रिविधो वधः॥ १३३ ॥**

**तीन प्रकार के वध**—धन के लिए पशु बेचना, मांस खाकर उपभोग करना और बँधे हुए पशु का वध करना—ये तीन प्रकार के 'वध' हैं ॥१३३॥

**मांससन्दर्शनं कृत्वा सुरादर्शनवच्चरेत् ।**
**तस्मादविधिना मांसं मद्यं न सेवते क्वचित्॥ १३४ ॥**

**विधिपूर्वक ही पञ्चमकार सेवनीय**—मांस को देखने से सुरादर्शन के समान ही प्रायश्चित्त करना चाहिए । क्योंकि मांस एवं मद्य का सेवन कभी भी अविधिपूर्वक न करे ॥ १३४ ॥

**विधिना सेव्यते देवि तरसा त्वं प्रसीदसि ।**
**नाशयत्यपरिज्ञानात् सत्यमेव वरानने ॥ १३५ ॥**

विधिपूर्वक सेवन करने से हे देवि! आप शीघ्र प्रसन्न होती हैं । यथा विधि सेवन न करने से हे वीरवन्दिते! वह आत्मज्ञान को नष्ट करता है ॥१३५।

**तृणं वाप्यविधानेन छेदयेन्न कदाचन।**
**विधिना गां द्विजं वापि हत्या पापैर्न लिप्यते ॥ १३६ ॥**

बिना विधि-विधान के तिनके को भी नहीं तोड़ना चाहिए । विधिपूर्वक बैल या द्विज का भी वध करने से पाप नहीं होता ॥ १३६ ॥

**बहुनात्र किमुक्तेन सारमेकं शृणु प्रिये ।**
**जीवन्मुक्तिसुखोपायं कुलशास्त्रेषु गोपितम् ॥ १३७ ॥**
**यन्मुमुक्षोः फलं देवि कनकस्येव सौरभम् ।**
**कुलज्ञेऽप्यूर्ध्वविख्याते ज्ञानं तत्तदनुत्तमम् ॥ १३८ ॥**

**कुल-धर्म के अनुकूल श्रुति के प्रमाण**—हे प्रिये ! अधिक कहने से क्या लाभ? एक तत्त्व की बात सुनिए—हे महादेवि ! जीवन्मुक्ति का सरल उपाय कुलशास्त्रों में छिपा हुआ है, जो सोने में सुगन्ध के समान मोक्ष के अभिलाषियों के लिए उत्तम फलरूप है । कुल के ज्ञाताओं में भी जो ऊर्ध्वाम्नाय से प्रसिद्ध हैं, उनका ज्ञान श्रेष्ठ है ॥ १३७-१३८ ॥

**कुलशास्त्राणि सर्वाणि मयैवोक्तानि पार्वति ।**
**प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः ॥ १३९ ॥**

हे पार्वति ! सभी कुल-शास्त्रों को मैंने ही कहा है । अतः वे स्वतः प्रमाण हैं । इसमें सन्देह नहीं है अतः तर्क-वितर्क द्वारा साधक को उनका खण्डन नहीं करना चाहिए ॥ १३९ ॥

**देवताभ्यः पितृभ्यश्च मधु वाता ऋतायते ।**
**स्वादिष्ठया मदिष्ठया क्षीरं सर्पिर्मधूदकम् ॥ १४० ॥**

देवताओं और पितरों के लिए समर्पित किया जाने वाला मद्य अमृत-स्वरूप हो जाता है । यह उसी प्रकार अत्यन्त स्वादिष्ट और सन्तुष्टी प्रदान करने वाला होता है जैसे घृत, मधु और चीनी मिले दूध की खीर अत्यन्त स्वादिष्ट होती है ॥ १४० ॥

**विमर्श**—'मधु वाता ऋतायते' और 'स्वाधिष्ठया मदिष्ठया' आदि दो यजुर्मन्त्र हैं जो तर्पण में प्रयुक्त होते हैं ।

**हिरण्यपावाः खादिश्च अबध्नन् पुरुषं पशुम् ।**
**दीक्षामुपेयादित्याद्याः प्रमाणं श्रुतयः प्रिये ॥ १४१ ॥**

पुं-पशु की बलि देकर उसके मांस को विधिवत् स्वर्णपात्र में रखकर वैदिक रीति से प्रसादरूप में उसे ग्रहण करने से अविलम्ब ही सर्वपापों का नाश होकर तत्त्वज्ञान की उपलब्धि होती है ॥ १४१ ॥

**इत्येतत् कथितं किञ्चित् कुलमाहात्म्यमम्बिके ।**
**समासेन कुलशानि किं भूयः श्रोतुमिच्छसि ॥ १४२ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे कुलमाहात्म्य-कथनं नाम द्वितीयोल्लासः ॥ २ ॥**



हे अम्बिके ! कुल का यह कुछ माहात्म्य मैंने संक्षेप में यहाँ कहा है । हे कुलेशानि ! आप पुनः अब क्या सुनना चाहती हैं ? ॥ १४२ ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में कुलमाहात्म्य कथन नामक द्वितीय उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ २ ॥**



# अथ तृतीयोल्लासः

श्रीदेव्युवाच

कुलेश श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमम् ।
ऊर्ध्वाम्नायञ्च तन्मन्त्रं माहात्म्यं वद मे प्रभो ॥ १ ॥

**ऊर्ध्वाम्नाय और प्रासादपरामन्त्र की महिमा एवं ऊर्ध्वाम्नाय सम्बन्धी प्रश्न**—श्री देवी ने कहा—हे कुल के ईश, हे प्रभो ! मैं सब धर्मों में उत्तमोत्तम ऊर्ध्वाम्नाय, उसका मन्त्र और उसकी महिमा सुनना चाहती हूँ । अतः आप उसे मुझे बताइये ॥ १ ॥

श्रीईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण देवता सुप्रसीदति ॥ २ ॥

**ऊर्ध्वाम्नाय आदि की अति गोपनीयता**—ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने पूछा है, उसे मैं बताऊँगा। उसके सुनने मात्र से देवता अत्यन्त प्रसन्न होते हैं ॥ २ ॥

न कदाचिन्मया प्रोक्तमितः पूर्वं कुलेश्वरि।
कथयामि तव स्नेहादूर्ध्वाम्नायं शृणु प्रिये ॥ ३ ॥
वेदशास्त्रपुराणानि प्रकाश्यानि कुलेश्वरि।
शैवशाक्तागमाः सर्वे रहस्याः परिकीर्त्तिताः ॥ ४ ॥
रहस्यातिरहस्यानि कुलशास्त्राणि पार्वति ।

हे कुलेश्वरि ! मैंने इसे पहले कभी नहीं बताया है । आपके स्नेह से ऊर्ध्वाम्नाय को बताता हूँ, हे प्रिये आप सुनिए । हे कुलेश्वरि ! वेद, शास्त्र एवं पुराण प्रकट करने योग्य हैं किन्तु शैव और शाक्त आगम सभी गुप्त रूप से कहे गये हैं । हे पार्वति ! कुल शास्त्र तो रहस्य से भी रहस्यपूर्ण है ॥ ३-५॥

रहस्यातिरहस्यानां रहस्यमिदमम्बिके ॥ ५ ॥
ऊद्र्ध्वाम्नायस्य तत्त्वं हि पूर्णब्रह्मात्मकं परम् ।
सुगोपितं मया यत्नादिदानीन्तु प्रकाश्यते ॥ ६ ॥

**ऊर्ध्वाम्नाय तत्त्व पूर्णब्रह्मात्मक**—हे अम्बिके ! ऊर्ध्वाम्नाय का यह तत्त्व तो रहस्यों में भी अति रहस्यपूर्ण है क्योंकि यह पूर्णब्रह्मात्मक परम तत्त्व है। इसे मैंने यत्नपूर्वक गुप्त रखा है किन्तु अब प्रकाशित कर रहा हूँ ॥ ५-६ ॥

**मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः ।**
**पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ।**
**ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्त्तिताः ॥ ७ ॥**

**शिव के पञ्चमुखों से पञ्च आम्नायों की उत्पत्ति**—मैंने अपने पाँच मुखों से—१. पूर्वाम्नाय, २. पश्चिमाम्नाय, ३. दक्षिणाम्नाय, ४. उत्तराम्नाय और ५. ऊर्ध्वाम्नाय—ये पाँच आम्नाय कहे हैं । ये पाँचों मोक्षमार्ग के प्रवर्तक शास्त्र हैं ॥ ७ ॥

**आम्नाया बहवः सन्ति नोर्ध्वाम्नायेन ते समाः ।**
**सत्यमेतद्वरारोहे नात्र कार्या विचारणा ॥ ८ ॥**

**ऊर्ध्वाम्नाय की श्रेष्ठता**—हे वरारोहे ! आम्नाय बहुत से हैं किन्तु वे ऊर्ध्वाम्नाय के समकक्ष नहीं हैं, यह सत्य है । इसमें विचार करने की कोई आवश्यकता नहीं है ॥ ८ ॥

**आम्नाया बहवो गुप्तश्चतुराम्नायभेदजाः ।**
**अस्मिंस्तन्त्रे समाख्याताः पूर्वं ते कुलनायिके ॥ ९ ॥**

हे कुलनायिके ! चारों आम्नायों से बहुत से गुप्त आम्नायों की उत्पत्ति हुई है । इस तन्त्र में मैं प्रथमतः आपके समक्ष प्रतिपादित करता हूँ ॥ ९ ॥

**चतुराम्नाय वेत्तारो बहवः सन्ति कामिनि ।**
**ऊर्ध्वाम्नायस्य तत्त्वज्ञा विरला वीरवन्दिते ॥ १० ॥**

हे कामिनी ! चार आम्नायों के जानने वाले तो बहुत हैं, किन्तु हे वीरवन्दिते ! ऊर्ध्वाम्नाय के तत्त्व को जानने वाले बहुत कम ही लोग हैं ॥१०॥

**यावन्तः पांसवो भूमेस्तावन्तः समुदीरिताः ।**
**एकैकाम्नायजा मन्त्रा भुक्तिमुक्तिफलप्रदाः ॥ ११ ॥**
**उपमन्त्राश्च तावन्तः सारदाः समुदीरिताः ।**
**मयैव कथितास्ते तु लोकानुग्रहकाङ्क्षया ॥ १२ ॥**

**देवता शक्ति और शिव के अंश से आम्नायों की उत्पत्ति**—

प्रत्येक आम्नाय के असंख्य मन्त्र कहे गए हैं, जो भुक्ति और मुक्ति के देने वाले हैं तथा पृथ्वी पर जितने धूल के कण हैं इसी प्रकार प्रत्येक आम्नाय

के असंख्य उपमन्त्र भी कहे गए हैं । संसार के कल्याण की इच्छा से मैंने ही उन सब को कहा है ॥ ११-१२ ॥

**सर्वेषामपि मन्त्राणां देवतास्तत्फलप्रदाः ।**
**आवयोरंशसम्भूताः समुद्दिष्टाः शुचिस्मिते ॥ १३ ॥**

उन सभी मन्त्रों के देवता हम दोनों के अंशों से सम्भूत हैं और हे सुन्दर स्मित हास वाली देवि ! वे निर्दिष्ट फलों को देते हैं ॥ १३ ॥

**सर्वमन्त्रानहं वेद्मि नान्यो जानाति कश्चन ।**
**मत्प्रसादेन यः कश्चिद्वेत्ति मानवकोटिषु ॥ १४ ॥**

सभी मन्त्रों को केवल मैं जानता हूँ, अन्य कोई नहीं जानता । मेरी कृपा से ही करोड़ों मनुष्यों में से कोई एक कुछ मन्त्रों को जान पाता है ॥ १४ ॥

**एकाम्नायञ्च यो वेत्ति स मुक्तो नात्र संशयः ।**
**किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवो भवेत् ॥ १५ ॥**

**आम्नाय को जानने का फल**—केवल एक आम्नाय को जो जान लेता है, वह मुक्त हो जाता है । इसमें सन्देह नहीं । फिर चार आम्नायों के ज्ञाता की क्या बात है, वह तो साक्षात् शिव ही हो जाता है ॥ १५ ॥

**चतुराम्नायविज्ञानादूर्ध्वाम्नायः परः प्रिये ।**
**तस्मात्तदेव जानीयाद् यदीच्छेत् सिद्धिमात्मनः ॥ १६ ॥**

हे प्रिये ! चार आम्नायों के विशेष ज्ञान से भी श्रेष्ठ ऊर्ध्वाम्नाय है । अतएव यदि आत्मसिद्धि की इच्छा है तो उसी को जानना चाहिये ॥ १६ ॥

**ऊर्ध्वत्वात् सर्वधर्माणामूर्ध्वाम्नायः प्रशस्यते ।**
**ऊर्ध्वं नयत्यधःस्थञ्च ऊर्ध्वाम्नाय इतीरितः ॥ १७ ॥**

**ऊर्ध्वाम्नाय शब्द का अर्थ**—सब धर्मों से ऊर्ध्व होने के कारण ऊर्ध्वाम्नाय श्रेष्ठ है । निम्न स्थित व्यक्ति को ऊर्ध्वगामी करने से यह 'ऊर्ध्वाम्नाय' कहलाता है ॥ १७ ॥

**ऊर्ध्वतत्त्वात् कुलेशानि ध्वस्तसंसारसागरात् ।**
**ऊर्ध्वलोकैकसेव्यत्वादूर्ध्वाम्नाय इति स्मृतः ॥ १८ ॥**

हे कुलेशानि ! इसका तत्त्व उच्च स्तर का है, संसारसागर ( के मोह ) को यह नष्ट करता है और ऊर्ध्व लोक इसकी सेवा करते हैं । अतएव यह 'ऊर्ध्वाम्नाय' कहलाता है ॥ १८ ॥

तस्माद्देवेशि जानीहि साक्षान्मोक्षैकसाधनम् ।
सर्वाम्नायाधिकफलमूर्ध्वाम्नायं परात् परम् ॥ १९ ॥

**दृष्टान्त द्वारा ऊर्ध्वाम्नाय की श्रेष्ठता**—हे देवेशि ! ऊर्ध्वाम्नाय को मोक्ष का एकमात्र साधन जानना चाहिए । यह सब आम्नायों से अधिक फल देने वाला और श्रेष्ठ में भी श्रेष्ठतम है ॥ १९ ॥

सर्वलोकेषु सर्वेभ्यो ह्यहं पूज्यो यथा प्रिये ।
अम्नायेषु च सर्वेषु ऊर्ध्वाम्नायस्तथा शिवे ॥ २० ॥

हे प्रिये ! जिस प्रकार सारे लोकों में सबसे अधिक पूज्य मैं हूँ, उसी प्रकार हे शिवे ! सभी आम्नायों में ऊर्ध्वाम्नाय श्रेष्ठ है ॥ २० ॥

देवतानां यथा विष्णुर्ज्योतिषां भास्करो यथा ।
तीर्थानान्तु यथा काशी स्वर्नदी सरितां यथा ॥ २१ ॥
पर्वतानां यथा मेरुस्तरूणां चन्दनं यथा ।
अश्वमेधः क्रतूनाञ्च पाषाणानां यथा मणिः ॥ २२ ॥
यथा रसानां माधुर्यं धातूनां काञ्चनं यथा ।
चतुष्पदां यथा धेनुर्यथा हंसस्तु पक्षिणाम् ॥ २३ ॥
आश्रमाणां यथा भिक्षुर्वर्णानां ब्राह्मणो यथा ।
मनुष्याणां यथा राजाऽवयवानां यथा शिरः॥ २४ ॥
आमोदानाञ्च कस्तूरी यथा काञ्चीपुरी पुराम् ।
तथैव सर्वधर्माणामूर्ध्वाम्नायोऽधिकः प्रिये ॥ २५ ॥

देवों में जैसे विष्णु, ज्योतियों ( नक्षत्रों ) में जैसे सूर्य, तीर्थों में जैसे काशी, नदियों में जैसे गङ्गा, पर्वतों में जैसे मेरु, वृक्षों में जैसे चन्दन, यज्ञों में जैसे अश्वमेध, पत्थरों में जैसे मणि, रसों में जैसे मधुरता, धातुओं में जैसे स्वर्ण, पशुओं में जैसे गाय, पक्षियों में जैसे हंस, आश्रमों में जैसे भिक्षु, वर्णों में जैसे ब्राह्मण, मनुष्यों में जैसे राजा, अङ्गों में जैसे शिर, सुगन्धियों में जैसे कस्तूरी और पुरियों में जैसे काञ्ची श्रेष्ठ है, वैसे ही हे प्रिये ! सब धर्मों में ऊर्ध्वाम्नाय की श्रेष्ठता है ॥ २१-२५ ॥

नानाजन्मार्जितापारपुण्यकर्मफलोदयात् ।
ऊर्ध्वाम्नायं विजानीयान्नान्यथा वीरवन्दिते ॥ २६ ॥

**ऊर्ध्वाम्नाय के ज्ञान का कारण**—हे वीरवन्दिते ! नाना जन्मों में उपार्जित अपार पुण्यकर्मों का फल उदय होने से ऊर्ध्वाम्नाय का ज्ञान मिलता है, अन्यथा नहीं ॥ २६ ॥

धन्यो मनुष्यलक्षेषु जानाति कुलदर्शनम् ।
तेषां लक्षेषु यः कश्चिदूर्ध्वाम्नायं प्रवेत्ति च ॥ २७ ॥

लाखों मनुष्यों में वह व्यक्ति धन्य है, जो कुलदर्शन अर्थात् शाक्तदर्शन को जानता है । उन लाखों में कोई ही ऊर्ध्वाम्नाय को जानता है ॥ २७ ॥

न वेदैर्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ।
न यज्ञैर्न तपोभिर्वा न तीर्थव्रतकोटिभिः ॥ २८ ॥
नान्यैरुपायैर्देवेशि मन्त्रौषधिपुरःसरैः ।
आम्नायो ज्ञायते चोदूर्ध्वः श्रीमद्गुरुमुखं विना ॥ २९ ॥

**ऊर्ध्वाम्नाय गुरुमुख से ही ज्ञेय**—श्रीमद् गुरुदेव के मुख के बिना ऊर्ध्वाम्नाय का ज्ञान नहीं हो सकता । न तो वेदों, आगमों, शास्त्रों, पुराणों के विस्तृत अध्ययन से, न करोडों यज्ञों, तपों, तीर्थों, व्रतों से और हे देवेशि ! न मन्त्रौषधि आदि अन्य उपायों से ऊर्ध्वाम्नाय का ज्ञान मिलता है ॥ २८-२९ ॥

तमेवान्वेषयेत्तत्र सर्वज्ञं करुणानिधिम् ।
सर्वलक्षणसम्पन्नं ऊर्ध्वाम्नायार्थकोविदम् ।
तस्माद्देवेशि जानीयादूर्ध्वाम्नायं कुलेश्वरि ॥ ३०॥

अत: ऊर्ध्वाम्नाय के अर्थ को जानने वाले उन्हीं दयालु, सर्वज्ञ एवं सर्वगुणसम्पन्न गुरुदेव की खोज करनी चाहिये और हे देवेशि ! हे कुलेश्वरि ! उनसे ऊर्ध्वाम्नाय को जानना चाहिये ॥ ३० ॥

आम्नायं यो नरो देवि विजानाति च तत्त्वतः ।
लभते काङ्क्षितां सिद्धिं सत्यं सत्यं वरानने ॥ ३१ ॥

**ऊर्ध्वाम्नाय परायण की सर्व जीवन्मुक्ति और कृतार्थता**—हे देवि ! जो मनुष्य ऊर्ध्वाम्नाय के तत्त्व को जान लेता है, वह अभीष्ट सिद्धि को प्राप्त करता है, हे वरानने ! यह सर्वथा सत्य है ॥ ३१ ॥

ऊर्ध्वाम्नायं विजानाति यः सम्यक् श्रीगुरोर्मुखात् ।
शास्त्रमार्गेण स नरो जीवन्मुक्तो न संशयः ॥ ३२ ॥

श्री गुरु के मुख से जो उचित प्रकार से ऊर्ध्वाम्नाय को अच्छी तरह जानता है, वह शास्त्रोक्त मार्ग से जीवन्मुक्त हो जाता है, इसमें सन्देह नहीं ॥ ३२ ॥

आम्नायमीदृशं देवि विजानाति च तत्त्वतः ।
स वन्द्यः सद्गुरुः सोऽर्च्यः स दैवज्ञः स मान्त्रिकः ।
स सेव्यः स च संस्तुत्यः स द्रष्टव्यः स सात्त्विकः ॥ ३३ ॥

स व्रती स तपस्वी च सोऽनुष्ठाता स पूजकः ।
स वेदागमशास्त्रादिसर्वविद्याविशारदः ॥ ३४ ॥
स आचार्यः स मतिमान् स यतिः स च कौलिकः ।
स यज्वा स च पूतात्मा स जापी स च साधकः ॥ ३५ ॥
स योगी स कृतार्थस्तु स वीरः स च उत्तमः ।
स पुण्यात्मा स सर्वज्ञः स मुक्तः स शिवः प्रिये ॥ ३६ ॥

**ऊर्ध्वाम्नाय का माहात्म्य**—हे देवि ! इस ऊर्ध्वाम्नाय को जो तत्त्वतः जानता है वह सबका वन्दनीय, सद्गुरु, पूजनीय, दैवज्ञ, मान्त्रिक, सेवनीय, स्तुत्य, दर्शनीय, सात्त्विक, व्रती, तपस्वी, अनुष्ठाता, पूजक, वेदागम शास्त्रादि सब विद्याओं में विशारद, आचार्य, बुद्धिमान् यति, कौलिक, याज्ञिक, पूतात्मा, ( मन्त्र ) जापी, साधक, योगी, उत्तम, वीर, पुण्यात्मा, सर्वज्ञ और सब कुछ होकर कृतार्थ हो जाता है और हे प्रिये ! वह मुक्त होकर शिवस्वरूप होता है ॥ ३३-३६ ॥

तत्कुलं पावनं देवि धन्या तज्जननी स्मृता ।
तत्पिता च कृतार्थः स्यान्मुक्तास्तत्पितरः प्रिये ।
पुण्यास्तद्वंशजाः सर्वे पूतास्तन्मित्रबान्धवाः ॥ ३७ ॥

हे देवि ! उसका वंश पवित्र हो जाता है, उसकी माता धन्य ( होकर पुण्य स्मरणीया ) हो जाती है । उसका पिता कृतार्थ होता है और हे प्रिये ! उसके पितरों की मुक्ति हो जाती है । उसके वंशज पुण्यवान् होते हैं और उसके सभी मित्र, बन्धु बान्धव पवित्र हो जाते हैं ॥ ३७ ॥

बहुनेह किमुक्तेन चोर्ध्वाम्नायपरस्य च ।
स्मरणं कीर्त्तनं वापि दर्शनं वन्दनं तथा ।
सम्भाषणञ्च कुरुते राजसूयाधिकं फलम् ॥ ३८ ॥

**ऊर्ध्वाम्नाय परायण की प्रशंसा**—बहुत कहने से क्या लाभ ? ऊर्ध्वाम्नाय परायण साधक को स्मरण, कीर्तन, अभिवन्दन, सम्भाषण करने से राजसूय से भी अधिक फल मिलता है ॥ ३८ ॥

स यत्र वसते देवि तत्र श्रीर्विजयो भवेत् ।
अनामयं सुभिक्षञ्च सुवृष्टिर्निरुपद्रवम् ॥ ३९ ॥

हे देवि ! जहाँ वह साधक निवास करता है, वहाँ लक्ष्मी और विजय होती है । उस स्थान में नीरोगता, अन्नादि की बहुलता, सुन्दर वर्षा और सदा शान्ति रहती है ॥ ३९ ॥

**तस्माद् गुरुप्रसादेन ऊर्ध्वाम्नायं नरोत्तमः।**
**यो वेत्ति तत्त्वतो देवि स मे प्रियतमो भवेत् ॥ ४० ॥**

अतः गुरु की प्रसन्नता से जो उत्तम मनुष्य ऊर्ध्वाम्नाय को वास्तव में तत्त्वतः जान लेता है, हे देवि ! वह मुझे बहुत ही प्रिय होता है ॥ ४० ॥

**पूर्वाम्नायः सृष्टिरूपः स्थितिरूपश्च दक्षिणः।**
**संहारः पश्चिमो देवि उत्तरोऽनुग्रहो भवेत् ॥ ४१ ॥**

**आम्नायों के सृष्टिरूपादि भेद**—हे देवि ! पूर्वाम्नाय सृष्टि रूप है और दक्षिणाम्नाय स्थिति रूप; पश्चिमाम्नाय संहार रूप है और उत्तराम्नाय ( श्रीमतोत्तर ) अनुग्रह रूप है ॥ ४१ ॥

**मन्त्रयोगं विदुः पूर्वं भक्तियोगञ्च दक्षिणम् ।**
**पश्चिमं कर्मयोगञ्च ज्ञानयोगं तथोत्तरम् ॥ ४२ ॥**

दूसरे प्रकार से पूर्वाम्नाय मन्त्रयोग है और दक्षिणाम्नाय भक्तियोग है । पश्चिमाम्नाय कर्मयोग है और उत्तराम्नाय ज्ञानयोग है ॥ ४२ ॥

**पूर्वाम्नायस्य सङ्केताश्चतुर्विंशतिरीरिताः ।**
**दक्षिणाम्नायसङ्केताः पञ्चविंशतिरीरिताः ॥ ४३ ॥**
**पश्चिमाम्नायसङ्केताः द्वात्रिंशत् समुदाहृताः।**
**विदुः षट्त्रिंशदाम्नाये सङ्केताः श्रीमदुत्तरे ॥ ४४ ॥**

**आम्नायों के सङ्केत भेद**—पूर्वाम्नाय के चौबीस सङ्केत कहे गये हैं । दक्षिणाम्नाय के सङ्केत पचीस कहे हैं । पश्चिमाम्नाय के सङ्केत बत्तीस हैं और श्रीमद् उत्तराम्नाय में छत्तीस सङ्केत कहे गये हैं ॥ ४३-४४ ॥

**ऊद्ध्वाम्नायस्य चैतानि न सन्ति कुलनायिके ।**
**साक्षाच्छिवस्वरूपत्वान्न किञ्चित् कर्म विद्यते ॥ ४५ ॥**

**ऊर्ध्वाम्नाय में सङ्केतों का अभाव**—हे कुलनायिके ! किन्तु ये ऊर्ध्वाम्नाय में नहीं हैं । साक्षात् शिवस्वरूप होने से इस आम्नाय में कुछ भी कर्म शेष नहीं रहता ॥ ४५ ॥

**ऊर्ध्वाम्नायस्य माहात्म्यमहं वेद्मि न चापरः ।**
**मत्स्नेहात्त्वञ्च जानासि सत्यमेतद्वरानने ॥ ४६ ॥**
**ऊर्ध्वाम्नायस्य माहात्म्यमिति ते कथितं मया ।**

ऊर्ध्वाम्नाय का माहात्म्य मैं जानता हूँ, अन्य नहीं और हे वराननें ! मेरे

स्नेह से आप जानती हैं, यह सत्य है । ऊर्ध्वाम्नाय की यह कुछ महिमा मैंने यहाँ आपसे कही है ॥ ४६-४७ ॥

**समासेन कुलेशानि मन्त्रमाहात्म्यमुच्यते ॥ ४७ ॥**
**इतः पूर्वं मया नोक्तं यस्य कस्यापि पार्वति ।**
**तद्वदामि तव स्नेहाच्छृणु मत्प्राणवल्लभे ॥ ४८ ॥**

**शिव शक्त्यात्मक प्रासाद मन्त्र की महिमा**—हे कुलेशानि ! अब उत्तम मन्त्र का माहात्म्य संक्षेप में कहता हूँ । हे पार्वति ! मैंने इससे पहले कभी किसी से इसे नहीं कहा है । अतः हे प्राणवल्लभे ! मैं आपके स्नेहवश इसे कहता हूँ, इसे आप मुझसे सुनिए ॥ ४७-४८ ॥

**श्रीप्रासादपरामन्त्रमूर्ध्वाम्नायमधिष्ठितम् ।**
**आवयोः परमाकारं यो वेत्ति स स्वयं शिवः ॥ ४९ ॥**

ऊर्ध्वाम्नाय में 'श्रीप्रासादपरा' मन्त्र अधिष्ठित है, जो हम दोनों का परम स्वरूप है । अतः उसे जो जानता है, वह स्वयं शिव हो जाता है ॥ ४९ ॥

**शिवादिक्रिमिपर्यन्तं प्राणिनां प्राणवर्त्मना ।**
**निश्वासोच्छ्वासरूपेण मन्त्रोऽयं वर्त्तते प्रिये॥ ५० ॥**

**श्रीप्रासादपरा मन्त्र में सारा जगत्**—हे प्रिये ! शिव से कृमि तक सभी प्राणियों में प्राणवायु के मार्ग से निःश्वास उच्छवास के रूप में यह मन्त्र विद्यमान रहता है ॥ ५० ॥

**अनिलेन विना मेघो यथाकाशे न वेष्टते ।**
**पराप्रसादमन्त्रेण विना लोकस्तथा प्रिये ॥ ५१ ॥**

जैसे हवा के बिना आकाश में बादल नहीं ठहरते, वैसे ही 'श्रीपराप्रासादमन्त्र' के बिना यह लोक नहीं ठहर सकता ॥ ५१ ॥

**पराप्रासादमन्त्रेण स्यूतमेतच्चराचरम् ।**
**अभिन्नं तत्त्वतो देवि तालवृन्ते यथानिलः ॥ ५२ ॥**
**बीजेऽङ्कुरस्तिले तैलमग्नावुष्णं रवौ प्रभा ।**
**चन्द्रे ज्योत्स्नाऽनलः काष्ठे पुष्पे गन्धो जले द्रवः ॥ ५३ ॥**
**शब्दे चार्थः शिवे शक्तिः क्षीरे सर्पिः फले रुचिः।**
**शर्करायाञ्च माधुर्यं घनसारे च शीतलम् ॥ ५४ ॥**
**निग्रहानुग्रहो मन्त्रे प्रतिमायाञ्च देवता ।**
**दर्पणे प्रतिबिम्बञ्च समीरे चलनं यथा ।**
**पराप्रसादमन्त्रेऽपि प्रपञ्चोऽयं तथा स्थितः ॥ ५५ ॥**

'पराप्रासादमन्त्र' से यह चराचर जगत् व्याप्त है । हे देवि ! तत्त्वतः ये दोनों अभिन्न हैं, उसी प्रकार जैसे तालवृन्त में वायु, बीज में अंकुर, तिल में तैल, अग्नि में ऊष्णता, सूर्य में प्रकाश, चन्द्रमा में चाँदनी, लकड़ी में अग्नि, पुष्प में गन्ध, जल में द्रवता, शब्द में अर्थ, शिव में शक्ति, दूध में घी, फल में स्वाद, शर्करा में मिठास, चन्दन में ठण्डक, मन्त्र में निग्रह और अनुग्रह, मूर्ति में देवता, दर्पण में प्रतिबिम्ब और वायु में गति के समान विद्यमान है । प्रासादमन्त्र में यह प्रपञ्च भी उसी प्रकार स्थित है ।। ५२-५५ ।।

**वटबीजे यथा वृक्षः सूक्ष्मरूपेण तिष्ठति ।**
**पराप्रासादमन्त्रेऽस्मिन् ब्रह्माण्डोऽपि तथा स्थितः ।। ५६ ।।**

जिस प्रकार वटबीज में सूक्ष्म रूप से वृक्ष निहित है । इस पराप्रासादमन्त्र में ब्रह्माण्ड भी उसी प्रकार स्थित है ।। ५६ ।।

**सुपक्वेषु पदार्थेषु सुरसेषु कुलेश्वरि ।**
**लवणेन विना स्वादु यथा भोक्तुर्न जायते ।। ५७ ।।**
**पराप्रासादमन्त्रेण ये वा मन्त्रा न सङ्गताः ।**
**ते फलं न प्रयच्छन्ति मन्त्रं शक्तिविवर्जिताः ।। ५८ ।।**

**प्रासादमन्त्र से असङ्गत मन्त्र निष्फल**—हे कुलेश्वरि ! जिस प्रकार अच्छे पके हुये, रसीले पदार्थों में नमक के बिना खाने वाले को स्वाद नहीं मिलता, उसी प्रकार जो मन्त्र पराप्रासादमन्त्र से सङ्गत नहीं हैं, वे मन्त्रशक्ति से रहित होकर फल नहीं देते ।। ५७-५८ ।।

**श्रीप्रासादपरामन्त्रो गोपनीयः प्रयत्नतः ।। ५९ ।।**

श्रीप्रासादपरामन्त्र को प्रयत्न करके गुप्त रखना चाहिये ।। ५९ ।।

**विचार्याहं पुराणार्थान् दर्शनाम्नायभेदजान् ।**
**ग्रसमान् वेद्म्यहं मन्त्रान् शास्त्राणि विविधानि च ।। ६० ।।**

पुराणों के सभी अर्थों को, मन्त्रों को और दर्शनाम्नायों के भेदों से उत्पन्न विविध शास्त्रों को मैं जानता हूँ ।। ६० ।।

**सहस्राक्षादयो देवाः शास्त्रेषु विविधेषु च ।**
**भ्रमन्ति तेषु मूढास्ते तव मायाविमोहिताः ।। ६१ ।।**
**जायन्ते च म्रियन्ते च संसारक्लेशभागिनः ।**
**श्रीप्रासादपरामन्त्रं न गायन्तः कुलेश्वरि ।**
**न लभन्ते हि मोक्षं ते तव मायाविमोहिताः ।। ६२ ।।**

इन्द्रादि देवता आपकी माया से मोहित होकर विविध शास्त्रों में भ्रमित होते रहते हैं और संसार के कष्टों में पड़कर जन्म लेते व मरते रहते हैं किन्तु आपकी माया से मोहित होकर वे, हे कुलेश्वरि ! श्रीप्रासाद परामन्त्र का गान नहीं करते और मोक्ष को नहीं प्राप्त करते ॥ ६१-६२ ॥

**मद्रूपे श्रीगुरौ यस्य दृढा भक्तिः प्रजायते ।**
**श्रीप्रासादपरामन्त्रं स ज्ञात्वा परिमुच्यते ॥ ६३ ॥**

मेरे स्वरूपभूत श्री गुरुदेव में जिसकी दृढ़ भक्ति होती है, वही श्रीप्रासादपरामन्त्र को जानकर मुक्त होता है ॥ ६३ ॥

**पूर्वजन्मसहस्रेषु शैवादिसमयोद्यतान् ।**
**चतुराम्नायजान् मन्त्रान् गुर्वाज्ञां यो भजिष्यति ॥ ६४ ॥**
**स पापकञ्चुकान्मुक्तः शुद्धात्मा गुरुवत्सलः ।**
**श्रीप्रासादपरामन्त्रं विजानाति न चान्यथा ॥ ६५ ॥**

सहस्रों पूर्वजन्मों में शैवादि समयों ( धर्मों ) का पालन करते हुये गुरु की आज्ञा से चार आम्नायों के मन्त्रों की जो उपासना करता है, वह पापशरीर से मुक्त होकर शुद्धात्मा और गुरु का प्रिय होता है और वही श्रीप्रासादपरामन्त्र को जान पाता है, दूसरा नहीं ॥ ६४-६५ ॥

**सब्रह्माविष्णुरुद्राश्च शक्रादिसुरपुङ्गवाः ।**
**वसुरुद्रार्कदिक्पाला मनुचन्द्रादयः प्रिये ॥ ६६ ॥**
**मार्कण्डेयादिमुनयो वसिष्ठादिमुनीश्वराः ।**
**सनकाद्याश्च योगीशा जीवन्मुक्ताः शुकादयः ॥ ६७ ॥**
**यक्षकिन्नरगन्धर्वाः सिद्धविद्याधरादयः ।**
**श्रीप्रासादपरामन्त्रप्रभवञ्चामितं फलम् ।**
**प्राप्य मन्त्रमिमं पुण्यं जपन्त्यद्यापि पार्वति ॥ ६८ ॥**

**देव, मुनि आदि भी प्रासादमन्त्र के जपकर्त्ता**—हे प्रिये ! ब्रह्मा, विष्णु, रुद्र सहित इन्द्रादि श्रेष्ठ देवता, वसु, रुद्र एवं द्वादश आदित्य, दिक्पाल, मनु, चन्द्रादि और मार्कण्डेय आदि मुनि और वसिष्ठ आदि मुनीश्वर, सनकादि योगीश, जीवन्मुक्त शुकादि तथा यक्ष, किन्नर, गन्धर्व, सिद्ध, विद्याधर आदि सभी इस अमित फलदायक, प्रभावशाली तथा पुण्यवान् श्रीप्रासादपरामन्त्र को पाकर, हे पार्वति ! आज भी जपते रहते हैं ॥ ६६-६८ ॥

**सामर्थ्यं पूज्यता विद्या तेजः सौख्यमरोगिता ।**
**राज्यं स्वर्गञ्च मोक्षञ्च पराप्रासादजापिनः ॥ ६९ ॥**

**ब्रह्मेन्द्ररुद्रविष्णूनामपि दूरायते पदम् ।**
**सर्वकर्मविहीनोऽपि पराप्रासादमन्त्रवित् ।**
**सुखेन यां गतिं याति न तां सर्वेऽपि धार्मिकाः ॥ ७० ॥**

**पराप्रासादमन्त्र के जप का फल**—पराप्रासादमन्त्र का जप करने वाले सामर्थ्य, पूजा, ज्ञान, तेज, सुख, आरोग्यता, राज्य, स्वर्ग एवं मोक्ष प्राप्त करते हैं, और वे ब्रह्मा, इन्द्र, रुद्र तथा विष्णु के पद से भी आगे बढ़ जाते हैं । पराप्रासादमन्त्र का ज्ञाता सर्वकर्मविहीन होते हुये भी सहज ही जिस गति को प्राप्त करता है, उसे कोई भी धार्मिक व्यक्ति प्राप्त नहीं कर पाता ॥ ६९-७०॥

**तस्य चिन्तामणिः कामधेनुः कल्पतरुर्गृहे ।**
**कुबेरः किङ्करः साक्षात् पराप्रासादजापिनः ॥ ७१ ॥**

उसके घर में चिन्तामणि, कामधेनु और कल्पतरु सदैव विद्यमान रहते हैं तथा पराप्रासाद का जप करने वालों की सेवा साक्षात् कुबेर करते हैं ॥ ७१ ॥

**यथा दिव्यमणि स्पर्शाल्लौहो भवति काञ्चनम् ।**
**पराप्रासादजापाच्च पशुः पशुपतिर्भवेत् ॥ ७२ ॥**

जिस प्रकार दिव्यमणि के स्पर्श से लौह स्वर्ण बन जाता है, उसी प्रकार पराप्रासाद के जप से पशु साधक भी पशुपति हो जाता है ॥ ७२ ॥

**श्रीप्रासादपरामन्त्रं यो विजानाति तत्त्वतः ।**
**स मां त्वाञ्च विजानाति चावयोरप्यतिप्रियः ॥ ७३ ॥**

श्रीप्रासादपरामन्त्र को जो तत्त्वतः जानता है, वह मुझे और आपको जान जाता है और हम दोनों का अति प्रिय हो जाता है ॥ ७३ ॥

**पराप्रासादमन्त्रज्ञः श्वपचोऽपि हि पार्वति ।**
**देवतास्थापने शक्तः प्रतिमादौ न संशयः ॥ ७४ ॥**

**पराप्रासादमन्त्र का ज्ञाता निम्न वर्ण का व्यक्ति भी देवस्थापना का अधिकारी**—हे पार्वति ! पराप्रासादमन्त्र का ज्ञाता चाण्डाल भी मूर्ति आदि में देवता की स्थापना करने का अधिकारी होता है, इसमें सन्देह नहीं ॥ ७४ ॥

**मन्त्रमात्रन्तु यो वेत्ति पराप्रासादसंज्ञकम् ।**
**श्वपचोऽपि हि मुच्येत किं पुनस्तद्विधानवित्॥ ७५ ॥**

केवल पराप्रासाद नामक मन्त्र को जो साधक जानता है, वह चाण्डाल भी मुक्त हो जाता है, तब इस मन्त्र के जपादि विधि विधान को जानने वाले की तो बात ही क्या है ॥ ७५ ॥

**पराप्रासादमन्त्रज्ञो यत् करोति यदिच्छति ।**
**यद्ब्रूते तन्महेशानि तपो ध्यानं जपो भवेत् ॥ ७६ ॥**

पराप्रासादमन्त्र को जानने वाला जो चाहता है और जो बोलता है, वह सब हे महेशानि ! तप, ध्यान और जपस्वरूप ही होता है ॥ ७६ ॥

**दीक्षापूर्वं महेशानि पारम्पर्यसमन्वितम् ।**
**पराप्रासादमन्त्रं यो वेत्ति सोऽहं न संशयः ॥ ७७ ॥**

हे महेशानि ! दीक्षापूर्वक परम्परा क्रमयुक्त जो पराप्रासादमन्त्र को जानता है, वह निःसन्देह मुझे ही प्राप्त कर लेता है ॥ ७७ ॥

**चराचरसमेतानि भुवनानि चतुर्दश ।**
**पराप्रासादमन्त्रज्ञदेहे तिष्ठन्ति नित्यशः ॥ ७८ ॥**
**पराप्रासादमन्त्रज्ञो यत्र तिष्ठति भामिनि ।**
**दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥ ७९ ॥**

समस्त चराचर जगत् से युक्त सभी चौदह भुवन पराप्रासादमन्त्र के जानने वाले के शरीर में सदैव विद्यमान रहते हैं । हे भामिनी ! पराप्रासादमन्त्र जानने वाला जहाँ रहता है, वह स्थान और उसके स्थान के चारों ओर दश योजन तक का स्थान 'दिव्यक्षेत्र' माना जाता है ॥ ७८-७९ ॥

**पराप्रासादमन्त्रार्थतत्त्वज्ञं कुलनायिके ।**
**सुरासुराश्च वन्दन्ते किं पुनर्मानवादयः ॥ ८० ॥**

हे कुलनायिके ! सुर और असुर पराप्रासादमन्त्र के अर्थ का तत्त्व जानने वाले की वन्दना करते हैं, फिर मनुष्यों का क्या कहना ॥ ८० ॥

**पराप्रासादमन्त्रज्ञो यत्र तिष्ठति पार्वति ।**
**सिद्धक्षेत्रं मदीयं वा मुनिदेवगणैः सह ॥ ८१ ॥**

हे पार्वति ! पराप्रासादमन्त्र जानने वाला जहाँ रहता है, वह स्थान मुनियों और देवताओं द्वारा मेरा 'सिद्धक्षेत्र' माना जाता है ॥ ८१ ॥

**शैव वैष्णवदौर्गार्किगाणपत्येन्दुसम्भवान् ।**
**सर्वमन्त्रान् स जानाति पराप्रासादमन्त्रवित् ॥ ८२ ॥**
**श्रीप्रासादपरामन्त्रो जिह्वाग्रे यस्य वर्त्तते ।**
**तस्य दर्शनमात्रेण श्वपचोऽपि विमुच्यते ॥ ८३ ॥**

**पराप्रासादमन्त्र के ज्ञाता को शैवादि सभी मन्त्रों का ज्ञान**—पराप्रासाद मन्त्र का ज्ञाता शैव, वैष्णव, शाक्त, सौर, गाणपत्य और चन्द्र सम्प्रदाय के सभी

मन्त्रों को जानता है । श्री प्रासादपरामन्त्र जिसके जिह्वाग्र में रहता है, उसके दर्शनमात्र से चाण्डाल भी मुक्त हो जाता है ॥ ८२-८३ ॥

**ब्राह्मणो वाऽन्त्यजो वापि शुचिर्वाप्यशुचिः प्रिये ।**
**पराप्रासादजापी यः स मुक्तो नात्र संशयः ॥ ८४ ॥**

**पराप्रासादमन्त्र सब फलों का देने वाला**—हे प्रिये ! चाहे ब्राह्मण हो या अन्त्यज, चाहे पवित्र हो या अपवित्र जो पराप्रासाद का जप करने वाला है, वह निस्सन्देह मुक्त है ॥ ८४ ॥

**गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।**
**पराप्रासादमन्त्रोऽयं देवेशि न च निष्फलः ॥ ८५ ॥**

चाहे चलते हुये जप करे या बैठे हुये, चाहे जागते हुये जप करे या सोते हुये, यह पराप्रासादमन्त्र हे देवेशि ! कभी निष्फल नहीं होता ॥ ८५ ॥

**चिरेणैकैकफलदा मन्त्राः सन्ति सहस्रशः ।**
**कुलेशि मन्त्रराजोऽयं शीघ्रं सर्वफलप्रदः ॥ ८६ ॥**

सहस्रों प्रचलित मन्त्रों में से प्रत्येक मन्त्र पर्याप्त विलम्ब से और केवल एक ही फल प्रदान करते हैं । किन्तु हे कुलेशि ! यह मन्त्रराज शीघ्र ही सर्व फलों को प्रदान करता है ॥ ८६ ॥

**पराप्रासादमन्त्रोऽयं सर्वमन्त्रोत्तमोत्तमः ।**
**ज्ञानतोऽज्ञानतो वापि भजतां कामदो मनुः ॥ ८७ ॥**

यह पराप्रासादमन्त्र सब मन्त्रों में श्रेष्ठ है । चाहे ज्ञानपूर्वक इसका भजन करे या अज्ञानपूर्वक, यह मन्त्र सदैव अभीष्ट प्रदान करता है ॥ ८७ ॥

**शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ।**
**लक्ष्मीनारायणौ वाणीधातारौ रात्रिवासरौ ॥ ८८ ॥**
**अग्नीषोमौ बिन्दुनादौ देवि प्रकृतिपूरुषौ ।**
**आधाराधेयनामानौ भोगमोक्षौ कुलेश्वरि ॥ ८९ ॥**
**प्राणापानौ च वागर्थौ प्रिये विधिनिषेधकौ ।**
**सुखदुःखादि यद् द्वन्द्वं दृश्यते श्रूयते मया ।**
**सर्वलोकेषु तत् सर्वमावामेव न संशयः ॥ ९० ॥**
**पुंस्त्रीरूपाणि सर्वाणि चावयोरंशकानि हि ।**

**शचीन्द्र आदि द्वन्द्व का शिवशक्त्यात्मकत्व**—हे प्रिये! शची और इन्द्र, रोहिणी और चन्द्र, स्वाहा और अग्नि, प्रभा और सूर्य, लक्ष्मी और नारायण,

सरस्वती और ब्रह्मा, रात्रि और दिन, अग्नि और चन्द्र, बिन्दु और नाद, प्रकृति एवं पुरुष, आधार एवं आधेय, भोग और मोक्ष, प्राण और अपान, शब्द और अर्थ, विधि और निषेध, सुख और दुःख इत्यादि जितने द्वन्द्व समस्त लोकों में दिखाई या सुनाई देते हैं, वे सब, हे कुलेश्वरि ! हम दोनों के ही स्वरूप हैं इसमें सन्देह नहीं है । पुरुष और स्त्री के समस्त रूप हम दोनों के ही अंश हैं।

**पराप्रासादमन्त्रोऽयं तस्मात् सर्वात्मको भवेत् ॥ ९१ ॥**

**पराप्रासादमन्त्र का सर्वात्मकत्व**—अतः यह पराप्रासादमन्त्र सर्वात्मक है।

**अरूपं भावनागम्यं परं ब्रह्म कुलेश्वरि ।**
**निष्कलं निर्मलं नित्यं निर्गुणं व्योमसन्निभम् ॥ ९२ ॥**
**अनन्तमव्ययं तत्त्वं मनोवाचामगोचरम् ।**
**पराप्रासादमन्त्रार्थसन्धानात् सम्प्रकाशते ॥ ९३ ॥**

हे कुलेश्वरि ! यह अरूप, भावनागम्य, परंब्रह्म, निष्कल, निर्मल, नित्य, निर्गुण, आकाशवत् अनन्त, अव्यय और मनवाणी से परे है । इस पराप्रासाद का अर्थ केवल ध्यान से ही प्रकाशित होता है ॥ ९२-९३ ॥

**तस्मान्मन्त्रमिदं देवि पराप्रासादसंज्ञकम् ।**
**परतत्त्वस्वरूपत्वात् सच्चिदानन्दलक्षणात् ॥ ९४ ॥**

इसी से हे देवि ! इस मन्त्र का नाम 'पराप्रासाद' है । यह पर तत्त्व का स्वरूप है अतः सत्, चित् तथा आनन्द इसके लक्षण हैं ॥ ९४ ॥

**शिवशक्तिमयत्वाच्च भुक्तिमुक्तिप्रदानतः ।**
**सकर्मापि च निष्कर्म सगुणञ्चापि निर्गुणम् ॥ ९५ ॥**

शिवशक्ति से यह ओतप्रोत है; भुक्ति और मुक्ति का यह देने वाला है; सकर्मा होते हुये भी यह निष्कर्म है; सगुण होते हुये भी निर्गुण है ॥ ९५ ॥

**श्रीप्रासादपरामन्त्रं सर्वमन्त्रशिरोमणि ।**
**जपन् भुक्तिञ्च मुक्तिञ्च लभते नात्र संशयः ॥ ९६ ॥**

अतएव यह श्रीप्रासादपरामन्त्र सब मन्त्रों का शिरोमणि है । इसका जप करने से भुक्ति और मुक्ति दोनों प्राप्त होती हैं, इसमें सन्देह नहीं ॥ ९६ ॥

**बहुनात्र किमुक्तेन सर्वसारं शृणु प्रिये ।**
**श्रीप्रासादपरामन्त्रसमं मन्त्रं न विद्यते ॥ ९७ ॥**

**श्रीप्रासादपरामन्त्र की प्रशंसा**—अधिक कहने से क्या, हे प्रिये ! सब बातों का सार सुनिए । श्रीप्रासादपरामन्त्र के समान कोई मन्त्र नहीं है ॥ ९७ ॥

इदमेव परं ज्ञानमिदमेव परं तपः ।
इदमेव परं ध्यानमिदमेव परार्चनम् ॥ ९८ ॥
इदमेव परा दीक्षा इदमेव परो जपः ।
इदमेव परं तत्त्वमिदमेव परं व्रतम् ॥ ९९ ॥
इदमेव परो यज्ञ इदमेव परात् परम् ।
इदमेव परं श्रेय इदमेव परं फलम् ॥ १०० ॥
इदमेव परं ब्रह्म इदमेव परा गतिः ।
इदमेव परं गुह्यं सत्यं सत्यं न संशयः ।
इति मत्वा मनुवरं तन्निष्ठः स्यात् सदा प्रिये ॥ १०१ ॥

यही परम ज्ञान है, यही परम तप है, यही परम ध्यान है, यही परम अर्चन है, यही परा दीक्षा है और यही परम जप है । यही परम तत्त्व है, यही परम व्रत है, यही परम यज्ञ है, यही परम श्रेय है, यही परम फल है, यही परम ब्रह्म है और यही परा गति है । यही परम गुह्य है, यह सत्य है, इसमें सन्देह नहीं । इस श्रेष्ठ मन्त्र को ऐसा मान कर उसमें सदा निष्ठा रखे ।

आगमोक्तेन विधिना क्रमपूजापुरःसरम् ।
श्रीप्रसादपरामन्त्रं शतमष्टोत्तरं जपेत् ।
मुच्यते ब्रह्महत्यादिमहापापैश्च पञ्चभिः ॥ १०२ ॥

**श्री प्रसादपरामन्त्र की पुरश्चरण विधि**—श्रीप्रासादपरामन्त्र की जप विधि यह है कि आगमोक्त विधि से क्रमपूजा सहित श्रीप्रासादपरा मन्त्र का एक सौ आठ बार जप करे । इससे ब्रह्महत्या आदि पाँच महापापों से मुक्त हो जाता है।

द्विशतं यो जपेद्देवि श्रीप्रासादपरामनुम् ।
चतुरशीतिलक्षांशधारणाचरितैरपि ॥ १०३ ॥
स्वयोनिजाङ्गवरितैरसंख्यजननार्जितैः ।
वार्द्धके यौवने बाल्ये जाग्रत्स्वप्नसुषुप्तिषु ॥ १०४ ॥
कर्मणा मनसा वाचा ज्ञानाज्ञानकृतैरपि ।
महापातकसंघैश्च ह्युपपातककोटिभिः ।
मुच्यते नात्र सन्देहः सत्यमेतद्वरानने ॥ १०५ ॥

हे देवी! श्रीप्रासादपरामन्त्र को दो सौ बार जो जप करता है, वह पिछले चौरासी लाख योनियों के अपने विविध एवं असंख्य जीवनों की बाल्य, यौवन, वृद्धावस्था में, जाग्रत्, स्वप्न, सुषुप्ति दशाओं में मन, वचन, कर्म से ज्ञान या अज्ञानपूर्वक किये गये समस्त महापापों एवं करोड़ों उपपाप समूहों से छूटकारा पा जाता है, इसमें सन्देह नहीं है, हे वरानने ! यह सत्य है ॥ १०३-१०५॥

त्रिशतं यो जपेद्देवि श्रीप्रासादपरामनुम् ।
सर्वक्रतुषु यत् पुण्यं सर्वदानेषु यत् फलम् ॥ १०६ ॥
सर्वव्रतेषु यत् पुण्यं सर्वतीर्थेषु यत् फलम् ।
तत् फलं लभते देवि नात्र कार्या विचारणा ॥ १०७ ॥

हे देवि ! श्री प्रासादपरामन्त्र को जो तीन सौ बार जप करता है, वह समस्त प्रकार के यज्ञों का जो फल है, समस्त दानों का जो फल है, समस्त व्रतों का जो फल है और सभी तीर्थों का जो पुण्यफल है, वह समस्त फल हे देवि! प्राप्त करता है इसमें कोई तर्क वितर्क नहीं सोंचना चाहिए ॥१०६-१०७

चतुःशतं जपेद् यस्तु श्रीप्रासादपरामनुम् ।
सदा तस्य गृहद्वारे ह्यणिमाद्यष्टसिद्धयः ।
सेवन्ते नात्र सन्देहः सर्वसिद्धिसमन्विताः ॥ १०८ ॥
यद् यन्मनोऽभिलषितं तत्तत् प्राप्नोत्यसंशयः ।
धर्मार्थकाममोक्षाश्च साक्षात्तस्य करे स्थिताः ॥ १०९ ॥
सालोक्यप्रमुखां देवि लभेन्मुक्तिं चतुर्विधाम् ।
सत्यमेतन्न सन्देहः साधकः कुलनायिके ॥ ११० ॥

श्री प्रासादपरामन्त्र को चार सौ बार जो जप करता है, उसके द्वार पर अणिमा आदि आठों सिद्धियाँ सब सिद्धियों सहित सेवा करती हैं और जो भी उसकी मनोकामना होती है, वह निःसन्देह पूर्ण होती हैं । धर्म, अर्थ, काम तथा मोक्ष साक्षात् उसके हाथ में स्थित हैं और हे देवि ! सालोक्य सारूप्य आदि चारों प्रकार की मुक्ति वह प्राप्त करता है । हे कुलनायिके ! साधक को इसमें सन्देह नहीं करना चाहिए, यह सत्य है ॥ १०८-११० ॥

जपेत् पञ्चशतं यस्तु श्रीप्रासादपरामनुम् ।
तत्फलं नैव शक्नोमि कथितुं कुलनायिके॥ १११ ॥

हे कुलनायिके ! जो श्रीप्रासादपरामन्त्र का पाँच सौ बार जप करता है, उसके फल का वर्णन करने में मैं समर्थ नहीं हूँ ॥ १११ ॥

तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
श्रीप्रासादपरामन्त्रं जपेद् भुक्तिविमुक्तये ॥ ११२ ॥

**श्रीपराप्रासादमन्त्र भुक्ति एवं मुक्तिदायक**—अतएव भुक्ति एवं मुक्ति पाने के लिए हे कुलनायिके ! सभी प्रकार से प्रयत्न करके, सब अवस्थाओं में, सदैव श्रीप्रासादपरामन्त्र का जप करना चाहिये ॥ ११२ ॥

नास्ति गुर्वधिकं तत्त्वं न शिवाधिकदैवतम् ।

न हि वेदाधिका विद्या न कौलसमदर्शनम् ॥ ११३ ॥
न कुलादधिकं ज्ञानं न ज्ञानादधिकं सुखम् ।
नाष्टाङ्गादधिका पूजा न हि मोक्षाधिकं फलम् ।
इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः ॥ ११४ ॥

गुरु से अधिक कोई तत्त्व नहीं है, न शिव से अधिक कोई दैवत है। वेद से अधिक कोई विद्या नहीं है, न कौल के समान कोई दर्शन है । न कुल से अधिक कोई ज्ञान है, न ज्ञान से अधिक कोई सुख है । न अष्टाङ्ग से अधिक कोई पूजा है, न मोक्ष से अधिक कोई फल है । यह सत्य है, यह सत्य है । यह सर्वथा सत्य है, इसमें संशय नहीं करना चाहिए ॥११३-११४॥

श्रीप्रासादपरामन्त्रमाहात्म्यमिह वर्णितुम् ।
न शक्नोमि वरारोहे कल्पकोटिशतैरपि ॥ ११५ ॥
गिरौ सर्षपमात्रन्तु सागरे वालुका यथा ।
तथा च मन्त्रमाहात्म्यं किञ्चित्ते कथितं मया ॥ ११६ ॥

हे वरारोहे ! श्रीप्रासादपरामन्त्र का माहात्म्य मैं कोटिशत कल्पों में भी नहीं कह सकता । फिर भी पर्वत का सरसों बराबर और सागर के बालू के कण के समान इस मन्त्र की कुछ महिमा मैंने आपको बताई है ॥११५-११६॥

ऊर्ध्वाम्नायस्य माहात्म्यं श्रीप्रासादपरामनोः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ११७ ॥

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे श्रीप्रासाद-परामन्त्रकथनं नाम तृतीयोल्लासः ॥ ३ ॥**



इस प्रकार हे देवि ! ऊर्ध्वाम्नाय और श्रीप्रासादपरामन्त्र का माहात्म्य मैंने आपको बताया । अब आप क्या सुनना चाहती हैं ? ॥ ११७ ॥

**॥ इस प्रकार कुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में श्रीप्रासादपरामन्त्रकथन नामक तृतीय उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३ ॥**



# अथ चतुर्थोल्लासः

श्रीदेव्युवाच

कुलेश श्रोतुमिच्छामि श्रीप्रासादपरामनुम् ।
मन्त्रराजं वदेशान न्यासध्यानादिभिः सह ॥ १ ॥

**प्रासादपरामन्त्र एवं षोढान्यास—**

श्री देवी ने कहा—हे कुलेश ! मैं श्री प्रासादपरामन्त्र को सुनना चाहती हूँ। हे ईशान ! उस मन्त्ररत्न मन्त्रराज को न्यास एवं ध्यान आदि के सहित बताइये ॥ १ ॥

श्रीईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण शिवाकारः प्रजायते ॥ २ ॥

श्री ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने पूछा है, उसे मैं कहूँगा । उसके सुनने मात्र से श्रोता शिवस्वरूप हो जाता है ॥ २ ॥

इतः पूर्वं मया नोक्तो मन्त्रोऽयं यस्य कस्यचित् ।
तव स्नेहाद्वदाम्यद्य शृणु मत्प्राणवल्लभे ॥ ३ ॥

इसके पूर्व यह मन्त्र मैंने किसी से भी नहीं कहा है । हे प्राणवल्लभे ! आपके स्नेह से आज कहता हूँ, सुनिए ॥ ३ ॥

अनन्तचन्द्रभुवनमिन्दुबिन्दुयुगान्वितः ।
श्रीप्रासादपरामन्त्रो भुक्तिमुक्तिफलप्रदः ॥ ४ ॥
पराप्रासादमन्त्रस्तु सादिरुक्तः कुलेश्वरि ।

**श्रीप्रासादपरामन्त्र का उद्धार—**

'अनन्तचन्द्रभुवनमिन्दुबिन्दुयुगान्वितः' अर्थात् अनन्तचन्द्र' है नादबिन्दु ( ँ ), 'भुवन' है औकार, 'बिन्दु' है हकार और 'बिन्दु युग' है सकार । इस प्रकार श्री प्रासादपरामन्त्र 'हसौं' सिद्ध हुआ, जो भुक्ति मुक्ति रूपी फलदायक है। हे कुलेश्वरि ! श्री पराप्रासाद मन्त्र सादि अर्थात् 'स्हौं' कहा गया है ॥ ४ ॥

प्रकाशानन्दरूपत्वात् प्रत्यक्षफलदानतः ॥ ५ ॥
प्रसन्नचित्तवश्यत्वात् प्रसिद्धार्थनिरूपणात् ।
प्राक्तनाघप्रशमनात् प्रपन्नार्त्तिविनाशनात् ।
प्रसादकरणाच्छीघ्रं प्रासादमनुरीरितः ॥ ६ ॥

**प्रासादमन्त्र शब्द की व्याख्या**—प्रकाशानन्दस्वरूप होने से, प्रत्यक्ष फल देने से, प्रसन्नचित्त हो वशीभूत होने से, प्रसिद्ध अर्थ का निरूपण करने से, प्राक्तन पापों की शान्ति करने से, प्रपन्न ( शरणागत ) की आर्ति ( दुःख ) को नष्ट करने से और शीघ्र प्रसन्न करने से यह मन्त्र 'प्रासाद' कहा गया है ॥ ५-६ ॥

परतत्त्वस्वरूपत्वात् परमात्मप्रकाशनात् ।
परमानन्दजननात् परधर्मनिदर्शनात् ॥ ७ ॥
परोक्षफलदानाच्च परमैश्वर्यकारणात् ।
परत्वात् सर्वमन्त्राणां परामन्त्र इतीरितः ॥ ८ ॥
कुलमन्त्रमिदं देवि न्यासं शृणु वदामि ते ।

परतत्त्व का स्वरूप होने से, परमार्थ का प्रकाश करने से, परमानन्द देने से, परम-धर्म का निदर्शक होने से, परोक्ष फल देने से, परम ऐश्वर्य का कारण होने से और सब मन्त्रों से पर ( श्रेष्ठ ) होने से यह मन्त्र 'परा' कहा गया है । हे देवि ! यह कुलमन्त्र है । अब इसका न्यास आपसे कहता हूँ, सुनिए ॥ ७-९ ॥

आदौ प्रातः समुत्थाय गुरुदेवानुचिन्तनम् ॥ ९ ॥
कन्दमूले मनः कृत्वा कुर्याद्विण्मूत्रमोचनम् ।
शौचास्यशोधनं स्नानं सन्ध्यातर्पणमाचरेत् ॥ १० ॥
एकान्ते द्वारयजनं विघ्नत्रयनिवारणम् ।
पूजास्थानप्रवेशश्च तथासनोपवेशनम् ॥ ११ ॥
देवीपूजागृहध्यानं शिवादिगुरुवन्दनम् ।
आसनं गणपक्षेत्रपालवन्दनमीश्वरि ॥ १२ ॥

**न्यास के पूर्व कर्तव्य का निरूपण**—पहले प्रातःकाल उठकर गुरुदेव का ध्यान करे । फिर एक बार मूलमन्त्र ( कुलमन्त्र ) का स्मरण कर शौचादि से निवृत्त हो । तब मुख शोधन, स्नान, सन्ध्या, तर्पण करे । एकान्त में द्वारपूजा, तीनों विघ्नों का उत्सारण ( निवारण ) कर पूजास्थान में प्रवेश कर आसन पर बैठे । फिर हे ईश्वरि ! देवी पूजा के पूर्व ध्यान, शिवादि गुरु की वन्दना, आसन शोधन और गणपति क्षेत्रपाल की वन्दना करे ॥ ९-१२ ॥

पादुकास्मरणञ्चैव दिननाथार्चनं प्रिये ।
कराङ्गशोधनं प्राणायामः स्वब्रह्मरन्ध्रके ॥ १३ ॥
दिग्बन्धनञ्चाङ्गयुग्म विधियुक्ताञ्च मातृकाम् ।
दशप्रकारभूताख्यां लिपिं कमठसंज्ञकाम् ॥ १४ ॥

तदनन्तर गुरुपादुकामन्त्र का स्मरण कर हे प्रिये ! दिवस के नाथ ( = सूर्य ) का अर्चन करे। फिर कराङ्ग और षडङ्गों का शोधन एवं ब्रह्मरन्ध्र में प्राणायाम, दिग्बन्धन कर, दोनों अङ्गन्यास और दस प्रकार के मातृका न्यास ( १. अन्तर्मातृका, २-४. सृष्टि स्थिति संहार—ये तीन बहिर्मातृका, ५. कला मातृका, ६. श्रीकण्ठ मातृका, ७. केशव मातृका ८. लज्जाबीज मातृका, ९. रमाबीज मातृका और १०. कामबीज मातृका ) करे । तब श्री पराप्रासादमन्त्र के ऋष्यादि का न्यास करे ॥ १३-१४ ॥

ऋषिरस्य परः शम्भुश्छन्दश्चाव्यक्तपूर्विका ।
गायत्री देवता चात्र सर्वमन्त्रेश्वरी परा ॥ १५ ॥
दीर्घत्रययुतं मूलं बीजं शक्तिश्च कीलकम् ।
षड्दीर्घयुक्तमूलबीजेन षडङ्गानि च पार्वति ॥ १६ ॥

**श्री पराप्रासादमन्त्र का ऋष्यादिन्यास**—हे पार्वति ! इस मन्त्र के ऋषि परशम्भु हैं, अव्यक्तागायत्री छन्द है, सर्वमन्त्रेश्वरी परादेवता, दीर्घ त्रय से युक्त बीज, शक्ति एवं कीलक है और षड्दीर्घ युक्त मूलबीज से षडङ्गन्यास कहा गया है । ( हसां स्हां बीज है, हसी स्हीं शक्ति है और हसूं स्हूं कीलक है ) ।

**विमर्श—विनियोग**—ॐ अस्य श्रीपराप्रासादमन्त्रस्य परशम्भुः ऋषिः, अव्यक्ता गायत्री छन्दः, सर्वमन्त्रेश्वरीपरादेवता, हसां स्हां बीजं, हसीं स्हीं शक्तिः, हसूं स्हूं कीलकं, सर्वमन्त्रेश्वरीपरादेवताप्रसादसिद्ध्यर्थे विनियोगः ।

**ऋष्यादिन्यासः—**

परशम्भुऋषये नमः शिरसि । अव्यक्तागायत्रीछन्दसे नमः मुखे ।
सर्वमन्त्रेश्वरीपरादेवतायै नमः हृदि । हसां स्हां बीजाय नमः गुह्ये ।
हसीं स्हीं शक्तये नमः नाभौ । हसूं स्हूं कीलकाय नमः लिङ्गे ।
सर्वमन्त्रेश्वरीपरादेवताप्रसादसिद्ध्यर्थे विनियोगाय नमः पादयोः ।

**करन्यासः—**

हसां स्हां अंगुष्ठाभ्यां नमः । हसीं स्हीं तर्जनीभ्यां नमः ।
हसूं स्हूं मध्यमाभ्यां नमः । हसैं स्है अनामिकाभ्यां नमः ।
हसौं स्हौं कनिष्ठिकाभ्यां नमः । हसः स्हः करतलकरपृष्ठाभ्यां नमः ।

**षडङ्गन्यासः—**

हसां स्हां हृदयाय नमः । हसीं स्हीं शिरसे स्वाहा ।
हसूं स्हूं शिखायै वषट् । हसैं स्हैं कवचाय हुं ।
हसौं स्हौं नेत्रत्रयाय वौषट् । हसः स्हः अस्त्राय फट् ॥ १५-१६ ॥

**ईशतत्पुरुषाघोरसद्योजातात्मनस्तथा ।**
**पञ्चाङ्गुलिषु विन्यस्य मूर्त्तिं वक्त्रेषु विन्यसेत् ॥ १७ ॥**
**पञ्चसु ब्रह्मणि तथैवाङ्गविन्यासमाचरेत् ।**
**आधारशक्तिमारभ्य पीठमन्त्रान्तमम्बिके ॥ १८ ॥**
**अल्पषोढां कुलेशानि कुर्यात् पूर्वोक्तवर्त्मना ।**

**अल्पषोढान्यास**—हे अम्बिके ! पाँचों अंगुलियों से ईशान, तत्पुरुष, अघोर, सद्योजात और आत्मा रूप मूर्ति का मुखों में न्यास करें । इसी प्रकार मूर्धा, हृदय, गुह्य और पाददेश में क्रमशः अङ्गुष्ठ सहित पाँचों अंगुलियों से अङ्गन्यास करे । ये न्यास आधारशक्ति से आरम्भ करके पीठमन्त्र पर्यन्त करना चाहिए । हे कुलेशानि ! साधक को पूर्वोक्त क्रम से इस प्रकार अल्पषोढान्यास करना चाहिए ॥ १७-१९ ॥

**विमर्श—अल्पषोढान्यास—**

ॐ ऐं ह्रीं श्रीं हसौं स्हौं हों ईशानाय नमः—अंगुष्ठयोः ।
ॐ ऐं ह्रीं श्रीं हसौं स्हौं हें तत्पुरुषाय नमः—तर्जन्योः ।
ॐ ऐं ह्रीं श्रीं हसौं स्हौं हुं अघोराय नमः—मध्यमयोः ।
ॐ ऐं ह्रीं श्रीं हसौं स्हौं हिं वामदेवाय नमः—अनामिकयोः ।
ॐ ऐं ह्रीं श्रीं हसौं स्हौं हं सद्योजाताय नमः—कनिष्ठिकयोः ।

इसी प्रकार क्रमशः मूर्धा, मुख, हृदय, गुह्य और पाददेश में क्रमशः अंगुष्ठ, तर्जनी आदि अँगुलियों से न्यास करे ।

तब उक्त क्रम से क्रमशः ऊर्ध्व, प्राक्, दक्षिण, उदीच्य और पश्चिम मुखों में क्रमशः अंगुष्ठ, तर्जनी आदि अँगुलियों से न्यास करे ।

तदनन्तर 'हसां हसीं' इत्यादि से षडङ्गन्यास कर 'स्हां स्हीं' इत्यादि से भी षडङ्गन्यास करे । इसके बाद निम्न प्रकार से षडङ्गन्यास करे—

ॐ ऐं ह्रीं श्रीं हसौं स्हौं सर्वज्ञाय नमः—अंगुष्ठयोः ।
ॐ ऐं ह्रीं श्रीं हसौं स्हौं अमृते तेजोमालिनि नित्यतृप्ताय नमः—तर्जन्योः
ॐ ऐं ह्रीं श्रीं हसौं स्हौं ब्रह्मशिरसे स्वाहा ज्वलितशिखि शिखायानादिबोधाय नमः—मध्यमयोः ।

ॐ ऐं ह्रीं श्रीं ह्सौं स्हौं वज्रिणे वज्रहस्ताय स्वतन्त्राय नमः–अनामिकयोः।

ॐ ऐं ह्रीं श्रीं ह्सौं स्हौं सौं वौं हौं नित्यमलुप्तशक्तये नमः—कनिष्ठिकयोः ।

ॐ ऐं ह्रीं श्रीं ह्सौं स्हौं श्रीं श्लीं पशुं हुं फट् नित्यमनन्तशक्तये नमः—करतलयोः ।

इसी क्रम से हृदयादि षडङ्गों में भी न्यास करे । अब अड़तीस कलाओं का न्यास करे । सब मन्त्रों के पूर्व 'ॐ' लगा ले । पहले समुष्टि अंगुष्ठ से न्यास करे—

ॐ ईशानः सर्वविद्यानां शशिन्यै नमः ऊर्ध्ववक्त्रे ।
ॐ ईश्वरः सर्वभूतानां अङ्गदायै नमः पूर्ववक्त्रे ।
ॐ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मेष्टदायै नमः दक्षवक्त्रे ।
ॐ ब्रह्मा शिवो मे अस्तु मरीच्यै नमः उत्तरवक्त्रे ।
ॐ सदाशिवोम् अंशुमालिन्यै नमः पश्चिमवक्त्रे ।

अब अंगुष्ठ-तर्जनी को मिलाकर उनसे न्यास करे—

ॐ तत्पुरुषाय विद्महे शान्त्यै नमः पूर्ववक्त्राधः ।
ॐ महादेवाय धीमहि विद्यायै नमः दक्षिणवक्त्राधः ।
ॐ तन्नो रुद्रः प्रतिष्ठायै नमः उत्तरवक्त्राधः ।
ॐ प्रचोदयात् निवृत्यै नमः पश्चिमवक्त्राधः ।

अंगुष्ठ-मध्यमा को मिलाकर उनसे न्यास करे—

ॐ अघोरेभ्यः तमायै नमः हृदि ।
ॐ अथ घोरेभ्यो मोहायै नमः ग्रीवायां ।
ॐ घोरक्षमायै नमः दक्षांसे ।
ॐ घोरतरेभ्यो निद्रायै नमः वामांसे ।
ॐ सर्वतः शर्वव्याध्यै नमः नाभौ ।
ॐ सर्वेभ्यो मृत्यवे नमः कुक्षौ ।
ॐ नमस्ते अस्तु क्षुधायै नमः पृष्ठे ।
ॐ रुद्ररूपेभ्यः तृष्णायै नमः वक्षसि ।

अंगुष्ठ-अनामा को मिलाकर उनसे न्यास करे—

ॐ वामदेवाय नमो रजायै नमः गुह्ये ।
ॐ ज्येष्ठाय नमः श्रेष्ठाय नमो रक्षायै नमः लिङ्गे ।
ॐ रुद्राय नमो रत्यै नमः दक्षोरौ ।
ॐ कालाय नमो मालिन्यै नमः वामोरौ ।
ॐ कलविकरणाय नमः काम्यायै नमः दक्षजानुनि ।
ॐ विकरणाय नमः शशिन्यै नमः वामजानुनि ।

ॐ बलविकरणाय नमः क्रियायै नमः दक्षजंघायां ।
ॐ विकरणाय नमः वृद्धयै नमः वामजंघायां ।
ॐ बलाय नमः स्थिरायै नमः दक्षस्फिचि ।
ॐ बलप्रमथनाय नमः रात्र्यै नमः वामस्फिचि ।
ॐ सर्वभूतदमनाय नमो भ्रामिण्यै नमः कट्यां ।
ॐ मनोन्मनाय नमः मोहिन्यै नमः दक्षपार्श्वे ।
ॐ उन्मनाय नमो जरायै नमः वामपार्श्वे ।

अंगुष्ठ-कनिष्ठा को मिलाकर उनसे न्यास करे—

ॐ सद्योजातं प्रपद्यामि सिद्ध्यै नमः दक्षपादतले ।
ॐ सद्योजाताय वै नमः ऋद्ध्यै नमः वामपादतले ।
ॐ भवे लक्ष्म्यै नमः दक्षहस्ततले ।
ॐ भवे धृत्यै नमः वामहस्ततले ।
ॐ नातिभवे मेधायै नमः नासिकायां ।
ॐ भवस्व माम् प्रज्ञायै नमः शिरसि ।
ॐ भव-प्रभायै नमः दक्षबाहौ ।
ॐ उद्भवाय नमः सुधायै नमः वामबाहौ ।

**महाषोढाह्वयं न्यासं ततः कुर्यात् समाहितः ।**
**वक्ष्यमाणेन विधिना देवताभावसिद्धये ॥ १९ ॥**
**यस्य कस्यापि नैवोक्तं तव स्नेहाद्वदाम्यहम् ।**
**प्रपञ्चो भुवनं मूर्तिर्मन्त्रदेवतमातरः ।**
**महाषोढाह्वयो न्यासः सर्वन्यासोत्तमोत्तमः ॥ २० ॥**

**महाषोढान्यास**—इसके बाद सावधान होकर देवताभाव की सिद्धि के लिए वक्ष्यमाण विधि से 'महाषोढा' नामक न्यास करे । यह न्यास जिस किसी को न बताना चाहिए । आपके स्नेह के कारण मैं इसे आपसे कहता हूँ । १. प्रपञ्च, २. भुवन, ३. मूर्ति, ४. मन्त्र, ५. दैवत और ६. मातृका—इन ६ न्यासों से सम्बन्धित 'महाषोढान्यास' सब न्यासों में श्रेष्ठ है ॥ १९-२० ॥

**तत्रादौ परमेशानि प्रपञ्चन्यास उच्यते ।**
**प्रपञ्चद्वीपजलधिगिरिपत्तनपीठकाः ॥ २१ ॥**
**क्षेत्रं वनाश्रमगुहानदीचत्वरकोद्भिदः ।**
**स्वेदाण्डजजरायुजा इत्युक्तास्ते हि षोडश ॥ २२ ॥**
**श्रीर्माया कमला विष्णुवल्लभा पद्मधारिणी ।**
**समुद्रतनया लोकमाता कमलवासिनी ॥ २३ ॥**
**इन्दिरा मा रमा पद्मा तथा नारायणप्रिया ।**

**सिद्धलक्ष्मी राजलक्ष्मीर्महालक्ष्मीरितीरिताः ।**
**शक्तयस्तु प्रपञ्चानां स्वराणामधिदेवताः ॥ २४ ॥**

**( १ ) प्रपञ्चन्यास**—हे परमेशानि ! पहले 'प्रपञ्चन्यास' बताता हूँ जो प्रपञ्च, द्वीप, जलधि ... इन १६ के रूप में किया जाता है । यह न्यास श्री, माया, कमला, विष्णुवल्लभा, पद्मधारिणि, समुद्रतनया, लोकमाता, कमलवासिनी, इन्दिरा, मा, रमा, पद्मा, नारायणप्रिया, सिद्धलक्ष्मी, राजलक्ष्मी और महालक्ष्मी—इन १६ शक्तियों के लिए किया जाता है। प्रपञ्चन्यास में ये शक्तियाँ स्वरों की अधिष्ठातृ देवता है ॥ २१-२४ ॥

**विमर्श**—निम्नलिखित प्रत्येक मन्त्र के आदि में 'ॐ ऐं ह्रीं श्रीं ह्सौः' और अन्त में 'स्हौः श्रीं ह्रीं ऐं ॐ' जोड़कर न्यास करे । यथा—

ॐऐं ह्रीं श्रीं ह्सौः ॐ अं प्रपञ्चरूपायै श्रियै नमः स्हौः श्रीं ह्रीं ऐं ॐ शिरसि।
ॐ आं द्वीपरूपायै मायायै नमः मुखवृत्ते ।
ॐ इं जलधिरूपायै कमलायै नमः दक्षनेत्रे ।
ॐ ई गिरिरूपायै विष्णुवल्लभायै नमः वामनेत्रे ।
ॐ उं पत्तनरूपायै पद्मधारिण्यै नमः दक्षकर्णे ।
ॐ ऊं पीठरूपायै समुद्रतनयायै नमः वामकर्णे ।
ॐ ऋं क्षेत्ररूपायै लोकमात्रे नमः दक्षनासापुटे ।
ॐ ॠं वनरूपायै कमलवासिन्यै नमः वामनासापुटे ।
ॐ ऌं आश्रमरूपायै इन्दिरायै नमः दक्षगण्डे ।
ॐ ॡं गुहारूपायै मायायै नमः वामगण्डे ।
ॐ एं नदीरूपायै रमायै नमः ऊर्ध्वोष्ठे ।
ॐ ऐं चत्वररूपायै पद्मायै नमः अधरोष्ठे ।
ॐ ओं उद्भिजरूपायै नारायणप्रियायै नमः ऊर्ध्वदन्तपंक्तौ ।
ॐ औं स्वेदजरूपायै सिद्धिलक्ष्म्यै नमः अधोदन्तपंक्तौ ।
ॐ अं अण्डजरूपायै राजलक्ष्म्यै नमः जिह्वामूले ।
ॐ अः जरायुजरूपायै महालक्ष्म्यै नमः जिह्वाधः ॥ २१-२४ ॥

**लवस्त्रुटिः कला काष्ठा निमेषः श्वास एव हि ।**
**घटिका च मुहूर्त्तश्च प्रहरो दिवसस्तथा ॥ २५ ॥**
**सन्ध्या रात्रिस्तिथिश्चैव वारो नक्षत्रमेव च ।**
**योगश्च करणं पक्षौ मासो राशिर्ऋतुस्तथा ॥ २६ ॥**
**अयनं वत्सरयुगप्रलयाः पञ्चविंशतिः ।**
**एतेषां स्थाननियमो हृदयान्तः समीरितः ॥ २७ ॥**

आर्योमा चण्डिका दुर्गा शिवाऽपर्णाऽम्बिका सती ।
ईश्वरी शाम्भवीशानी पार्वती सर्वमङ्गला ॥ २८ ॥
दाक्षायणी हैमवती महामाया महेश्वरी ।
मृडानी चैव रुद्राणी सर्वाणी परमेश्वरी ॥ २९ ॥
काली कात्यायनी गौरी भवानीति समीरिता ।
शक्तयः स्युर्लवादीनां स्पर्शानामधिदेवताः ।
एतासां स्थाननियमो हृदयान्तः समीरितः ॥ ३० ॥

इसके बाद क से लेकर म तक व्यञ्जनों से शरीर के विभिन्न अवयवों में न्यास करना चाहिए । इन व्यञ्जनों के शक्तियों की अधिष्ठातृ देवता क्रमशः इस प्रकार हैं—आर्या, उमा, चण्डिका, दुर्गा, शिवा, अपर्णा, अम्बिका, सती, ईश्वरी, शाम्भवी, ईशानी, पार्वती, सर्वमङ्गला, दाक्षायणी, हैमवती, महामाया, महेश्वरी, मृडानी, रुद्राणी, सर्वाणी, परमेश्वरी, काली, कात्यायनी, गौरी तथा भवानी का न्यास लव, त्रुटि, कला, काष्ठा, निमेष, श्वास, घटिका, मुहूर्त्त, प्रहर, दिवस, सन्ध्या, रात्रि, तिथि, वार, नक्षत्र, योग, करण, पक्ष, मास, राशि, ऋतु, अयन, वत्सर, युग और प्रलय के रूप में होती है । ये कुल २५ हैं जिनका न्यास दक्षबाहु मूल से लेकर हृदय पर्यन्त पूर्वोक्त विधि से करना चाहिए ॥ २५-३० ॥

ॐ कं लवरूपायै आर्यायै नमः दक्षबाहुमूले ।
ॐ खं त्रुटिरूपायै नमः दक्षकूर्परे ।
ॐ गं कलारूपायै चण्डिकायै नमः दक्षमणिबन्धे ।
ॐ घं काष्ठारूपायै दुर्गायै नमः दक्षांगुलिमूले ।
ॐ ङं निमेषरूपायै शिवायै नमः दक्षांगुल्यग्रे ।
ॐ चं श्वासरूपायै अपर्णायै नमः वामबाहुमूले ।
ॐ छं घटिकारूपायै अम्बिकायै नमः वामकूर्परे ।
ॐ जं मुहूर्तरूपायै सत्यै नमः वाममणिबन्धे ।
ॐ झं प्रहररूपायै ईश्वर्यै नमः वामांगुलिमूले ।
ॐ ञं दिवसरूपायै शाम्भव्यै नमः वामांगुल्यग्रे ।
ॐ टं सन्ध्यारूपायै ईशान्यै नमः दक्षपादमूले ।
ॐ ठं रात्रिरूपायै पार्वत्यै नमः दक्षजंघायाम् ।
ॐ डं तिथिरूपायै सर्वमङ्गलायै नमः दक्षगुल्फे ।
ॐ ढं वाररूपाये दाक्षायण्यै नमः दक्षपादांगुलिमूले ।
ॐ णं नक्षत्ररूपायै हैमवत्यै नमः दक्षपादांगुल्यग्रे ।
ॐ तं योगरूपायै महामायायै नमः वामपादमूले ।
ॐ थं करणरूपायै माहेश्वर्यै नमः वामजंघायाम् ।

ॐ दं पक्षरूपायै मृडान्यै नमः वामगुल्फे ।
ॐ धं मासरूपायै रुद्राण्यै नमः वामपादांगुलिमूले ।
ॐ नं राशिरूपायै शर्वाण्यै नमः वामपादांगुल्यग्रे ।
ॐ पं ऋतुरूपायै परमेश्वर्यै नमः दक्षकुक्षौ
ॐ फं अयनरूपायै काल्यै नमः वामकुक्षौ ।
ॐ बं वत्सररूपायै कात्यायन्यै नमः पृष्ठवंशे ।
ॐ भं युगरूपायै गौर्यै नमः नाभौ ।
ॐ मं प्रलयरूपायै भवान्यै नमः हृदये ॥ २५-३० ॥

**पञ्चभूतानि तन्मात्रं ज्ञानकर्मेन्द्रियाणि च ।**
**गुणान्तःकरणावस्था ध्यायेद्दोषान् दशानिलान् ॥ ३१ ॥**
**ब्राह्मी वागीश्वरी वाणी सावित्री च सरस्वती ।**
**गायत्री वाक्प्रदा पश्चात् शारदा भारती प्रिये ।**
**विद्यात्मिका पञ्चभूतव्यापकानामधीश्वराः ॥ ३२ ॥**
**वाग्भवं भुवनेशीञ्च लक्ष्मीबीजं त्रितारकम् ।**
**त्रितारमूलीविद्यान्त मातृकाक्षरतः परम् ॥ ३३ ॥**
**वदेत् प्रपञ्चरूपायै श्रियै नम इति क्रमात् ।**
**प्रपञ्चादिभिरायोज्य वर्णान शक्तीर्नियोजयेत् ।**
**मातृकान्याससंप्रोक्तस्थानेष्वेवं न्यसेत् प्रिये ॥ ३४ ॥**
**त्रितारमूलसकलप्रपञ्चादि स्वरूपतः ।**
**आयै पराम्बादेव्यैनम उक्त्वा व्यापकं न्यसेत् ॥ ३५ ॥**

इसके बाद हे प्रिये ! ब्राह्मी, वागीश्वरी, वाणी, सावित्री, सरस्वती, गायत्री, वाक्प्रदा, शारदा, भारती और विद्यात्मिका का न्यास करना चाहिए जो पञ्चभूत, पञ्चतन्मात्रा, पञ्चकर्मेन्द्रिय, पञ्चज्ञानेन्द्रिय ( पञ्चप्राण, गुणत्रय एवं करण चतुष्टय, अवस्था चतुष्टय, सप्त धातु एवं दोष त्रय ) की अधिष्ठातृ देवता हैं । वाग्भव, भुवनेशानी, लक्ष्मी, त्रितारक—इनके बीज और सभी मूलबीजों के सहित य र ल व श ष स ह ल क्ष और अ से लेकर क्ष पर्यन्त मातृकाक्षरों से न्यास करना चाहिए । वर्णों और शक्तियों के नाम के साथ 'प्रपञ्चरूपायै श्रियै नमः' आदि क्रमशः संयोजित करते हुए न्यास करे । हे प्रिये ! इसे ही मातृकान्यास कहा है जिनका तत्तत्स्थानों में न्यास करे । 'ऐं ह्रीं श्रीं ह्सौः' इस त्रितार एवं मूल मन्त्र के साथ सकलप्रपञ्च रूपायै पराम्बा देव्यै नमः कहकर सर्वाङ्ग में व्यापक न्यास करे ॥ ३१-३५ ॥

**विमर्श**—ॐ यं पृथिव्यप्तेजोवाय्वाकाशाख्यपञ्चभूतरूपायै ब्राह्मयै नमः दक्षांसे ।

ॐ रं शब्दस्पर्शरूपरसगन्धाख्यपञ्चतन्मातृरूपायै वागीश्वर्यै नमः वामांसे ।

ॐ लं वाक्पाणिपादपायूपस्थाख्यपञ्चकर्मेन्द्रियरूपायै वाण्यै नमः अपरगले

ॐ वं श्रोत्रत्वक् चक्षुर्जिह्वाघ्राणाख्यपञ्चज्ञानेन्द्रियरूपायै सावित्र्यै नमः दक्षकक्षे ।

ॐ शं प्राणापानव्यानोदानसमानाख्य पञ्चप्राणरूपायै सरस्वत्यै नमः वामकक्षे ।

ॐ षं सत्त्वरजतमाख्यगुणत्रयरूपायै गायत्र्यै नमः हृदयादिदक्षपाणिपर्यन्तम्।

ॐ सं मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणचतुष्टयरूपायै वाक्प्रदायै नमः हृदयादि वामपाणिपर्यन्तम् ।

ॐ हं जाग्रत् स्वप्नसुषुप्तितुरीयावस्थाचतुष्टयरूपायै शारदायै नमः हृदयादि दक्षपादान्तम् ।

ॐ लं त्वगसृग्मांसमेदोऽस्थिमज्जाशुक्राख्यसप्तधातुरूपायै भारत्यै नमः हृदयादि वामपादान्तम् ।

ॐ क्षं वातपित्तश्लेष्माख्यदोषत्रयरूपायै विद्यात्मिकायै पञ्चभूतव्यापिकाधीश्वर्यै नमः हृदयादि भ्रू युगान्तम् ।

ॐ अं ... ... ... क्षं मूलं सकलप्रपञ्चरूपायै पराम्बादेव्यै नमः सर्वाङ्गे व्यापकम् ।। ३१-३५ ।।

**प्रपञ्चन्यास एव स्याद् भुवनन्यास उच्यते ।**
**त्रितारमूलमन्त्रान्ते अ आं इं अतलं वदेत् ।। ३६ ।।**
**लोकञ्च निलयञ्चैव शतकोटिपदं ततः ।**
**गुह्याद्या योगिनी मूलङेयुतन्तु वदेत् प्रिये ।। ३७ ।।**
**वदेदाधारशक्त्यम्बादेव्यै च पादयोर्न्यसेत् ।**

प्रपञ्चन्यास कहा गया है । अब मैं भुवनन्यास कहता हूँ । सर्वप्रथम 'ऐं ह्रीं श्रीं ह्सौः' इस मूलमन्त्र को लेकर अं आं ईं लगाकर 'अतललोकनिलय शतकोटि गुह्याख्य योगिनीमूलदेवतायुताधार शक्त्यम्बादेव्यै नमः' कहकर हे प्रिये! दोनों पैरों में न्यास करे ।। ३६-३८ ।।

**ई उं ऊं वितलं गुह्यतरं चानन्तसंज्ञकम् ।**
**शेषञ्च पूर्ववत् प्रोच्य गुल्फयोर्देवि विन्यसेत् ।। ३८ ।।**

इसके बाद मूलमन्त्र फिर ईं उं ऊं वितल और शेष पूर्ववत् रखकर हे देवि ! गुल्फों में न्यास करे ।। ३८ ।।

**ऋं ॠं लृं सुतलञ्चातिगुह्यं चाविन्त्यसंज्ञकम् ।**
**शेषच्च पूर्ववत् प्रोच्य जङ्घयोर्विन्यसेत् प्रिये ।। ३९ ।।**
**ॡं एं ऐं महातलञ्च महागुह्यं पदं ततः ।**

शेषञ्च पूर्ववत् प्रोच्य देवि जान्वोः प्रविन्यसेत् ॥ ४० ॥
ओं औं तलातलं देवि परं गुह्याभिधानकम् ।
शेषञ्च पूर्ववत् प्रोच्य ऊर्वोर्देवेशि विन्यसेत् ॥ ४१ ॥
अं अः रसातलञ्चैव रहस्यं ज्ञानसंज्ञकम् ।
शेषञ्च पूर्ववत् प्रोच्य गुह्यदेशे प्रविन्यसेत् ॥ ४२ ॥
कवर्गणापि पातालं लोकेति निलयेति च ।
शेषञ्च पूर्ववत् प्रोच्य मूलाधारे तु विन्यसेत् ॥ ४३ ॥
चवर्गं भूतलञ्चेति रहस्यं डाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य स्वाधिष्ठाने न्यसेत् प्रिये ॥ ४४ ॥
टवर्गेण भुवो लोकं रहस्यं राकिणीमपि ।
शेषञ्च पूर्ववत् प्रोच्य नाभौ च विन्यसेत् प्रिये ॥ ४५ ॥
तवर्गं स्वश्च परमरहस्य लाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य हृदये विन्यसेत् प्रिये ॥ ४६ ॥
पवर्गञ्च महर्लोकं रहस्यं काकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य तालुमूले न्यसेत् प्रिये ॥ ४७ ॥
यवर्गञ्च जनो गुप्ततरञ्च शाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य आज्ञायाञ्च न्यसेत् प्रिये ॥ ४८ ॥
शवर्गञ्च तपश्चातिगुह्यञ्च हाकिनीमपि ।
शेषञ्च पूर्ववत् प्रोच्य ललाटे विन्यसेत् प्रिये ॥ ४९ ॥
लं क्षं सत्यं महागुह्यं यक्षिणीमपि च प्रिये ।
शेषञ्च पूर्ववत् प्रोच्य ब्रह्मरन्ध्रे च विन्यसेत् ॥ ५० ॥
त्रितारमूलमन्त्रान्ते चतुर्दशभुवं वदेत् ।
नाधिपायै श्रीपरायै देव्यै च व्यापकं न्यसेत् ॥ ५१ ॥

(२) भुवनन्यास—

निम्नलिखित प्रत्येक मन्त्र के आदि में 'ऐं ह्रीं श्रीं हसौः' जोड़कर न्यास करे, यथा—

ऐं ह्रीं श्रीं हसौः अं आं इं अतललोकनिलयशतकोटिगुह्याख्ययोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः पादयोः ।

ऐं ह्रीं श्रीं हसौः ईं उं ऊं वितललोकनिलयशतकोट्यतिगुह्ययोगिनीमूलदेवतायुतानन्तशक्त्यम्बादेव्यै नमः गुल्फयोः ।

ऐं ह्रीं श्रीं हसौः ऋं ॠं लृं सुतललोकनिलयशतकोट्यतिगुह्ययोगिनीमूलदेवतायुताचिन्त्य शक्त्यम्बादेव्यै नमः जङ्घयोः ।

ऐं ह्रीं श्रीं ह्सौः लृ एं ऐं महातललोकनिलयशतकोटिमहागुह्याख्ययोगिनीमूलदेवतायुन्वोःशक्त्यम्बादेव्यै नमः जान्वीः ।

ऐं ह्रीं श्रीं ह्सौः ओं औं तलातललोकनिलयशतकोटिरहस्ययोगिनीमूलदेवतायुतपरमगुह्येच्छाशक्त्यम्बादेव्यै नमः ऊर्वोः ।

ऐं ह्रीं श्रीं ह्सौः अं अः रसातललोकनिलयशतकोटिरहस्ययोगिनीमूलदेवतायुतज्ञानशक्त्यम्बादेव्यै नमः गुह्ये ।

ऐं ह्रीं श्रीं ह्सौः कं ( खं गं घं ङं ) पाताललोकनिलयशतकोटिरहस्यातिरहस्ययोगिनीमूलदेवतायुतक्रियाशक्त्यम्बादेव्यै नमः मूलाधारे ।

ऐं ह्रीं श्रीं ह्सौः चं ( छं जं झं ञं ) भूर्लोक निलयशतकोट्यतिरहस्ययोगिनीमूलदेवतायुतश्रीडाकिनीशक्त्यम्बादेव्यै नमः स्वाधिष्ठाने ।

ऐं ह्रीं श्रीं ह्सौः टं ( ठं डं ढं णं ) भुवर्लोकनिलयशतकोटिमहारहस्ययोगिनीमूलदेवतायुतश्रीराकिणीशक्त्यम्बादेव्यै नमः नाभौ ।

ऐं ह्रीं श्रीं ह्सौः तं ( थं दं धं नं ) स्वर्लोकनिलयशतकोटिपरमरहस्ययोगिनीमूलदेवतायुत लाकिनीशक्त्यम्बादेव्यै नमः हृदये ।

ऐं ह्रीं श्रीं ह्सौः पं ( फं बं भं मं ) महर्लोकनिलयशतकोटिगुप्तयोगिनीमूलदेवतायुतश्रीकाकिनीशक्त्यम्बादेव्यै नमः तालुमूले ।

ऐं ह्रीं श्रीं ह्सौः यं ( रं लं वं ) जनलोकनिलयशतकोटिगुप्ततरयोगिनीमूलदेवतायुतश्रीशाकिनीशक्त्यम्बादेव्यै नमः आज्ञायाम् ।

ऐं ह्रीं श्रीं ह्सौः शं ( षं सं हं ) तपोलोकनिलयशतकोट्यतिगुप्तयोगिनीमूलदेवतायुत हाकिनीशक्त्यम्बादेव्यै नमः ललाटे ।

ऐं ह्रीं श्रीं ह्सौः ळं क्षं सत्यलोकनिलयशतकोटिमहागुप्तयोगिनीमूलंदेवतायुतयक्षिणीशक्त्यम्बादेव्यै नमः ब्रह्मरन्ध्रे ।

ऐं ह्रीं श्रीं ह्सौः अं ... ... ... क्षं चतुर्दशभुवनाधिपायै श्रीपराम्बादेव्यै नमः सर्वाङ्गे व्यापकम् ॥ ३६-५१ ॥

**कृत्वैवं भुवनन्यासं मूर्त्तिन्यासमथाचरेत् ।**
**केशवनारायणमाधवगोविन्दविष्णवः ॥ ५२ ॥**
**मधुसूदनसंज्ञश्च स्यात्त्रिविक्रमवामनौ ।**
**श्रीधरश्च हृषीकेशः पद्मनाभो दामोदरः ।**
**वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः॥ ५३ ॥**
**अक्षोरोष्टदा चेशानी चोग्रोर्द्धवनयना तथा ।**
**ऋद्धिश्च रूपिणी लुप्ता लूनदोषैकनायिका ॥ ५४ ॥**
**ऐङ्कारिणी चौघवती सर्वकामाञ्जनप्रभा ।**
**अस्थि मालाधरा चेति सम्प्रोक्ताः स्वरदेवताः॥ ५५ ॥**

(३) मूर्तिन्यास—

भुवनन्यास के विधान के बाद प्रत्येक मन्त्र के आदि में पूर्ववत् 'ऐं ह्रीं श्रीं हसौः' जोड़कर मूर्तिन्यास करे। केशव, नारायण, माधव, गोविन्द, विष्णु, मधुसूदन, त्रिविक्रम, वामन, श्रीधर, हृषीकेश, पद्मनाभ, दामोदर, वासुदेव, सङ्कर्षण, प्रद्युम्न और अनिरुद्ध—ये १६ स्वरों के देवता कहे गए हैं। अक्षरशक्ति, आद्या, इष्टदा, ईशानी, उग्रा, ऊर्द्ध्वनयना, ऋद्धि, रूपिणी, लुप्ता, लूनदोषा, एकनायिका, ऐङ्कारिणी, औघवती, सर्वकामा, अञ्जनप्रभा और अस्थिमालाधरा—ये १६ उन स्वरों की शक्तियाँ हैं ॥ ५२-५५ ॥

**भवः शर्वोऽथ रुद्रश्च पशुपतिश्चोग्र एव च ।**
**महादेवस्तथा भीम ईशस्तत्पुरुषाह्वयः ॥**
**अघोरसद्योजातौ च वामदेव इतीरिताः ॥ ५६ ॥**
**करभद्रा खगबला गरिमादिफलप्रदा ।**
**घण्टाधरोग्रनयना चन्द्रधर्त्री ततः परम् ।**
**छन्दोमयी जगत्स्थाना ज्वलत्तारा ततः परम् ॥ ५७ ॥**
**ज्ञानदा च टङ्कधरा धृतिर्द्वादश ईरिताः ।**
**कभादीनां ठडान्तानां वर्णानां देवतास्त्विमाः ॥ ५८ ॥**

भव, शर्व, रुद्र, पशुपति, उग्र, महादेव, भीम, ईश, तत्पुरुष, अघोर, सद्योजात और वामदेव—ये १२ शिव कहे गए हैं। करभद्रा, खगबला, गरिमादि, फलप्रदा, धर्मप्रशमनी, पङ्क्तिनासा, चन्द्रार्धधारिणी, छन्दोमयी, जगत्स्थाना, ज्वलत्तारा, ज्ञानफलप्रदा, टङ्कधरा और धृति—ये १२ क भ से लेकर ठ ड पर्यन्त वर्णों के देवता हैं ॥ ५६-५८ ॥

**विमर्श**—५७ के मूल में घण्टाधरोग्रनयना पाठ सन्दिग्ध है। धर्मप्रशमनी एवं पङ्क्तिनासा होना चाहिए।

**ब्रह्मा प्रजापतिर्वेधाः परमेष्ठी पितामहः ।**
**विधाता च विरिञ्चिश्च स्रष्टा च चतुराननः ॥**
**हिरण्यगर्भ इत्युक्ताः क्रमाद् ब्रह्मादयो दश ॥ ५९ ॥**

ब्रह्मा, प्रजापति, वेधा, परमेष्ठी, पितामहः, विधाता, विरिञ्चि, स्रष्टा, चतुरानन एवं हिरण्यगर्भ—ये ब्रह्मा आदि १० ब्रह्मा कहे गए हैं ॥ ५९ ॥

**यक्षिणी रञ्जिनी लक्ष्मीर्वज्रिणी शशिधारिणी ।**
**षडाधारलया सर्वनायिका हसितानना ।**
**ललिता च क्षमा चेति प्रोक्ता याद्यर्णदेवताः ॥ ६० ॥**

यक्षिणी, रञ्जिनी, लक्ष्मी, वज्रिणी, शशिधारिणी, षडाधारलया, सर्वनायिका, हसितानना, ललिता तथा क्षमा—ये १० यादि वर्णों की देवता कही गई हैं ॥ ६० ॥

**त्रितारमूलमन्त्रान्ते स्वरान् विष्णून् सशक्तिकान् ।**
**चतुर्थ्या नमसा युक्तान् मस्तके चानने न्यसेत् ॥ ६१ ॥**

त्रितार (ॐ ॐ ॐ), मूलमन्त्र और अन्त में स्वरों के साथ चतुर्थ्यन्त शक्तियों के सहित विष्णु आदि पद एवं नमः से युक्त मस्तक एवं मुख पर न्यास करे ॥ ६१ ॥

**सस्कन्धपार्श्वकट्यूरु जानुजङ्घापदेषु च ।**
**दक्षादिवामपर्यन्तं विन्यसेत् परमेश्वरि ॥ ६२ ॥**
**कभाद्यर्णयुतान् मन्त्री भवादीन शक्तिसंयुतान् ।**
**पादपार्श्वबाहुकण्ठपञ्चवक्त्रेषु विन्यसेत् ।**
**दशाधारेषु ब्रह्मादीन् यादि शक्तियुतान्न्यसेत् ॥ ६३ ॥**
**त्रितारमूलमन्त्रान्ते श्रीत्रिमूर्त्यम्बिकां वदेत् ।**
**आयै पराम्बादेव्यै च नमसा व्यापकं न्यसेत् ।**

यथा— ऐं ह्रीं श्रीं ह्सौः अं केशवाक्षरशक्तिभ्यां नमः ललाटे ।
ऐं ह्रीं श्रीं ह्सौः आं नारायणाद्याभ्यां नमः दक्षमुखे ।
ऐं ह्रीं श्रीं ह्सौः इं माधवेष्टदाभ्यां नमः दक्षस्कन्धे ।
ऐं ह्रीं श्रीं ह्सौः ई गोविन्देशानीभ्यां नमः दक्षकुक्षौ ।
ऐं ह्रीं श्रीं ह्सौः उं विष्णूग्राभ्यां नमः दक्षिणोरौ ।
ऐं ह्रीं श्रीं ह्सौः ऊं मधुसूदनोर्ध्वनयनाभ्यां नमः दक्षजानुनि ।
ऐं ह्रीं श्रीं ह्सौः ऋं त्रिविक्रमृऋद्धिभ्यां नमः दक्षजंघायाम् ।
ऐं ह्रीं श्रीं ह्सौः ॠं वामनरूपिणीभ्यां नमः दक्षपादे ।
ऐं ह्रीं श्रीं ह्सौः ऌं श्रीधरलुपताभ्यां नमः वामपादे ।
ऐं ह्रीं श्रीं ह्सौः ॡं हृषीकेशलूनदोषाभ्यां नमः वामजंघायाम् ।
ऐं ह्रीं श्रीं ह्सौः एं पद्मनाभैकनायिकाभ्यां नमः वामजानुनि ।
ऐं ह्रीं श्रीं ह्सौः ऐं दामोदरैङ्कारिणीभ्यां नमः वामोरौ ।
ऐं ह्रीं श्रीं ह्सौः ओं वासुदेवौघवतीभ्यां नमः वामकुक्षौ ।
ऐं ह्रीं श्रीं ह्सौः औं सङ्कर्षणसर्वकामाभ्यां नमः वामस्कंधे ।
ऐं ह्रीं श्रीं ह्सौः अं प्रद्युम्नाञ्जनप्रभाभ्यां नमः वाममुखे ।
ऐं ह्रीं श्रीं ह्सौः अः अनिरुद्धास्थिमालाधराभ्यां नमः वाममस्तके ।

ऐं ह्रीं श्रीं ह्सौः कं भं भवकरभद्राभ्यां नमः दक्षपादे ।
ऐं ह्रीं श्रीं ह्सौः खं बं शर्वखगबलाभ्यां नमः वामपादे ।
ऐं ह्रीं श्रीं ह्सौः गं फं रुद्रगरिमादिफलप्रदाभ्यां नमः दक्षपार्श्वे ।
ऐं ह्रीं श्रीं ह्सौः घं पं पशुपतिधर्मप्रशमनीभ्यां नमः वामपार्श्वे ।
ऐं ह्रीं श्रीं ह्सौः ङं नं उग्रपंक्तिनासाभ्यां नमः दक्षबाहौ ।
ऐं ह्रीं श्रीं ह्सौः चं धं महादेवचन्द्रार्धधारिणीभ्यां नमः वामबाहौ ।
ऐं ह्रीं श्रीं ह्सौः छं दं भीमछन्दोमयीभ्यां नमः कंठे ।
ऐं ह्रीं श्रीं ह्सौः जं थं ईशानजगत्स्थानाभ्यां नमः ऊर्ध्वास्ये ।
ऐं ह्रीं श्रीं ह्सौः झं तं तत्पुरुषज्वलत्ताराभ्यां नमः पूर्वास्ये ।
ऐं ह्रीं श्रीं ह्सौः ञं णं अघोरज्ञानफलप्रदाभ्यां दक्षिणास्ये ।
ऐं ह्रीं श्रीं ह्सौः टं ढं सद्योजातटङ्कधराभ्यां नमः पश्चिमास्ये ।
ऐं ह्रीं श्रीं ह्सौः ठं डं वामदेवटङ्कारडामरीभ्यां नमः वामास्ये ।
ऐं ह्रीं श्रीं ह्सौः यं ब्रह्मायक्षिणीभ्यां नमः मूलाधारे ।
ऐं ह्रीं श्रीं ह्सौः रं प्रजापतिरंजिनीभ्यां नमः स्वाधिष्ठाने ।
ऐं ह्रीं श्रीं ह्सौः लं वेधाः लक्ष्मीभ्यां नमः मणिपूरे ।
ऐं ह्रीं श्रीं ह्सौः वं परमेष्ठिवज्रिणीभ्यां नमः अनाहते ।
ऐं ह्रीं श्रीं ह्सौः शं पितामहशशिधारिणीभ्यां नमः विशुद्धौ ।
ऐं ह्रीं श्रीं ह्सौः षं विधातृषडाधाराभ्यां नमः आज्ञायाम् ।
ऐं ह्रीं श्रीं ह्सौः सं विरिञ्चिसर्वनायिकाभ्यां नमः इन्दौ ।
ऐं ह्रीं श्रीं ह्सौः हं स्रष्टुहसिताननाभ्यां नमः बिन्दौ ।
ऐं ह्रीं श्रीं ह्सौः ळं चतुराननललिताभ्यां नमः नादे ।
ऐं ह्रीं श्रीं ह्सौः क्षं हिरण्यगर्भक्षमाभ्यां नमः नादान्ते ।
ऐं ह्रीं श्रीं ह्सौः अं ... ... क्षं हरिहरब्रह्माख्यत्रिमूर्त्यात्मिकायै पराम्बादेव्यै नमः सर्वाङ्गे व्यापकम् ॥ ५२-६४ ॥

**मूर्तिन्यासं विधायेत्थं मन्त्रन्यासं समाचरेत् ॥ ६४ ॥**
**त्रितारमूलं अं आं इं एकलक्षञ्च कोटि च ।**
**भेदश्च प्रणवाद्येकाक्षरात्माखिलमन्त्रतः ॥ ६५ ॥**
**ततोऽधिदेवतायै स्यात् सकलञ्च फलप्रदाम् ।**
**आयै तथैककूटेश्वर्यम्बादेव्यै नमो वदेत् ॥ ६६ ॥**
**ई उं ऊं आदि हंसादे द्विकूटं पूर्ववत् परम् ।**
**ऋं ॠं लृं आदि वह्न्यादि त्रिकूटं पूर्ववत् परम् ॥ ६७ ॥**
**लॄं एं ऐं चतुर्लक्षं चन्द्रादि पूर्ववत् परम् ।**

ओं औं अं अः पञ्चलक्षं सूर्यादि पूर्ववत् परम् ॥ ६८ ॥
कं खं गं चैव षड्लक्षं स्कन्दादि पूर्ववत् परम्।
घं ङं चं सप्तलक्षं गणेशादि पूर्ववत् परम्॥ ६९ ॥
छं जं झं अष्टलक्षं वटुकादि पूर्ववत् परम्।
ञं टं ठं नवलक्षञ्च ब्रह्मादि पूर्ववत् परम् ॥ ७० ॥
डं ढं णं दशलक्षञ्च विष्ण्वादि पूर्ववत् परम्।
तं थं दं एकादशलक्षं रुद्रादि पूर्ववत् परम् ॥ ७१ ॥
धं नं पं द्वादशलक्षं वाण्यादि पूर्ववत् परम्।
फं बं भं त्रयोदशलक्षं लक्ष्म्यादि पूर्ववत् परम् ॥ ७२ ॥
मं यं रं चतुर्दशलक्षं गौर्य्यादि पूर्ववत् परम् ।
लं वं शं पञ्चदशलक्षं दुर्गादि पूर्ववत् परम्।
षं सं हं लं क्षं षोडशलक्षं त्रिपुरादि च षोडशा ॥ ७३ ॥
अक्षरात्मा खिलमन्त्राधिदेवतायै सकलं ततः।
तथा फलप्रदायै च षोडश कूटेश्वरी पुनः ॥ ७४ ॥
अम्बादेव्यै नमः प्रोक्तो मन्त्रन्यासो महेश्वरि।
आधारलिङ्गयोर्नाभिहृत्कण्ठे नेत्रयोरपि ॥ ७५ ॥
निबोधिकायामर्द्धेन्दौ बिन्दौ चैव कलापदे।
उन्मन्यां विष्णुवक्त्रे च नादे नादान्त एव च।
ध्रुवमण्डलदेशे च विन्यसेत् कुलनायिके ॥ ७६ ॥
त्रितारमूलमन्त्रान्ते सर्वमन्त्रात्मिकापदम्।
आयै पराम्बादेव्यै च हृदये व्यापकं न्यसेत् ॥ ७७ ॥

(४) मन्त्रन्यास—

पूर्ववत् निम्न मन्त्रों के आदि में 'ऐं ह्रीं श्रीं ह्सौः' जोड़कर न्यास करे। यथा—

अं आं इं एकलक्षकोटिभेदप्रणवाद्येकाक्षरात्मिकायै नमः अखिलमन्त्राधि देवतायै नमः सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः मूलाधारे ।

ईं उं ऊं द्विलक्षकोटिभेदहंसादिद्व्यक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै नमः सकलफलप्रदायै द्विकूटेश्वर्यम्बादेव्यै नमः लिङ्गे ।

ऋं ॠं लृं त्रिलक्षकोटिभेदवह्न्यादित्र्यक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रिकूटेश्वर्यम्बादेव्यै नमः नाभौ ।

ॡं एं ऐं चतुर्लक्षकोटिभेदचन्द्रादिचतुरक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुःकूटेश्वर्यम्बा देव्यै नमः हृदये ।

ओं औं अं अः पञ्चलक्षकोटिभेदसूर्यादिपञ्चाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चकूटेश्वर्यम्बादेव्यै नमः कण्ठे ।

कं खं गं षड्लक्षकोटिभेदस्कन्दादिषडक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै षट्कूटेश्वर्यम्बादेव्यै नमः मुखे ।

घं ङं चं सप्तलक्षकोटिभेदगणेशादिसप्ताक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै सप्तकूटेश्वर्यम्बादेव्यै नमः नेत्रयोः ।

छं जं झं अष्टलक्षकोटिभेदवटुकाद्यष्टाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै अष्टकूटेश्वर्यम्बादेव्यै नमः आज्ञायाम् ।

ञं टं ठं नवलक्षकोटिभेदब्रह्मादिनवाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै नव कूटेश्वर्यम्बा देव्यै नमः इन्दौ ।

डं ढं णं दश लक्ष कोटि भेद विष्ण्वादि दशाक्षरात्मिकायै नमः अखिल मन्त्राधि देवतायै सकल फल प्रदायै दश कूटेश्वर्यम्बा देव्यै नमः बिन्दौ ।

तं थं दं एकादश लक्ष कोटि भेद रुद्राद्येकादशाक्षरात्मिकायै नमः अखिल मन्त्राधि देवतायै सकल फलप्रदायै एकादशकूटेश्वर्यम्बा देव्यै नमः कलायां ।

धं नं पं द्वादशलक्षकोटिभेदसारस्वत्यादिद्वादशाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै द्वादशकूटेश्वर्यम्बादेव्यै नमः उन्मन्याम् ।

फं बं भं त्रयोदशलक्षकोटिभेदलक्ष्म्यादित्रयोदशाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै त्रयोदशकूटेश्वर्यम्बादेव्यै नमः शिरोवृत्ते ।

मं यं रं चतुर्दशलक्षकोटिभेदगौर्यादिचतुर्दशाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै चतुर्दशकूटेश्वर्यम्बादेव्यै नमः नादे ।

लं वं शं षं पञ्चदशलक्षकोटिभेददुर्गादिपञ्चदशाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै पञ्चदशकूटेश्वर्यम्बादेव्यै नमः नादान्ते ।

सं हं ळं क्षं षोडशलक्षकोटिभेदत्रिपुरादिषोडशाक्षरात्मिकायै नमः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै षोडशकूटेश्वर्यम्बादेव्यै नमः ब्रह्मरन्ध्रे ।

अं.....क्षं सर्वमन्त्रात्मिकायै पराम्बादेव्यै नमः सर्वाङ्गे व्यापकं ।। ६४-७७।।

**मन्त्रन्यासं विधायेत्थं दैवतन्यासमाचरेत् ।**
**त्रितारमूलमन्त्रान्ते अं आं सहस्रकोटि च ।। ७८ ।।**
**योगिनीकुलशब्दान्ते सेवितायै पदं वदेत् ।**
**निवृत्त्यम्बापदं देव्यै नम इत्युच्चरेत् प्रिये ।। ७९ ।।**
**इं ईं योगिनीप्रतिष्ठां शेषं पूर्ववदुच्चरेत् ।**
**उं ऊं तपस्वि विद्याञ्च शेषं पूर्ववदुच्चरेत् ।। ८० ।।**

ॠं ॠं शान्तं तथा शान्तिं शेषं पूर्ववदुच्चरेत् ।
लृं ॡं मुनिं शान्त्यतीतां शेषं पूर्ववदुच्चरेत् ॥ ८१ ॥
एं ऐं देवञ्च हृल्लेखां शेषं पूर्ववदुच्चरेत् ।
ओं औं राक्षसशब्दान्ते गगनां पूर्ववत् परम् ।
अं अः विद्याधरं रक्तां शेषं पूर्ववदुच्चरेत् ॥ ८२ ॥
कं खं सिद्धिमहोच्छुष्मां शेषं पूर्ववदुच्चरेत् ।
गं घं साध्यकरालाञ्च शेषं पूर्ववदुच्चरेत् ॥ ८३ ॥
ङं चं साप्सरसं जयां शेषं पूर्ववदुच्चरेत् ।
छं जं गन्धर्वविजयां शेषं पूर्ववदुच्चरेत् ॥ ८४ ॥
झं ञं गुह्यकशब्दान्ते अजितां शेषं पूर्ववत् परम् ।
टं ठं यक्षापराजितां शेषं पूर्ववदुच्चरेत् ॥ ८५ ॥
डं ढं किन्नरवामाञ्च शेषं पूर्ववदुच्चरेत् ।
णं तं पन्नगज्येष्ठाञ्च शेषं पूर्ववदुच्चरेत् ॥ ८६ ॥
थं दं चं पितृरौद्राम्बां शेषं पूर्ववदुच्चरेत् ।
धं नं गणेशमायाञ्च शेषं पूर्ववदुच्चरेत् ॥ ८७ ॥
पं फं भैरवशब्दान्ते कुण्डलीं पूर्ववत् परम् ।
बं भं वटुक कालीञ्च शेषं पूर्ववदुच्चरेत् ॥ ८८ ॥
मं यं क्षेत्रेशशब्दान्ते कालरात्रिञ्च पूर्ववत् ।
रं लं प्रमथभगवतीं शेषं पूर्ववदुच्चरेत् ॥ ८९ ॥
वं शं ब्रह्मसर्वेश्वरीं शेषं पूर्ववदुच्चरेत् ।
षं सं विष्णुञ्च सर्वज्ञां शेषं पूर्ववदुच्चरेत् ॥ ९० ॥
हं ळं रुद्रसर्वकर्त्रीं शेषं पूर्ववदुच्चरेत् ।
क्षं चराचरशक्तिञ्च शेषं पूर्ववदुच्चरेत् ॥ ९१ ॥
अङ्गुष्ठगुल्फजंघासु जानूरुकटिपार्श्वके ।
स्तनकक्ष करस्कन्धकर्णमूर्द्धस्वपि क्रमात् ॥ ९२ ॥
दक्षभागदिवामान्तं विन्यसेत् कुलनायिके ।
त्रितारमूलमन्त्रान्ते सर्वदेवात्मिकां पदम् ॥ ९३ ॥
आयै पराम्बादेव्यै च हृदये व्यापकं न्यसेत् ।

**( ५ ) दैवतन्यास—**

मन्त्रन्यास के अनन्तर निम्न प्रकार से (२६ स्थानों में) देवता न्यास करना चाहिए । पूर्ववत् निम्न मन्त्रों के आदि में 'ऐं ह्रीं श्रीं ह्सौः' जोड़ ले—

अं आं सहस्रकोटियोगिनीकुलसेवितायै निवृत्त्यम्बादेव्यै नमः दक्षिणपादांगुष्ठे

इं ईं सहस्रकोटियोगिनीकुलसेवितायै प्रतिष्ठाम्बादेव्यै नमः दक्षगुल्फे ।
उं ऊं सहस्रकोटितपस्विकुलसेवितायै विद्याम्बादेव्यै नमः दक्षजंघायाम् ।
ऋं ॠं सहस्र कोटिऋषिकुलसेवितायै शान्त्यम्बा देव्यै नमः दक्षजानुनि ।
ॡं ॡं सहस्रकोटिमुनिकुल सेवितायै शान्त्यतीताम्बादेव्यै नमः दक्षोरौ ।
एं ऐं सहस्रकोटिदेवकुलसेवितायै हल्लेखाम्बा देव्यै नमः दक्षकट्यां ।
ओं औं सहस्रकोटिराक्षसकुलसेवितायै गगनाम्बादेव्यै नमः दक्ष पार्श्वे ।
अं अः सहस्रकोटिविद्याधरकुलसेवितायै रक्ताम्बादेव्यै नमः दक्षस्तने ।
कं खं सहस्रकोटिसिद्धकुलसेवितायै महोच्छुष्माम्बादेव्यै नमः दक्षकक्षे ।
गं घं सहस्रकोटि साध्यकुलसेवितायै करालाम्बादेव्यै नमः दक्षकरे ।
ङं चं सहस्रकोटिसाप्सरकुलसेवितायै जयाम्बादेव्यै नमः दक्षस्कन्धे ।
छं जं सहस्रकोटिगन्धर्वकुलसेवितायै विजयाम्बादेव्यै नमः दक्षकर्णे ।
झं ञं सहस्रकोटिगुह्यककुलसेवितायै अजिताम्बादेव्यै नमः दक्षशिरसि ।
टं ठं सहस्रकोटियक्षकुलसेवितायै अपराजिताम्बादेव्यै नमः वामशिरसि ।
डं ढं सहस्रकोटि किन्नरकुलसेवितायै वामाम्बादेव्यै नमः वामकर्णे ।
णं तं सहस्रकोटिपन्नगकुलसेवितायै ज्येष्ठाम्बादेव्यै नमः वामस्कन्धे ।
थं दं सहस्रकोटिपितृकुलसेवितायै रौद्राम्बा देव्यै नमः वामकरे ।
धं नं सहस्रकोटिगणेशकुलसेवितायै मायाम्बादेव्यै नमः वाम कक्षे ।
पं फं सहस्रकोटिभैरवकुलसेवितायै कुण्डलिन्यम्बादेव्यै नमः वामस्तने ।
बं भं सहस्र कोटिबटुककुलसेवितायै काल्यम्बादेव्यै नमः वामपार्श्वे ।
मं यं सहस्रकोटिक्षेत्रपालकुलसेवितायै कालरात्र्यम्बादेव्यै नमः वामकट्यां ।
रं लं सहस्रकोटिप्रमथकुलसेवितायै भगवत्यम्बा देव्यै नमः वामोरौ ।
वं शं सहस्रकोटिब्रह्मकुलसेवितायै सर्वेश्वर्यम्बादेव्यै नमः वामजानुनि ।
षं सं सहस्रकोटिविष्णुकुलसेवितायै सर्वज्ञाम्बादेव्यै नमः वाम जंघायाम् ।
हं ळं सहस्रकोटिरुद्रकुलसेवितायै सर्वकर्त्र्यम्बादेव्यै नमः वामगुल्फे ।
क्षं सहस्रकोटिचराचरकुलसेवितायै कुलशक्त्यम्बादेव्यै नमः वामपादांगुष्ठे ।
अं आं ... ... ... क्षं सर्वदेवतात्मिकायै पराशक्त्यम्बादेव्यै नमः सर्वाङ्गे व्यापकं ॥ ७८-९४ ॥

देवन्यासं विधायेत्थं मातृकान्यासमाचरेत् ॥ ९४ ॥
त्रितारमूलमन्त्रान्ते कवर्गानन्तकोटिभू ।
चरीकुलसेवितायै आं क्षां हि मङ्गलापदम् ॥ ९५ ॥

अम्बादेव्यै नमो ब्रूयादां क्षां ब्रह्माण्यतः परम् ।
अम्बादेव्यै ततोऽनन्तकोटिभूतं कुलं वदेत् ॥ ९६ ॥
सहितायै ततो मङ्गलनाथाय अं क्षं वदेत् ।
अं क्षं असिताङ्गभैरवनाथाय नम उच्चरेत् ॥ ९७ ॥
चवर्गं खेचरीं ईं लां चर्चिकाञ्च महेश्वरीम् ।
वेतालं इं लं चर्चिकं रुरुं शेषञ्च पूर्ववत् ॥ ९८ ॥
टवर्ग पातालचरीं ऊं हां योगेश्वरीं वदेत् ।
कौमारीञ्च पिशाचञ्च उं हं योगेशचण्डकौ ॥ ९९ ॥
तवर्गं दिक्चरीं ॠं सां हरसिद्धाञ्च वैष्णवीम् ।
अपस्मारं ऋं सं हरसिद्धक्रोधादिपूर्ववत् ॥ १०० ॥
पवर्गं सहचरीं ॡं षां भट्टि वाराह्यतः परम् ।
ब्रह्मराक्षसकं ऌं षां भट्टोन्मत्तादि पूर्ववत् ॥ १०१ ॥
यवर्ग स्याद्गिरिचरीं ऐं शां किलकिलेति च ।
इद्राणीं चेटकं एं शं किलिः कापालिकस्तथा ॥ १०२ ॥
शवर्गं स्यात् वनचरीं औं वां कालादिरात्रि च ।
चामुण्डां प्रेतं ओं वं च कालरात्रिश्च भीषणः ॥ १०३ ॥
लं क्षं जलचरीं अः लां वदेत् वश्चश्च भीषणाम् ।
महालक्ष्मीं शाकिनीश्च अं लं पश्चाच्च भीषणम् ॥ १०४ ॥
संहारभैरवञ्चैव शेषं पूर्ववदुच्चरेत् ।
मूलाधारलिङ्गनाभिष्वनाहतविशुद्धयोः ॥ १०५ ॥
आज्ञाभाल तलब्रह्मरन्ध्रेष्वेवं प्रविन्यसेत् ।
त्रितारमूलमन्त्रान्ते मातृभैरवशब्दतः ॥ १०६ ॥
अधिपायै पराम्बा देव्यै नमो व्यापकं न्यसेत् ।
मातृन्यास महेशानि कुर्यादेवं समाहितः ॥ १०७ ॥

( ६ ) मातृकान्यास—

देवता न्यास कहा गया । अब छठवाँ मातृकान्यास कहते हैं । निम्नलिखित प्रत्येक मन्त्र के आदि में 'ऐं ह्रीं श्रीं हसौः' जोड़कर न्यास करे। यथा—

कं खं गं घं अनन्तकोटिभूचरीकुलसहितायै आं क्षां मङ्गलाम्बादेव्यै नमः आं क्षां ब्रह्माण्यम्बादेव्यै अनन्तकोटिभूतकुलसहितायै अं क्षं मङ्गलनाथाय अं क्षं असिताङ्गभैरवनाथाय नमः मूलाधारे ।

चं छं जं झं अनन्तकोटिखेचरीकुलसहितायै ईं लां चर्चिकाम्बादेव्यै ईं लां

माहेश्वर्यम्बादेव्यै अनन्तकोटिवेतालकुलसहितायै इं लं चर्चिकनाथाय इं लं रुरुभैरव-नाथाय नमः लिङ्गे ।

टं ठं डं ढं अनन्तकोटिपातालखेचरीकुलसहितायै ऊं हां योगेश्वर्यम्बादेव्यै ऊं हां कौमार्यम्बादेव्यै अनन्तकोटिपिशाचकुलसहितायै उं हं योगेशनाथाय टं हं चण्डभैरवनाथाय नमः नाभौ ।

तं थं दं धं अनन्तकोटिदिक्चरीकुलसहितायै ॠं सां हरसिद्धाम्बादेव्यै ॠं सां वैष्णव्यम्बादेव्यै अनन्तकोट्यपस्मारसहितायै ऋं सं हरसिद्धनाथाय ऋं सं क्रोधभैरव- नाथाय नमः हृदये ।

पं फं बं भं अनन्तकोटिसहचरीकुलसहितायै ॡं षां भट्टिन्यम्बा देव्यै ॡं षां वाराह्यम्बादेव्यै अनन्तकोटिब्रह्मराक्षसकुलसहितायै ऌं षं भट्टिनाथाय ऌं षं उन्मत्तभैरवनाथाय नमः कण्ठे ।

यं रं लं वं अनन्तकोटिगिरिचरीकुलसहितायैं ऐं शां किलिकिलाम्बादेव्यै ऐं शां इन्द्राण्यम्बादेव्यै अनन्तकोटिचेटककुलसहितायै एं शं किलिकिलिनाथाय एं शं कपालीभैरवनाथाय नमः आज्ञायाम् ।

शं षं सं हं अनन्तकोटिवनचरीकुलसहितायै औं वां कालरात्र्यम्बादेव्यै औं वां चामुण्डाम्बादेव्यै अनंतकोटिप्रेतकुलसहिताय ओं वं कालरात्रिनाथाय ओं वं भीषणभैरवनाथाय नमः भाले ।

लं क्षं अनन्तकोटिजलचरीकुलसहितायै अः लां भीषणाम्बादेव्यै अः लां महालक्ष्म्यम्बादेव्यै अनन्तकोटिकूष्माण्डकुलसहितायै अं लं भीषणनाथाय अं लं संहारभैरवनाथाय नमः ब्रह्मरन्ध्रे ।

अं आं ... ... ... ... क्षं मातृभैरवाधिपायै पराम्बादेव्यै नमः सर्वाङ्गे व्यापकम् । हे महेशानि ! इस प्रकार से समाहित बुद्धि से साधक को मातृकान्यास करना चाहिए ॥ ९४-१०७ ॥

**विमर्श**—श्लोक में १०४ में शाकिनी के स्थान पर सम्भवतः कूष्माण्डकुल पाठ होगा ।

**एवं न्यस्ततनुर्देवि ध्यायेद्देवमनन्यधीः ।**
**अमृतार्णवमध्योद्यन्मणिद्वीपे सुशोभिते ॥ १०८ ॥**
**कल्पवृक्षवनान्तःस्थमणि माणिक्यमण्डपे ।**
**नवरत्नमय श्रीमत्सिंहासनगतेम्बुजे ॥ १०९ ॥**
**त्रिकोणान्तःसमासीनं चन्द्रसूर्यायुतप्रभम् ।**
**अर्द्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ॥ ११० ॥**

हे देवि ! इस प्रकार से छः न्यास से समन्वित देह द्वारा साधक अनन्य मानस होकर भगवान् शिव एवं शक्ति का अर्धनारीश्वर के रूप में ध्यान करे ।

**अर्धनारीश्वर ध्यान**—अमृतसागर के मध्य में उभरा हुआ मणिद्वीप सुशोभित है । उसमें कल्पवृक्षों के वन के अन्तर्गत नवमाणिक्यों से बना मण्डप है। उस मण्डप में नवरत्नजटित सुन्दर सिंहासन पर कमल की त्रिकोणाकार कर्णिका में चन्द्रसूर्य से शोभायमान और आधे शरीर में अम्बिका से युक्त भगवान् शिव विराजमान हैं । दोनों के विशेष आभूषण उनके शरीरों में अलग-अलग शोभित हैं ।। १०७-११०।।

**कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ।**
**मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम् ॥ १११ ॥**
**दिव्याम्बरस्त्रगालेपं दिव्याभरणभूषितम् ।**
**पानपात्रञ्च चिन्मुदां त्रिशूलं पुस्तकं करैः ॥ ११२ ॥**
**विद्यासंसिद्धिं बिभ्राणां सदानन्दमुखेक्षणम् ।**
**महाषोढोदिताशेषदेवतागणसेवितम् ॥ ११३ ॥**
**एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ।**

करोड़ों कामदेवों के समान सुन्दर और सदा सोलह वर्ष की अवस्था वाले अर्द्धनारीश्वर भगवान् का मुखकमल मन्द मुस्कान से युक्त है, तीन नेत्र हैं और चूड़ा चन्द्रमा से शोभायमान है । दिव्य वस्त्र, आभूषण, पुष्पमाला और चन्दन धारण किए हैं । चार हाथों में पानपात्र, चिन्मुद्रा, त्रिशूल और पुस्तक लिए हैं । विद्याओं और सिद्धियों से युक्त वे सदा आनन्दपूर्ण हैं । महाषोढा में उल्लिखित असंख्य देवता सदैव उनकी सेवा में लगे रहते हैं । ऐसे अर्द्ध-नारीश्वर भगवान् शिव का ध्यान अपने हृदयकमल में करे ॥ १११-११४ ॥

**पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ॥ ११४ ॥**
**अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम् ।**
**सवतेज़ोमयं देवि सचराचरविग्रहम् ॥ ११५ ॥**

**पुं, स्त्री या निष्कल रूप का ध्यान**—हे देवि ! अर्द्धनारीश्वर का ध्यान चाहे पुं रूप में करे या स्त्री रूप में अथवा सच्चिदानन्दरूप निष्कल स्वरूप का ध्यान करे, हे देवि ! वह सर्वतेजोमय और चराचरात्मक विग्रह वाले हैं ॥ ११४-११५ ॥

**ततः सन्दर्शयेन्मुद्रादशकं परमेश्वरि ।**
**योनि लिङ्गञ्च सुरभि हेतिमुद्राचतुष्टयम् ॥ ११६ ॥**

**वनमालां महामुद्रां नभोमुद्रामिति क्रमात् ।**
**यथाशक्ति मन्त्रमूलं जपेत् श्रीपादुकामपि ।**
**मूर्ध्नि सञ्चिन्तयेद्देवि श्रीगुरुं शिवरूपिणम् ॥ ११७ ॥**

**मुद्राओं का प्रदर्शन**—हे परमेश्वरि ! फिर योनि, लिङ्ग, सुरभि, हेति, आदि चार मुद्राएं तथा वनमाला, महामुद्रा एवं नभो मुद्रा दिखाकर यथाशक्ति मूलमन्त्र का जप कर श्री पादुका मन्त्र का भी जप करे । हे देवि ! इसके बाद शिवरूपी श्रीगुरु का मूर्धा में न्यास करना चाहिए ॥ ११६-११७ ॥

**सहस्रदलपङ्कजे सकलशीतरश्मिप्रभम्**
**वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम् ।**
**प्रसन्नवदनेक्षणं सकलदेवतारूपिणम्**
**स्मरेत् शिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ ११८ ॥**

**शिवरूपी गुरु का ध्यान**—सहस्रदलकमल पर विराजमान शीतल रश्मि की प्रभा से युक्त, वर एवं अभय मुद्रा धारण करने वाले, विमल गन्ध एवं पुष्प के वस्त्र से सुसज्जित, प्रसन्न वदन एवं प्रसन्न दिखने वाले और सभी देवता के साक्षात् रूप में विद्यमान तथा हंस पर सवार अमुक नाम वालो शिवरूपी गुरु का शिर में ध्यान करना चाहिए ॥ ११८ ॥

**एवं न्यासे कृते देवि साक्षात् परशिवो भवेत् ।**
**मन्त्री नैवात्र सन्देहो निग्रहानुग्रहक्षमः ॥ ११९ ॥**

**महाषोढान्यास का फल**—हे देवि ! इस प्रकार षोढान्यास जो करता है, हे पार्वति ! वह साक्षात् परशिव के समान होता है । वह मन्त्रज्ञ साधक निग्रह और अनुग्रह करने में समर्थ होता है, इसमें सन्देह नहीं ॥ ११९ ॥

**महाषोढाह्वयं न्यासं यः करोति दिने दिने ।**
**देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ॥ १२० ॥**

जो साधक प्रतिदिन 'महाषोढा' नामक न्यास को करता है सभी देवता उसे नमस्कार करते हैं । मैं भी उसे नमस्कार करता हूँ, इसमें सन्देह नहीं ॥ १२० ॥

**महाषोढाह्वयं न्यासं करोति यत्र पार्वति ।**
**दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥ १२१ ॥**

हे पार्वति ! जहाँ 'महाषोढान्यास' किया जाता है, वह स्थान और उसके चारों ओर दश योजन तक का स्थान दिव्य क्षेत्र माना जाता है ॥ १२१ ॥

कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः ।
तत्र स्याद्विजयो लाभः सम्मानः पौरुषं प्रिये ॥ १२२ ॥

हे देवि ! इस न्यास को कर साधक जहाँ कहीं जाता है, उसे विजय, लाभ, सम्मान और गौरव प्राप्त होता है ॥ १२२ ॥

महाषोढाकृतन्यासस्तेन यो वन्द्यते शिवे ।
षण्मासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयम् ॥ १२३ ॥
वज्रपञ्जरनामानमेतं न्यासं करोति यः ।

हे शिवे ! महाषोढान्यास करने वाला जिसकी वन्दना करता है, वह छः महीने के भीतर मृत्यु को प्राप्त करता है, भले ही स्वयं शिव उसके रक्षक हों । अतः इसी का नाम 'वज्रपञ्जरन्यास' है ॥ १२३-१२४ ॥

दिव्यन्तरीक्षभूशैलजलारण्यनिवासिनः ॥ १२४ ॥
प्रचण्डभूतवेतालदेवरक्षोग्रहादयः ।
भयग्रस्तेन मनसा नेक्षन्ते तं कुलेश्वरि ॥ १२५ ॥

इस न्यास को जो करता है, उससे दिव्य लोक, अन्तरिक्ष, भूमि, पर्वत, जल और वन में रहने वाले प्रचण्ड भूत, वेताल, देव, राक्षस, ग्रह आदि भयभीत रहते हैं तथा हे कुलेश्वरि ! उसे देखने में भी डरते हैं ॥ १२४-१२५॥

महाषोढाकृतन्यासं ब्रह्माविष्णुशिवादयः ।
देवाः सर्वे नमस्यन्ति ऋषयोऽपि मुनीश्वराः ॥ १२६ ॥

महाषोढान्यास करने वाले को ब्रह्मा,विष्णु एवं शिव आदि देवता और ऋषि, मुनि आदि सभी नमस्कार करते हैं ॥ १२६ ॥

बहुनोक्तेन किं देवि न्यासमेतं मम प्रियम् ।
नापुत्राय वदेद्देवि नाशिष्याय प्रकाशयेत् ॥ १२७ ॥

अधिक कहने से क्या लाभ, हे देवि ! यह न्यास मुझे बहुत प्रिय है अतः इसे अनधिकारी शिष्य को अथवा अपने पुत्र को भी नहीं बताना चाहिए ॥ १२७ ॥

आज्ञासिद्धिमवाप्नोति तस्मान्न्यासं समाचरेत् ।
अस्मात् परतरा रक्षा देवताभावसिद्धिदा ।
लोके नास्ति न सन्देहः सत्यं सत्यं वरानने ॥ १२८ ॥
ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिन्तनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ॥ १२९ ॥

इस न्यास से आज्ञासिद्धि प्राप्त होती है अतः इस न्यास को करना चाहिए । हे वरानने ! देवताभाव की सिद्धि के लिए इस न्यास से बढ़ कर संसार में और कोई रक्षाकवच नहीं है, यह मैं सत्य कहता हूँ । ऊर्ध्वाम्नाय में प्रवेश, पराप्रासाद का ध्यान और महाषोढा का ज्ञान—यह थोड़ी तपस्या का फल नहीं है ॥ १२८-१२९ ॥

**इति ते कथितं देवि मन्त्रोद्धारादिकं प्रिये।**
**समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि॥ १३० ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे माहाषोढा-कथनं नाम चतुर्थोल्लासः ॥ ४ ॥**



हे कुलेशानि ! यह संक्षेप में मैंने कुछ महान्यासादि आपसे कहा है । अब आप और क्या सुनना चाहती हैं ? ॥ १३० ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में महाषोढाकथन नामक चतुर्थ उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ ४ ॥**



# अथ पञ्चमोल्लास:

श्रीदेव्युवाच

कुलेशाधारपात्राणां पिशितानाञ्च लक्षणम् ।
कुलद्रव्यस्य निर्माणं भेदं माहात्म्यमेव च ॥ १ ॥
अविधानेन यत् पापं सविधानेन यत् फलम् ।
तत् सर्वं श्रोतुमिच्छामि वद मे करुणानिधे ॥ २ ॥

**आधार, पात्र और कुलद्रव्य आधारपात्रादिसम्बन्धी प्रश्न**—श्री देवी ने कहा—हे कुलेश ! आधारपात्रों और मांसों के लक्षण तथा कुलद्रव्य के निर्माण एवं उनके भेदों तथा माहात्म्य को कहिए । अविधि से किए गए कर्म का जो पाप होता है और सविधि से कृत कर्म का जो फल मिलता है, हे करुणानिधे ! मैं वह सब सुनना चाहती हूँ कृपा कर उसे कहिए ॥ १-२ ॥

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण त्रिदशैः समतां व्रजेत् ॥ ३ ॥

**आधार की आवश्यकता**—ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने पूछा है, उसे मैं कहूँगा । उसके सुनने मात्र से साधक देवताओं के समान होता है ॥ ३ ॥

आधारेण विना भ्रंशो न च तृप्यन्ति मातरः ।
तस्माद्विधिवदाधारं कल्पयेत् कुलनायिके ॥ ४ ॥

बिना आधार पात्र के कर्म भ्रंश माना जाता है, जिससे योगिनी आदि माताएँ तृप्त नहीं होतीं । अत: कुलनायिके ! विधिवत् आधार पात्र की रचना कर लेनी चाहिए ॥ ४ ॥

आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदम् ।
अथवा वर्तुलाकारं कुर्याद्देवि मनोहरम् ॥ ५ ॥
स्वर्णरौप्यशिलाकूर्मकपालालाबुमृण्मयम् ।
नारिकेलशङ्खताम्रमुक्ताशुक्तिसमुद्भवम् ॥ ६ ॥

**पुण्यवृक्ष समुद्भूतं पात्रं कुर्याद्विचक्षणः ।**
**अतिसूक्ष्ममतिस्थूलं छिन्नं भिन्नञ्च वर्जयेत् ॥ ७ ॥**

**पात्र प्रमाण एवं पात्र बनाने के पदार्थ**—हे देवि ! आधार पात्र त्रिपद कहा गया है, अथवा चतुष्पद, षट्पद या वर्तुलाकार सुन्दर बनवाना चाहिए । विद्वान् साधक स्वर्ण, चाँदी, पत्थर, कूर्म, कपाल, लौकी, मिट्टी, नारिकेल, शङ्ख, ताम्र, मुक्ता, सीप या पवित्र वृक्षों की लकड़ी के पात्र बनाये । पात्र बहुत बड़ा या बहुत छोटा अथवा टूटा फूटा न ले ॥ ६-७ ॥

**सुवर्णरौप्यताम्राणि सर्वसिद्धकराणि च ।**
**शान्तिके च शिलापात्रं स्तम्भने चैव मृण्मयम् ॥ ८ ॥**
**नारिकेलञ्च वश्ये स्यादभिचारे च कूर्मजम् ।**
**शङ्खं ज्ञानप्रदं शुक्तिर्देवीप्रीतिप्रदायिनी ॥ ९ ॥**
**कपालालाबुपात्राणि योगसिद्धिकराणि च ।**
**पुण्यवृक्षज पात्राणि सर्वपापहराणि च ।**
**उक्तेष्वेतेषु देवेशि पात्रमेकं प्रकल्पयेत् ॥ १० ॥**

**कामनाभेद से पात्र प्रयोग**—स्वर्ण, रौप्य (चाँदी) और ताम्र के पात्र सभी सिद्धियों के देने वाले हैं । शान्तिकर्म में पत्थर का पात्र, स्तम्भन में मिट्टी का, वश्य में नारिकेल का और अभिचार में कूर्म का पात्र प्रशस्त है । शङ्ख पात्र ज्ञानप्रदायक है और शुक्ति (सीप) के पात्र से देवी की प्रसन्नता होती है । कपाल, आलावु और पवित्र वृक्षों की लकड़ी के पात्र योगसिद्धि प्रदान करने वाले और सब पापों का हरण करने वाले होते हैं । हे देवेशि ! इनमें से किसी एक पात्र की रचना करे ॥ ८-१० ॥

**कुलद्रव्यं प्रवक्ष्यामि शृणु देवि समाहिता ।**
**अम्भसां द्वादशप्रस्थं प्रस्थार्द्धं तक्रमेव च ॥ ११ ॥**
**तण्डुलानां चतुःप्रस्थं द्विप्रस्थञ्च तथान्धसाम् ।**
**मुष्टिमात्राङ्कुरैः सार्द्धम् एकस्मिन् योजयेद् घटे ॥ १२ ॥**

**कुल द्रव्य**—हे देवि ! अब मैं कुलद्रव्यों को कहता हूँ, सावधान होकर सुनिए । बारह प्रस्थ पानी, आधा प्रस्थ तक्र, चार प्रस्थ भात, दो प्रस्थ मक्खन—इन सभी को एक घड़े में रखकर एक मुट्ठी घास के साथ रख दे ॥ १-२॥

**शीतादिरहिते स्थाने स्थापयेद्दिवसद्वयम् ।**
**तस्मादग्निं समारोप्य जम्बालसदृशं पचेत् ॥ १३ ॥**

शीतलता रहित स्थान पर दो दिन के लिए उसे स्थापित करना चाहिए ।

फिर अग्नि पर उसे चढ़ाकर तब तक पकावे जब तक सभी एक में मिलकर गाढ़ा हलुआ न बन जाए ।। १३ ।।

**अवरोप्य पुनः शीतामवस्थां प्रापयेत्ततः ।**
**पादोनप्रस्थकैः पिष्ट्वा हस्ताभ्यां मेलयेत् सुधीः ।। १४ ।।**

फिर इसे अग्नि से हटाकर ठण्डा करने के लिए छोड़ दे । फिर विद्वान् साधक एक प्रस्थ ( अंजुलि ) का चौथाई हाथों से मिलावे ।। १४ ।।

**प्रस्थार्द्धान् तण्डुलान् वाप्यपरेद्युस्तत् समुद्धरेत् ।**
**सम्यक् संमद्य तक्रेण पाकमालोड्य मेलयेत् ।**
**एषा पैष्टीति विख्याता पूजिता देवदानवैः ।। १५ ।।**

आधी अंजुली भात को इसमें मिलाकर एक दिन के लिए छोड़ दे । इसके बाद सम्यक् रूप से इसे मर्दित कर तक्र के साथ पाक को आलोडित कर मिलावे। यह 'पिष्टी' नाम से प्रसिद्ध है और यह देवता और दानवों दोनों द्वारा पूजित है ।। १५ ।।

**गौडी च श्वेतबर्बुरजम्बुत्वक्सधिताम्भसाम् ।**
**दशप्रस्थं कुलेशानि धातकीकुसुमं शुभम् ।। १६ ।।**

हे कुलेशानि ! फिर गौड़ी ( नामक मद्य के लिए ) श्वेत बर्बुर-जम्बु की छाल को पानी से धोकर और धातकी के फूल दोनों को दस अंजुलि लेना चाहिए ।। १६ ।।

**नारिकेलप्रसूनं वा चैकप्रस्थं विनिक्षिपेत् ।**
**हरीतकी चाक्षफलं वसुनिष्कप्रमाणतः ।। १७ ।।**
**वह्निं त्रिकटुकञ्चापि निष्कमार्धं क्षिपेत् पृथक् ।**
**अशीतिगुडसम्मिश्रमेकस्मिन् योजयेद् घटे ।। १८ ।।**

इसके बाद नारियल के फूल को एक प्रस्थ इसमें मिलावे । फिर हर्रै और अक्षफल (बहेड़ा) को आठ निष्क मात्रा में इसमें मिला दे । फिर वह्नि ( = नीबू ) और त्रिकटु (मरिच, पीपर, सोंठ) अलग (एक निष्क) से मिला दे। एक मिट्टी के घड़े में ८० गुड़ के साथ सभी को एक में मिला दे ।।१७-१८।।

**करेण भ्रामयेत् सम्यगनुलोमविलोमतः ।**
**अष्टोत्तरशतावृत्त्या त्रिसन्ध्यं प्रतिवासरम् ।। १९ ।।**
**द्वादशाहेन पाकः स्यात् पालयेत्तत्त्रयोदशे ।**
**एषा गौडीति कथिता शिवसायुज्यहेतुकी ।। २० ।।**

फिर हाथों से सभी द्रव्यों को उलट फेरकर एक साथ फेंट दे। यह आलोडन विलोडन प्रत्येक दिन तीनों सन्ध्याओं में करके फेंटने की १०८ आवृत्ति पूर्ण करे। बारह दिन में यह पाक तैयार हो जाता है। तेरहवें दिन इसे छान कर रख ले। शिव-सायुज्य को प्राप्त कराने वाली इस मदिरा को 'गौड़ी' कहा जाता है ॥ १९-२० ॥

**द्विगुणं मकरन्दस्य वारि संयोजयेद् घटे।**
**द्वादशाहेन पाकः स्याच्छेषमन्यत् पुरोक्तवत्।**
**एषा माध्वी समुद्दिष्टा देवताप्रीतिकारिणी ॥ २१ ॥**

**माध्वी**—शहद और इस शहद का दुगुना पानी एक घड़े में रख ले। बारह दिन में पूर्वोक्त क्रिया के सदृश इसका भी पाक हो जाता है। देवताओं को भी प्रिय लगने वाली इस मदिरा को 'माध्वी' कहा गया है ॥ २१ ॥

**एका शुण्ठी द्विवह्निश्च मरीचत्रितयं तथा।**
**धातकी च चतुष्कं स्यात् पञ्च पुष्पाणि षण्मधु ॥ २२ ॥**
**अशीतिगुडसम्मिश्रं शेषमन्यत् पुरोक्तवत्।**
**इदं मनोहरं द्रव्यं योगिनीपानमुत्तमम् ॥ २३ ॥**

एक भाग शुण्ठी, दो भाग वह्नि ( चित्रक ), मरिच तीन भाग, धातकी चार भाग, फूल पाँच भाग और छः भाग मधु, अस्सी भाग गुड़ को पहले की भाँति एक में मिलावे। शेष सभी विधि पहले की तरह होती है। यह मनोहर द्रव्य योगिनियों के लिए उत्तम पेय है ॥ २२-२३ ॥

**सार्द्धेन्दुपलकं दध्नो माहिषं प्रस्थमात्रकम्।**
**मोचापक्वशतञ्चापि योगोऽयं मदिरा शुभा ॥ २४ ॥**
**तं मेलयित्वा संयोज्य सान्द्रे वंशपुटे पचेत्।**
**चत्वारिंशद्दिनान्यष्टौ पङ्के पङ्कजसम्भवे ॥ २५ ॥**
**निधायोद्धृत्य किरणैः सौरैः सम्यग् विशोषयेत्।**
**यदा च कठिनीभावस्तदा संगृह्य मानवः ॥ २६ ॥**
**गुञ्जाफलप्रमाणन्तु जलैः सम्मिलितं शुभम्।**
**आत्मेच्छं पूरयेत् पात्रं परमानन्ददं परम् ॥ २७ ॥**
**एतादप्युत्तमं द्रव्यं सर्वदेवप्रियं प्रिये।**
**एतानि मदहेतूनि मद्यान्यन्यानि कारयेत् ॥ २८ ॥**

आधा तोला दही, एक प्रस्थ भैंस का मक्खन एवं सौ कच्चे केले- इन सभी को मिलाकर अत्यन्त मधुर मदिरा बनती है। इन सभी को एक में

मिलाकर मोटे बाँस के खोह में रख दे । फिर उस बाँस के टुकड़े को ४८ दिन के लिए कमल के फूलों से भरे हुए तालाब में पकने के लिए गाड़ दे । फिर उसे निकाल कर सूर्य के प्रकाश में सूखने के लिए रख दे । जब यह कठोरता को प्राप्त करे तब इसे साधक लेकर गुञ्जाफल के प्रमाण में यथेच्छ जल में मिलाकर पीने से परमानन्द को देता है । हे प्रिये ! यह पेय सभी देवों को अत्यन्त प्रिय है । इस प्रकार ये मुख्य मदिरा हैं जिन्हें आपस में मिलाकर और भी अन्य प्रकार की मदिरा बनाई जा सकती है ॥ २४-२८ ॥

**पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ।**
**मधूत्थं शीधु माध्वीकं मैरेयं नारिकेलजम् ॥ २९ ॥**
**मद्यान्येकादशैतानि भुक्तिमुक्तिकराणि च ।**

**ग्यारह मद्यों के नाम**—१. पानस, २. द्राक्ष, ३. माधूक, ४. खार्जूर, ५. ताल, ६. ऐक्षव, ७. मधु, ८. उच्छिष्ट, ९. माध्वीक, १०. मैरेय और ११. नारिकेल—ये ग्यारह मद्य भुक्ति व मुक्ति के देने वाले हैं ॥ २९-३० ॥

**द्वादशन्तु सुरा मद्य सर्वेषामुत्तमं प्रिये ॥ ३० ॥**
**पैष्टी गौडी च माध्वी च विज्ञेया त्रिविधा सुरा ।**
**सर्वसिद्धिकरी पैष्टी गौडी भोगप्रदायिनी ॥ ३१ ॥**
**माध्वी मुक्तिकरी ज्ञेया सुरा स्याद्देवताप्रिया ।**

**बारहवें मद्य 'सुरा' के भेद एवं गुण**—हे प्रिये ! बारहवाँ मद्य 'सुरा' है, जो सबसे उत्तम है । 'सुरा' तीन प्रकार की है—१. पैष्टी, २. गौड़ी और ३. माध्वी । पैष्टी सब सिद्धियों को देने वाली, गौड़ी भोगप्रदा और माध्वी मुक्तिकारिणी है । ये तीनों 'सुरा' देवताओं को प्रिय है ॥ ३१-३२ ॥

**विद्याप्रदैक्षवी ज्ञेया द्राक्षी राज्यप्रदा भवेत् ॥ ३२ ॥**
**तालजा स्तम्भने शस्ता खार्जूरी रिपुनाशिना ।**
**नारिकेलभवा श्रीदा पानसी च शुभप्रदा ॥ ३३ ॥**
**मधूकजा ज्ञानकरी माध्वीकी रोगनाशिनी ।**
**मैरेयाख्या कुलेशानि सर्वदा पापहारिणी ॥ ३४ ॥**

ऐक्षवी विद्याप्रदा, द्राक्षी राज्यदायिनी है । तालजा स्तम्भन में प्रशस्त है और खार्जुरी शत्रुनाशिनी है । नारिकेल की बनी सुरा लक्ष्मीदायिनी और पानसी शुभकारिणी है । मधूक की बनी ज्ञानदायिनी और माध्वी रोगनाशिनी है । हे कुलेशानि ! मैरेय सर्वपापहारिणी होती है ॥ ३०-३४ ॥

**क्षीरवृक्षसमुद्भूतं मद्यं वल्कलसम्भवम् ।**
**मधुपुष्पसमुद्भूतम् आसवं तण्डुलोद्भवम् ॥ ३५ ॥**

क्षीर वृक्ष से बना मद्य, छाल वाले पेड़ से बना मद्य, मधूक ( महुवा ) के पुष्प से बना मद्य अन्य प्रकार के मद्य है ॥ ३५ ॥

**यस्यानन्दो निर्विकार आमोदश्च मनोहरः ।**
**मद्यं तदुत्तमं देवि देवानां प्रीतिदायकम् ॥ ३६ ॥**

**उत्तम मद्य के लक्षण**—जिस मद्य के पीने से विकाररहित और मन को प्रसन्नता होती है, हे देवि ! ऐसा मद्य सदैव देवताओं को प्रिय होता है ॥३६॥

**आत्मेच्छं पूरयेत् पात्रं परमानन्दवर्द्धनम् ।**
**एतदामोदकं द्रव्यं सर्वदेवप्रियं प्रिये ॥ ३७ ॥**

ऐसे मद्य से इच्छानुसार अपने पात्र को पूर्ण करे, जिससे परमानन्द की वृद्धि हो । हे प्रिये ! यह आनन्ददायक द्रव्य सभी देवों को प्रिय है ॥ ३७ ॥

**सुरादर्शनमात्रेण सर्वपापैः प्रमुच्यते ।**
**तद्गन्धाघ्राणमात्रेण शतक्रतुफलं लभेत् ॥ ३८ ॥**
**मद्यस्पर्शनमात्रेण तीर्थकोटिफलं लभेत् ।**
**देवि तत्पानतः साक्षाल्लभेन्मुक्तिं चतुर्विधाम् ॥ ३९ ॥**

सुरा को देखने मात्र से सब पापों से छुटकारा मिलता है । उसकी गन्ध को सूंघने मात्र से सौ यज्ञों का फल मिलता है । मद्य के स्पर्श मात्र से कोटि तीर्थों का पुण्य मिलता है । हे देवि ! उसे पीने से चारों प्रकार की मुक्ति साक्षात् ही प्राप्त होती है ॥ ३८-३९ ॥

**इच्छाशक्तिः सुरामोदे ज्ञानशक्तिश्च तद्रसे ।**
**तत्स्वादे च क्रियाशक्तिस्तदुल्लासे परा स्थिता ॥ ४० ॥**

**'सुरा' में इच्छा आदि शक्तियाँ**—सुरा की गन्ध में इच्छाशक्ति होती है, उसके रस में क्रियाशक्ति, उसके स्वाद में ज्ञानशक्ति और उसके उल्लास में पराशक्ति अवस्थित होती हैं ॥ ४० ॥

**मदिरा ब्रह्मगाः प्रोक्ताः चित्तशोधनसाधनाः ।**
**तासामेकां समाहृत्य पूजाकर्म समाचरेत् ॥ ४१ ॥**

**'सुरा' सेवन की विधि**—मदिरा ब्रह्म की ओर ले जाने वाली और चित्त का शोधन करने वाली कही गई है । अतः उपर्युक्त में से एक को लेकर पूजाकर्म का प्रारम्भ करना चाहिए ॥ ४१ ॥

**मत्स्य मांसादिविजयां चाष्टगन्धैः सुमिश्रिताम् ।**
**संमर्द्य वटिकां कृत्वा संगृह्याथ विचक्षणः ।**
**मद्याभावे तु वटिकां जले संयुज्य तर्पयेत् ॥ ४२ ॥**

मद्य, मांस और विजया अष्टगन्ध के साथ मर्दित कर साधक वटिका बना ले और मद्य के अभाव में इसी वटिका को जल में मिलाकर उससे तर्पण किया करे ॥ ४२ ॥

**विमर्श**—१. चन्दन, २. अगरु, ३. कर्पूर, ४. चीर, ५. कुङ्कुम, ६. रोचना, ७. जटामांसी और ८. कपि—ये अष्टगन्ध कहे गए हैं ॥ ४२ ॥

**गुडमिश्रेण तक्रेण तर्पयेत् मधुभाजिना ।**
**सौवीरेणाथवा कुर्यादितत् कर्म न लोपयेत् ।**
**प्रमादाद् यदि लुप्येत देवताशापमाप्नुयात् ॥ ४३ ॥**

अथवा गुड़ मिले दही से अथवा मधुयुक्त सौ वीर से कर्म करे । किन्तु क्रिया का लोप कदापि न करे । प्रमादवश यदि क्रिया का लोप हुआ, तो साधक को देवता का शाप लगता है ॥ ४३ ॥

**मांसन्तु त्रिविधं प्रोक्तं खभूजलचरं प्रिये ।**
**यथासम्भवमप्येकं तर्पणार्थं प्रकल्पयेत् ।**
**मांसदर्शनमात्रेण सुरादर्शनवत् फलम् ॥ ४४ ॥**

**मांस के तीन भेद**—हे प्रिये ! मांस तीन प्रकार का कहा गया है—१. खेचर का, २. भूचर का और ३. जलचर का मांस । तर्पण के लिए इन्हीं में से एक की यथासम्भव कल्पना करे । **मांस दर्शन का फल**—मांस के देखने का वही फल होता है, जो सुरा दर्शन का बताया गया है ॥ ४४ ॥

**पितृदैवतयज्ञेषु वैधहिंसा विधीयते ।**
**आत्मार्थं प्राणिनां हिंसा कदाचिन्नोदिता प्रिये ॥ ४५ ॥**

**पितर आदि के लिये हिंसा में दोष नहीं**—पितर एवं देवता के यज्ञों में वैध हिंसा की विधि है । हे प्रिये ! जो कुछ भी हो अपने लिए प्राणियों की हिंसा कभी न करे ॥ ४५ ॥

**अनिमित्तं तृणं वापि छेदयेन्न कदाचन ।**
**देवतार्थं द्विजार्थ वा हत्वा पापैर्न लिप्यते ॥ ४६ ॥**

निमित्त के बिना तिनके का भी छेदन कभी नहीं करना चाहिए । देवता या द्विज के लिए हिंसा करने से पाप नहीं लगता ॥ ४६ ॥

**मामनादृत्य यत् पुण्यं पापं स्यात् प्रतिभाषतः ।**
**मन्निमित्तं चरेत् पापं पुण्यं भवति शाम्भवि ॥ ४७ ॥**

मेरा अनादर कर जो पुण्य भी किया जाता है, वह पाप ही होता है और मेरे निमित्त किया गया पाप, हे शाम्भवि ! पुण्य में बदल जाता है ॥४७॥

**यैरेव पतनं द्रव्यैः सिद्धिस्तैरेव चोदिता ।**
**श्रीकौलदर्शने चापि भैरवेण महात्मना ॥ ४८ ॥**
**मत्कर्म कुर्वतां पुंसां कर्मलोपो भवेन्नहि (यदि) ।**
**तत्कर्म ते प्रकुर्वन्ति सप्तकोटिमुनीश्वराः ॥ ४९ ॥**

जिन पदार्थों से पतन ही होता है, उन्हीं के द्वारा सिद्धि भी मिलती है । श्रीकौलदर्शन और महान् भैरव के द्वारा इसी का विस्तार कहा गया है । मेरा कर्म करते रहने पर पर क्रिया का लोप नहीं होता क्योंकि सात करोड़ मुनि यही कर्म करते आये हैं ॥ ४८-४९ ॥

**हन्यान्मन्त्रेण चानेन त्वभिमन्त्र्य पशुं प्रिये ।**
**गन्धपुष्पाक्षतैः पूज्य चान्यथा नरकं व्रजेत् ॥ ५० ॥**

**पशु की बलि देने का मन्त्र**—हे प्रिये ! गन्ध, पुष्पाक्षत से पशु की पूजा कर निम्न मन्त्र से उसे अभिमन्त्रित कर उसकी बलि दे, अन्यथा साधक नरकगामी होता है ।

**शिवोत्कृत्तमिदं पिण्डमतस्त्वं शिवतां गतः ।**
**तद् बुध्यस्य पशो त्वं हि मा शिवस्त्वं शिवोऽसि हि ॥५१॥**
**ब्रह्मा स्यात् पलले विष्णुर्गन्धे रुद्रश्च तद्रसे ।**
**परमात्मा तदानन्दे तस्मात् सेव्यमिदं प्रिये ॥ ५२ ॥**

**मांस के अङ्गों में ब्रह्मा आदि**—मांस के जल में ब्रह्मा, गन्ध में विष्णु, रस में रुद्र और आनन्द में परमात्मा का वास है । अतः हे प्रिये ! वह सेवनीय है ॥ ५२ ॥

**मांसाभावे तु लशुनं सार्द्रकं नागरन्तु वा ।**
**आदाय पूजयेद्देवि चान्यथा निष्फलं भवेत् ॥ ५३ ॥**

**मांस के अभाव में देय पदार्थ**—मांस का अभाव होने पर लहसुन या अदरक से देवी की पूजा करे । अन्यथा पूजा निष्फल होती है ॥ ५३ ॥

**मत्स्यमांसविहीनेन मद्येनापि न तर्पयेत् ।**
**न कुर्यान्मत्स्यमांसाभ्यां विना द्रव्येण पूजनम् ॥ ५४ ॥**

**मत्स्य, मांस, मद्य का अङ्गाङ्गी सम्बन्ध**—मत्स्य और मांस से रहित केवल मद्य से तर्पण नहीं करना चाहिए । इसी प्रकार मद्य से रहित केवल मत्स्य और मांस से पूजन नहीं करना चाहिए ॥ ५४ ॥

**पिशितं तिलमात्रन्तु तिलार्द्धमपि बिन्दुना ।**
**सकृत्तर्पणमात्रेण कोटियज्ञफलं लभेत् ॥ ५५ ॥**

तिल मात्र ही मांस और केवल आधे तिल मात्र मद्यबिन्दु से एक बार भी तर्पण करने से करोड़ों यज्ञों का फल प्राप्त होता है ॥ ५५ ॥

**कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये ।**
**तस्माद् यः पूजयेद्भक्त्या भुक्तिमुक्त्योः स भाजनम् ॥५६॥**

**कुलपूजा के न करने से दोष**—कुलपूजा के समान तीनों जगत् में कोई पुण्य नहीं है अतएव जो भक्तिपूर्वक पूजा करता है, वह भुक्ति और मुक्ति को प्राप्त करता है ॥ ५६ ॥

**अनधीतोऽप्यशास्त्रज्ञो गुरुभक्तो दृढव्रतः ।**
**कुलपूजारतो यस्तु स मे प्रियतमो भवेत् ॥ ५७ ॥**

अनपढ़ और शास्त्र को न जानने वाला भी यदि गुरुभक्त और दृढव्रती होकर कुलपूजा में लगा रहता है, तो मुझे सबसे अधिक प्रिय होता है ॥ ५७॥

**चतुर्णामपि वर्णानामाश्रमाणामपीश्वरि ।**
**पुंस्त्रीनपुंसकानान्तु पूजितेष्टफलप्रदा ॥ ५८ ॥**

हे ईश्वरि ! चारों वर्णों और आश्रमों के पुरुष, स्त्री, नपुंसक सभी के द्वारा पूजित होने पर आप अभीष्ट फल को प्रदान करती हैं ॥ ५८ ॥

**इहामुत्र फलं दद्याः पूजिता सुवधूरिव ।**
**अपूजिता त्वं देवेशि दुःखदा कुवधूरिव ॥ ५९ ॥**

हे देवेशि ! पूजा किए जाने पर उत्तम वधू के समान इस लोक में और परलोक में आप शुभ फल देती हैं और पूजा न करने पर आप कुत्सित वधू के समान दुःख देती हैं ॥ ५९ ॥

**कुलपूजां विना यस्तु करोत्येवं सुदुर्मतिः ।**
**स याति नरकं घोरमेकविंशतिभिः कुलैः ॥ ६० ॥**

कुलपूजा के बिना जो दुर्बुद्धि ऐसा करता है, वह इक्कीस पीढ़ियों के साथ घोर नरक में जाता है ॥ ६० ॥

तस्मात् सर्वप्रयत्नेन कुलपूजारतो भवेत् ।
लभते सर्वसिद्धींश्च नात्र कार्या विचारणा ॥ ६१ ॥

अत: सब प्रयत्न करके कुलपूजा में लगना चाहिए, जिससे सब सिद्धियाँ मिलती हैं, इसमें सन्देह नहीं ॥ ६१ ॥

आराधनासमर्थश्चेद्द्याद्दर्चनसाधनम् ।
यो दातुं नैव शक्नोति कुर्यादर्चनदर्शनम् ॥ ६२ ॥

**कुलपूजा में असमर्थ का कर्तव्य**—कुलपूजा में यदि असमर्थ हो, तो कुल पूजन की सामग्री प्रदान करे । जो सामग्री न दे सकता हो, वह पूजन का दर्शन करे ॥ ६२ ॥

सम्यक् शतक्रतून् कृत्वा यत् फलं समवाप्नुयात् ।
तत् फलं समवाप्नोति सकृत् कृत्वा क्रमार्चनम् ॥ ६३ ॥

सौ यज्ञों को करने से जो फल मिलता है, वही फल केवल एक बार विधिपूर्वक कुलपूजा करने से प्राप्त होता है ॥ ६३ ॥

महाषोडशदानानि कृत्वा यच्च फलं लभेत् ।
तत् फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम् ॥ ६४ ॥
सार्द्धत्रिकोटितीर्थेषु स्नात्वा यत् फलमाप्नुयात् ।
तत् फलं लभते देवि सकृत् कृत्वा क्रमार्चनम् ॥ ६५ ॥

महान् सोलह दानों से जो फल मिलता है, वही फल श्री चक्र का दर्शन करने से मिलता है । साढ़े तीन कोटि तीर्थों में स्नान करने से जो फल मिलता है, वह एक बार विधि विधान से कुलपूजा करने से मिलता है ॥ ६५॥

बहुनोक्तेन किं देवि यथाभक्त्या ददाति यः ।
कुलाचार्याय पूजार्थं कुलद्रव्यं स धर्मवित् ॥ ६६ ॥

अधिक कहने से क्या, हे देवि ! जो यथाशक्ति कुलाचार्य को पूजा के लिए कुलद्रव्य देता है, वह धर्म का वास्तविक ज्ञाता है ॥ ६६ ॥

शैवे वा वैष्णवे शाक्ते सौरे सुगतदर्शने ।
बौद्धे पाशुपते सांख्ये व्रते कुलमुखे तथा ॥ ६७ ॥
सदक्षवामसिद्धान्ते वैदिकादिषु पार्वति ।
विनाऽलिपिशिताभ्यान्तु पूजनं निष्फलं भवेत् ॥ ६८ ॥

**शैव, वैष्णव आदि सभी सम्प्रदायों में मद्य, मांस आवश्यक**—हे पार्वती ! शैव, वैष्णव, शाक्त, सौर, बौद्ध, पाशुपत, सांख्य, वैखानसव्रत,

कालामुख, दक्षिण, वाम, सिद्धान्त अथवा वैदिक आदि सभी सम्प्रदायों में बिना मद्य मांस के पूजन करना निष्फल होता है ।। ६७-६८ ।।

**कुलद्रव्यैर्विना कुर्याज्जपयज्ञ तपोव्रतम् ।**
**निष्फलं तद्भवेद्देवि भस्मनीव यथा हुतम् ।। ६९ ।।**

**जप यज्ञादि में कुलद्रव्य आवश्यक**—कुलद्रव्यों के बिना जप, यज्ञ, तप, व्रत आदि करने से वह सब उसी प्रकार निष्फल होता है जिस प्रकार राख में किया गया हवन ।। ६९ ।।

**यथैवान्तश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ।**
**तथान्तर्यागनिष्ठा ये ते प्रिया देवि नापरे ।। ७० ।।**

**अन्तर्याग करने वाले की श्रेष्ठता**—जिस प्रकार राजा को अन्तरङ्ग सेवक जितने प्रिय होते हैं, उतने बाह्य कर्मचारी नहीं, उसी प्रकार हे देवि ! आपको अन्तर्याग करने वाले जितने प्रिय हैं, उतने अन्य नहीं ।। ७० ।।

**समर्पयन्ति ये भक्त्या आवाभ्यां पिशितासवम् ।**
**उत्पादयन्ति चानन्दं मत्प्रियाः कौलिकाश्च ते ।। ७१ ।।**
**आवयोः परमाकारं सच्चिदानन्दलक्षणम् ।**
**कुलद्रव्योपभोगेन परिस्फुरति नान्यथा ।। ७२ ।।**

**कुलद्रव्य के सेवन का फल**—हे देवि! जो भक्ति के साथ हम दोनों को मांस और आसव अर्पित कर अन्तर्याग में तत्पर होकर आनन्द का उद्भव करते हैं, वे कौलिक हम दोनों ही के सच्चिदानन्द लक्षण से युक्त परम स्वरूप वाले होते हैं। क्योंकि कुलद्रव्य उपभोग से उस आनन्द का परिस्फुरण होता है ।।७१-७२।

**अन्तःस्थानुभवोल्लासो मनोवाचामगोचरः ।**
**कुलद्रव्योपभोगेन जायते नान्यथा प्रिये ।। ७३ ।।**

हे प्रिये! अन्तःस्थित उल्लास का अनुभव मन और वाणी से परे है। वह कुलद्रव्य के ही उपभोग से परिस्फुरित होता है, अन्य किसी उपाय से नहीं ।।७३।।

**सेविते च कुलद्रव्ये कुलतत्त्वार्थदर्शनः ।**
**जायते भैरवावेशः सर्वत्र समदर्शनः ।। ७४ ।।**

कुलद्रव्य का सेवन करने से कुलतत्त्व का अर्थ ज्ञात होता है और भैरवावेश का उद्रेक होकर साधक सर्वत्र समदर्शी होता है ।। ७४ ।।

**तमःपरिवृतं वेश्म यथा दीपेन दृश्यते ।**
**तथा मायावृतो ह्यात्मा द्रव्यपानेन दृश्यते ।। ७५ ।।**

जिस प्रकार दीपक द्वारा अँधेरा घर दिखाई देता है, उसी प्रकार द्रव्यपान द्वारा माया से ढँकी हुई आत्मा दिखाई पड़ती है ॥ ७५ ॥

**मन्त्रपूतं कुलद्रव्यं गुरुदेवार्पितं प्रिये ।**
**ये पिबन्ति जनास्तेषां स्तन्यपानं न विद्यते ॥ ७६ ॥**

मन्त्र द्वारा पवित्र और गुरुदेव एवं देवता को अर्पित कुलद्रव्य जो पीते हैं हे प्रिये! उन्हें स्तनपान नहीं करना पड़ता अर्थात् उनका पुनर्जन्म नहीं होता ॥७६॥

**मद्यन्तु भैरवो देवो मद्यं शक्तिः समीरिता ।**
**अहो भोक्ता च मद्यस्य मोहयेदमरानपि ॥ ७७ ॥**

'मद्य' भैरव देवस्वरूप है और 'मद्य' शक्तिरूप है । ओह ! 'मद्य' का भोक्ता देवताओं को भी मुग्ध करता है ॥ ७७ ॥

**तन्मैरेयं नरः पीत्वा यो न विकुरुते प्रिये ।**
**मद्ध्यानैकपरो भूत्वा स मुक्तः स च कौलिकः ॥ ७८ ॥**

हे प्रिये! उस मैरेय (=मद्य) का पान कर जो विकृत नहीं होता और मेरे ध्यान में एकाग्र हो जाता है, वह मुक्त होता है और वही कौलिक है ॥ ७८ ॥

**सुरा शक्तिः शिवो मांसं तद्भोक्ता भैरवः स्वयम् ।**
**तयोरैक्यसमुत्पन्न आनन्दो मोक्ष उच्यते ॥ ७९ ॥**

**मोक्ष का लक्षण**—'सुरा' शक्ति है और 'मांस' शिव । उन दोनों का भोक्ता साक्षात् भैरव है । उन दोनों के ऐक्य से उत्पन्न होने वाला आनन्द 'मोक्ष' कहलाता है ॥ ७९ ॥

**आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।**
**तस्याभिव्यञ्जकं मद्यं योगिभिस्तेन पीयते ॥ ८० ॥**

आनन्द ब्रह्म का रूप है और वह देह में स्थित है । उसे अभिव्यञ्जित (व्यक्त) करने वाला मद्य है । इसी से योगी उसका पान करते हैं ॥ ८० ॥

**कुण्डी कम्बुकपालानि मधुपूर्णानि बिभ्रतः ।**
**किं न पश्यति लोकोऽयं ब्रह्मविष्णुमहेश्वरान् ॥ ८१ ॥**

मद्य से पूर्ण कमण्डलू, शङ्ख एवं कपाल को धारण करने वाले ब्रह्मा, विष्णु और महेश्वर को यह संसार क्या नहीं देखता ॥ ८१ ॥

**निःशङ्को निर्भयो वीरो निर्लज्जो निष्कुतूहलः ।**
**निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ॥ ८२ ॥**

वीर साधक नि:शङ्क, निर्भय, नि:सङ्कोच और वेद शास्त्रार्थों से समर्थित होकर वर देने वाली वारुणी का पान करता है ॥ ८२ ॥

**मन्त्रसंस्कारसंशुद्धामृतपानेन पार्वति ।**
**जायते देवताभावो भवबन्धविमोचकः ॥ ८३ ॥**

इस प्रकार मन्त्रसंस्कार से संशोधित अमृतपान के द्वारा, हे पार्वति ! संसारबन्धन से छुड़ाने वाला देवताभाव जाग्रत् होता है ॥ ८३ ॥

**ब्राह्मणस्य सदा पेयं क्षत्रियस्य रणागमे ।**
**गोलम्भने तु वैश्यस्य शूद्रस्यान्त्येष्टिकर्मणि ॥ ८४ ॥**

**ब्राह्मण आदि द्वारा मद्यपान का समय**—ब्राह्मण के लिए यह अमृत सदा पेय है, क्षत्रिय के लिये युद्ध के आसन्न होने पर, वैश्य के लिये यज्ञ के अवसर पर और शूद्र के लिये श्रमसाध्य कार्य होने पर यह पेय है ॥ ८४ ॥

**देवान् पितृन् समभ्यर्च्य देवि शास्त्रोक्तवर्त्मना ।**
**गुरुं स्मरन् पिबन्मद्यं खादन् मांसंन दोषभाक् ॥ ८५ ॥**

देवताओं और पितरों की पूजाकर गुरुदेव का स्मरण करते हुये शास्त्रोक्त विधि से मद्यपान और मांस भोजन करने से कोई दोष नहीं होता ॥ ८५ ॥

**तृप्त्यर्थं पितृदेवानां ब्रह्मध्यानस्थिंराय च ।**
**सेवेत मधुमांसानि तृष्णया चेत् स पातकी ॥ ८६ ॥**

पितरों और देवताओं की तृप्ति के लिये और ब्रह्मतत्त्व में ध्यान स्थिर करने के लिये मधुमांस को सेवन करे । यदि कोई तृष्णा के वश होकर इनका सेवन करता है, तो वह पापी होता है ॥ ८६ ॥

**मन्त्रार्थं स्फुरणार्थाय मनसः स्थैर्यहेतवे ।**
**भवपाशनिवृत्त्यर्थं मधुपानं समाचरेत् ॥ ८७ ॥**

मन्त्रार्थ के स्फुरण और मन की स्थिरता के लिये तथा संसार के बन्धन से मुक्ति पाने के लिये ज्ञानपूर्वक मधु (खेचर मुद्रा से प्राप्त सुधा का) पान करना चाहिये ॥ ८७ ॥

**सेवेत स्वसुखार्थं यो मद्यादीनि स पातकी ।**
**प्राशयेद्देवताप्रीत्यै स्वाभिलाषविवर्जितः ॥ ८८ ॥**
**मत्स्यमांससुरादीनां मादकानां निषेवणम् ।**

जो केवल अपने सुख के लिये मद्यादि का सेवन करता है, वह पापी होता है । स्वेच्छा से रहित होकर देवता की प्रसन्नता के लिये मत्स्य, मांस, सुरा आदि मादकों का सेवन करना चाहिये ॥ ८८-८९ ॥

यागकालं बिनान्यत्र दूषणं कथितं प्रिये ॥ ८९ ॥
यथा क्रतुषु विप्राणां सोमपानं विधीयते ।
मद्यपानं तथा कार्यं समये भोगमोक्षदम् ॥ ९० ॥

**यागकाल के सिवा मद्यादि का सेवन नहीं**—हे प्रिये ! यागकाल के सिवा अन्य समयों में मद्यादि का सेवन करने से दोष होता है । जिस प्रकार यज्ञों में विप्रों के लिये सोमपान की विधि है, उसी प्रकार पूजा के समय इनका सेवन भोग और मोक्षप्रदायक है ॥ ८९-९० ॥

श्रीगुरोः कुलशास्त्रेभ्यः सम्यग्विज्ञाय वासनाम् ।
पञ्चमुद्रा निषेवेत चान्यथा पतितो भवेद् ॥ ९१ ॥

श्रीगुरुदेव से कुलशास्त्रों की भावना को अच्छी तरह समझकर पञ्चमुद्राओं (मद्य, मांस, मत्स्य, मैथुन, और मुद्रा) का सेवन करना चाहिये, अन्यथा साधक का पतन होता है ॥ ९१ ॥

आवृत्तिं गुरुपंक्तिश्च वटुकादीन्न पूज्य यः ।
वीरोऽप्यत्र वृथापानी देवताशापमाप्नुयात् ॥ ९२ ॥

**वीर साधक को भी वृथापान निषिद्ध**—गुरुपंक्ति और बटुक आदि का पूजन किये बिना यदि वीर साधक भी वृथा पान करता है, तो वह देवता के शाप को प्राप्त करता है ॥ ९२ ॥

अयष्ट्वा भैरवं देवमकृत्वा मन्त्रतर्पणम् ।
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ॥ ९३ ॥

भैरव की पूजा किये बिना और देवता का तर्पण किये बिना जो पशु विधि से पान करता है, वह वीर साधक भी नरक में जाता है ॥ ९३ ॥

अज्ञात्वा कौलिकाचारमयष्ट्वा गुरुपादुकाम् ।
योऽस्मिन् शास्त्रे प्रवर्त्तेत तं त्वं पीडयसि ध्रुवम् ॥ ९४ ॥

**कौलिक आचार न जानने वाले को कुलशास्त्र का अधिकार नहीं**—कौलिक आचार को बिना जाने और गुरुपादुका का अर्चन किये बिना जो इस शास्त्र में प्रवेश करता है, उसे आप निश्चय ही दुःख देती हैं ॥ ९४ ॥

कौलज्ञाने ह्यसिद्धो यस्तद्द्रव्यं भोक्तुमिच्छति ।
स महापातकी ज्ञेयः सर्वधर्मबहिष्कृतः ॥ ९५ ॥

**अनधिकार द्रव्यभोग से सभी धर्मों से बहिष्कार**—कौलज्ञान को हृदयङ्गम किये बिना जो द्रव्यों का भोग करना चाहता है, वह महापापी माना

जाता है और सभी धर्मों से उसका बहिष्कार होता है ॥ ९५ ॥

**समयाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः ।**
**न सिद्धयः कुलभ्रंशस्तत्संसर्गं न कारयेत् ॥ ९६ ॥**

समयाचार से हीन, स्वेच्छाचारी दुरात्मा को सिद्धियाँ न मिल कर वह कुल से पतित होता है । उसकी सङ्गत नहीं करनी चाहिये ॥ ९६ ॥

**यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।**
**स सिद्धिमिह नाप्नोति परत्र न परां गतिम् ॥ ९७ ॥**

जो शास्त्र की विधि को छोड़कर मनमाने ढंग से व्यवहार करता है, वह इस संसार में सिद्धि नहीं पाता और नरक में जाता है ॥ ९७ ॥

**स्वेच्छया रममाणो यो दीक्षासंस्कारवर्जितः ।**
**न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिभिः ॥ ९८ ॥**

दीक्षा संस्कार से रहित जो स्वेच्छा से रमण करता है, उसकी कोई सद्गति तप, तीर्थ, व्रत आदि द्वारा नहीं होती ॥ ९८ ॥

**असंस्कृतं पिबेद्द्रव्यं बलात्कारेण मैथुनम् ।**
**स्वप्रियेण हतं मांसं रौरवं नरकं व्रजेत् ॥ ९९ ॥**

**अशुद्ध पञ्चतत्त्वों का सेवन निषिद्ध**—जो असंस्कृत द्रव्य को पीता है, अपने स्वाद के लिये मांस खाता है और बलात्कार करता है, वह भयङ्कर नरक में जाता है ॥ ९९ ॥

**कौलाः पशुव्रतस्याश्चेत् पक्षद्वयविडम्बकाः ।**
**केशसंख्या स्मृता यावत्तावत्तिष्ठन्ति रौरवे ॥ १०० ॥**

**पश्वाचार मानने से कौल को नरक**—जो कौल साधक पशुव्रतों को मानते हैं, वे दोनों पक्षों की विडम्बना करते हैं और शरीर में जितने केश हैं, उतने काल तक रौरव नरक में रहते हैं ॥ १०० ॥

**कुलद्रव्याणि सेवेत योऽन्यदर्शनमाश्रितः ।**
**तदङ्गरोमसंख्यातं भूतयोनिषु जायते ॥ १०१ ॥**

जो दूसरे दर्शन को मानते हुये कुलद्रव्यों का सेवन करते हैं, वे अपने शरीर के केशों के समान काल तक भूतयोनियों में जन्म लेते हैं ॥ १०१ ॥

**मदप्रच्छादितात्मा च न किञ्चिदपि वेत्ति च ।**
**न ध्यानं न तपो नार्चा न धर्मो न च सत्क्रिया ॥१०२ ॥**

न दैवं न गुरुर्नात्मविचारो न स कौलिकः ।
केवलं विषयासक्तः पतत्येव न संशयः ॥१०३ ॥

**मद्य में आसक्त व्यक्ति का पतन**—मद्यपान से जिसकी आत्मा ढँकी हुई है, वह ध्यान, तप, पूजा, धर्म, सत्कर्म, देवता, गुरु, आत्मा का कुछ भी ज्ञान नहीं रखता, वह कौलिक नहीं है, केवल विध्यभोग में आसक्त है । उसका पतन ही होता है, इसमें सन्देह नहीं ॥ १०२-१०३ ॥

मद्यासक्तो न पूजार्थी मांसाशी स्त्रीनिषेवकः ।
कौलोपदेशहीनो यः सोऽक्षयं नरकं व्रजेत् ॥१०४ ॥

कौलोपदेश एवं पूजा से हीन व्यक्ति यदि मद्य, मांस और स्त्री में आसक्त होता है, तो वह अक्षय नरक को प्राप्त होता है ॥ १०४ ॥

असंस्कारी तु यो नौ स्यात् पञ्च मुद्रा निषेवते ।
कुलेशि ब्रह्मनिष्ठोऽपि निन्द्यतामधिगच्छति ॥१०५ ॥

हे कुलेशि ! ब्रह्मनिष्ठ भी बिना संस्कार के पञ्चमुद्रा का सेवन करने से निन्दनीय होता है ॥ १०५ ॥

लिङ्गत्रयविशेषज्ञः षडाधारविभेदकः ।
पीठस्थानानि चागत्य महापद्मवनं व्रजेत् ॥ १०६ ॥

अत: लिङ्गत्रय का जानने वाला और षट्चक्रों का भेदक योगी पीठस्थानों में आकर महापद्म वन में विचरण करे ॥ १०६ ॥

आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः ।
चिच्चन्द्रकुण्डलीशक्तिसामरस्य सुखोदयः ॥ १०७ ॥
व्योमपङ्कजनिस्यन्दसुधापानरतो नरः ।
सुधापानमिदं प्रोक्तमितरे मद्यपायिनः ॥ १०८ ॥

**सुधापान का वास्तविक लक्षण**—मूलाधार से ब्रह्मरन्ध्र तक बारम्बार जाकर चिच्चन्द्रकुण्डलीशक्ति के सामरस्य से उत्पन्न सुख को अनुभव करते हुये व्योमपङ्कज से निकलती हुई सुधा को पान करना ही 'सुधापान' है । अन्य तो केवल ( लौकिक ) मद्य पाने वाले हैं ॥ १०७-१०८ ॥

पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं नयेच्चित्तं पलाशी स निगद्यते ॥ १०९ ॥
मनसा चेन्द्रियगणं संयम्यात्मनि योजयेत् ।
मत्स्याशी स भवेद्देवि शेषाः स्युः प्राणिहिंसकाः ॥ ११०॥

**मांसमत्स्यभक्षण का वास्तविक लक्षण**—पुण्य और पाप रूपी पशु को ज्ञानरूपी खड्ग से मारकर अपने चित्त को जो परतत्त्व में लय करता है, हे देवि ! वही मांसभक्षण करने वाला कहा जाता है । अपने मन द्वारा इन्द्रियों को नियन्त्रित कर आत्मा में लगाने वाला ही मत्स्य खाने वाला है । हे देवि ! शेष तो प्राणियों के हिंसक मात्र हैं ॥ १०९-११० ॥

**अप्रबुद्धा पशोः शक्तिः प्रबुद्धा कौलिकस्य च ।**
**शक्तिं तां सेवयेत् यस्तु स भवेत् शक्तिसेवकः ॥ १११ ॥**
**पराशक्त्यात्ममिथुनसंयोगानन्दनिर्भरः ।**
**य आस्ते मैथुनं तत् स्यादपरे स्त्रीनिषेवकाः ॥ ११२ ॥**

**मैथुन का वास्तविक लक्षण**—पशुभाव वाले व्यक्ति की शक्ति सोई हुई रहती है । कौल साधक की शक्ति जाग्रत् रहती है । उस शक्ति का जो सेवन करता है, वही शक्ति का सेवक है । जो पराशक्ति और अपनी आत्मा के संयोग से होने वाले आनन्द को अनुभव करता है, वही मैथुन का मर्मज्ञ है । अन्य लोग स्त्रीसेवी मात्र हैं ॥ १११-११२ ॥

**इत्यादि पञ्चमुद्राणां वासनां कुलनायिके ।**
**ज्ञात्वा गुरुमुखाद्देवि यः सेवेत स मुच्यते ॥ ११३ ॥**

इस प्रकार गुरुमुख से पाँचों मुद्राओं की भावना को जानकर जो साधक साधना करता है, हे देवि ! वह मुक्त होता है ॥ ११३ ॥

**इति ते कथितं देवि कुलद्रव्यादिलक्षणम् ।**
**समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ ११४ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे कुलमाहात्म्य-कथनं नाम पञ्चमोल्लासः ॥ ५ ॥**



हे देवि ! कुलद्रव्य आदि का लक्षण मैंने संक्षेप में आपसे कहा है । अब आप और क्या सुनना चाहती हैं ? ॥ ११४ ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में कुलमाहात्म्य-कथन नामक पाँचवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ ५ ॥**



# अथ षष्ठोल्लासः

श्रीदेव्युवाच

कुलेश श्रोतुमिच्छामि पूजकस्य च लक्षणम् ।
कुलद्रव्यादिसंस्कारमर्चनं वद मे प्रभो ॥ १ ॥

**पूजारहस्य और द्रव्यसंस्कार**—श्री देवी ने कहा—हे कुलेश ! मैं पूजन करने वाले का लक्षण सुनना चाहती हूँ । हे प्रभो ! मुझे कुलद्रव्यादि का संस्कार और अर्चन बताइए ॥ १ ॥

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण स्तूयते देवदानवैः ॥ २ ॥

**पूजन करने वाले का लक्षण**—ईश्वर ने कहा—हे देवि ! सुनिए, आपने जो पूछा है, उसे मैं कहूँगा । उसके सुनने मात्र से उस साधक की देव एवं दानवों द्वारा स्तुति हो जाती है ॥ २ ॥

निरस्तपातका यत्र मानवाः पुण्यकर्मिणः ।
कुलज्ञानसुसम्पन्ना भजन्ते ये दृढव्रताः ॥ ३ ॥

पापों से रहित, पुण्य कर्म करने वाले, कुलज्ञान से सुसम्पन्न और दृढ़ व्रत वाले मनुष्य आपका भजन करते हैं ॥ २-३ ॥

पूर्णाभिषेकसहितो वेदशास्त्रार्थतत्त्ववित्।
देवतागुरुभक्तस्तु नियतात्मार्चयेत् प्रिये ॥ ४ ॥

हे प्रिये ! पूर्णाभिषेक से युक्त, वेदशास्त्रार्थ का तत्त्व जानने वाला, देवता और गुरु का भक्त साधक आत्मनिष्ठ होकर अर्चन करे ॥ ४ ॥

कुलागमरहस्यज्ञो देवताराधनोत्सुकः ।
गुरूपदेशसंयुक्तः पूजयेत् कुलनायिके ॥ ५ ॥

हे कुलनायिके ! कुलागम के रहस्य का ज्ञाता देवता की आराधना करने के लिए उत्सुक होकर गुरु के उपदेश से युक्त होकर पूजन करें ॥ ५ ॥

शुद्धात्मा चातिसंहृष्टः क्रोधलौल्यविवर्जितः ।
पशुव्रतादिविमुखः सुमुखस्तु यजेत् प्रिये ॥ ६ ॥

हे प्रिये ! क्रोध और लोभ से रहित, पशु व्रतों से विमुख रहकर शुद्धात्मा हो अति हर्ष के साथ पूजन करे ॥ ६ ॥

यदा पुंसः कृतार्थस्य कालेन बहुना प्रिये ।
मत्प्रसादेन भूयाच्च दृढभक्तिसमागमः ॥ ७ ॥
तदर्थं तर्पणं कुर्याद् द्रव्यैः श्रीभैरवोदितैः ।
गुरूपदेशविधिना चान्यथा पतनं भवेत् ॥ ८ ॥

हे प्रिये ! जब बहुत समय बीतने पर मेरी कृपा से कृतार्थ होने वाले व्यक्ति में दृढ़ भक्ति का उदय हो, तब भैरव द्वारा कथित द्रव्यों से गुरूपदिष्ट विधि से उनका तर्पण करे । अन्यथा करने से पतन होता है ॥ ७-८ ॥

मन्त्रयोगेन देवेशि कुर्यात् श्रीचक्रपूजनम् ।
तदहन्तु त्वया सार्धं गृह्णामि स्वयमादरात् ॥ ९ ॥

हे देवेशि ! मन्त्र एवं योग के क्रम से श्रीचक्रपूजन करे । उसे मैं आपके साथ स्वयं सादर स्वीकार करता हूँ ॥ ९ ॥

भैरवोऽहमिति ज्ञानात् सर्वज्ञादिगुणान्वितः ।
इति संचिन्त्य योगीन्द्रः कुलपूजारतो भवेत् ॥ १० ॥

'मैं भैरव हूँ'—इस अनुभूति के साथ सर्वज्ञ आदि गुणों से युक्त योगिश्रेष्ठ साधक कुलपूजा में अपने को प्रवृत्त करे ॥ १० ॥

इत्यादिलक्षणोपेतः कौलिको नियतव्रतः ।
यस्त्वां समर्चयेद्देवि भुक्तिमुक्त्योः स भाजनम् ॥ ११ ॥

हे देवि! उक्त लक्षणों से युक्त, नियमोंका पालन करने वाला जो कौलिक आपका अर्चन करता है, वह भुक्ति और मुक्ति का अधिकारी होता है ॥ ११ ॥

एकान्ते विजनेऽरण्ये देशे बाधाविवर्जिते ।
सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ १२ ॥
अमृताब्धौ मणिद्वीपे कल्पवृक्षतरोस्तले ।
रत्नप्राकारसन्दीप्तं स्मरेन्माणिक्यमण्डपम् ॥ १३ ॥

**कुलपूजा का स्थान और आसन एवं ध्यान**—एकान्त स्थान में, किसी जनरहित वनप्रदेश में या पशु आदि की बाधारहित स्थान में, सुखासन पर पूर्व

या उत्तरमुख बैठकर अमृतसागर में स्थित मणिद्वीप में, कल्पवृक्ष के नीचे, रत्नप्राकार से देदीप्यमान माणिक्यमण्डप का ध्यान करे ॥ १२-१३ ॥

**पुष्पमालावितानाढ्यं प्रच्छन्नपटसंवृतम् ।**
**कर्पूरदीपभास्वन्तं धूपामोदसुगन्धिकम् ॥ १४ ॥**
**तन्मण्डपस्थमात्मानं ध्यात्वाऽनाकुलचेतसा ।**
**श्रीगुरोराज्ञया देवि कुलपूजां समाचरेत् ॥ १५ ॥**

जो पुष्पमालाओं के वितान से सुशोभित है और प्रच्छन्न पट्टवस्त्रों से आवृत, कर्पूर दीप से प्रकाशमान तथा धूपादि की सुगन्ध से सुगन्धित है । उस मण्डप में अपने को स्थित मानता हुआ स्थिरचित्त से ध्यान करते हुए, हे देवि ! श्री गुरुदेव की आज्ञा से कुलपूजा सम्पन्न करे ॥ १४-१५ ॥

**आत्मस्थानमनुद्रव्यदेवशुद्धिस्तु पञ्चमी ।**
**यावन्न कुरुते मन्त्री तावद्देवार्चनं कुतः ॥ १६ ॥**

**पञ्चशुद्धि की आवश्यकता**—१. आत्मशुद्धि, २. स्थानशुद्धि, ३. मन्त्रशुद्धि, ४. द्रव्यशुद्धि और ५. देवशुद्धि—ये पाँच शुद्धियाँ जब तक साधक नहीं करता, तब तक देवपूजा कहाँ सम्पन्न होती है ॥ १६ ॥

**सुस्नानभूतसंशुद्धिप्राणायामादिभिः प्रिये ।**
**षडङ्गाद्यखिलन्यासैरात्मशुद्धिः समीरिता ॥ १७ ॥**

हे प्रिये ! शुद्ध स्नान, भूतशुद्धि, प्राणायाम और षडङ्गादि समस्त न्यासों से '**आत्मशुद्धि**' होती है ॥ १७ ॥

**सम्मार्जनानुलेपाद्यैर्दर्पणोदरवत्कृतम् ।**
**वितानधूपदीपादिपुष्पमालोपशोभितम् ।**
**पञ्चवर्णरजश्चित्रं स्थानशुद्धिरितीरिता ॥ १८ ॥**

पूजास्थान को सम्मार्जन, अनुलेपन आदि के द्वारा दर्पण के समान स्वच्छ करना और वितान ( चँदोवा ) धूपदीप पुष्पमाला और पञ्चरंगों से सजाना '**स्थानशुद्धि**' कही गई है ॥ १८ ॥

**ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च ।**
**क्रमोत्क्रमाद् द्विरावृत्त्या मन्त्रशुद्धिरितीरिता ॥ १९ ॥**

मूलमन्त्र के अक्षरों को मातृका वर्णों से ग्रथित कर क्रम एवं उत्क्रम पूर्वक द्विरावृत्ति करने से '**मन्त्रशुद्धि**' कही गई है ॥ १९ ॥

**पूजाद्रव्याणि संप्रोक्ष्य मूलास्त्राद्भिर्विधानवित् ।**
**दर्शयेद्धेनुमुद्राञ्च द्रव्यशुद्धिरितारिता ॥ २० ॥**

पूजाद्रव्यों और आसन का मूलमन्त्र तथा अस्त्र मन्त्र से प्रोक्षण कर उन्हें धेनुमुद्रा दिखावे—यह **'द्रव्यशुद्धि'** कही गई है ॥ २० ॥

**पीठे देवं प्रतिष्ठाप्य सकलीकृत्य मन्त्रवित् ।**
**मूलमन्त्रेण दीप्तात्मा न्यासद्रव्योदकेन च ।**
**त्रिवारं प्रोक्षयेद्विद्वान् देवशुद्धिरितीरिता ॥ २१ ॥**

**पीठ में देवता की प्राणप्रतिष्ठा**—पीठ पर प्राणप्रतिष्ठा कर देवता के विग्रह का सकलीकरण (imagining Him) कर मूलमन्त्र से दीप्तात्मा एवं विद्वान् साधक न्यास द्रव्योदक से तीन बार उसका प्रोक्षण करे—यह **'देवशुद्धि'** कही गई है ॥ २१ ॥

**पञ्चशुद्धिं विधायेत्थं पश्चाद् यजनमाचरेत् ।**
**सा पूजा सफला प्रोक्ता चान्यथा निष्फला भवेत् ॥ २२ ॥**

इस प्रकार 'पञ्चशुद्धि' कर पूजन प्रारम्भ करे । तभी पूजा सफल होती है, अन्यथा वह निष्फल होती है ॥ २२ ॥

**मण्डलेन विना पूजा निष्फला कथिता प्रिये ।**
**तस्मान्मण्डलमालिख्य विधिवत्तत्र पूजयेत् ॥ २३ ॥**

**पूजा में मण्डल की आवश्यकता**—हे प्रिये! 'मण्डल' के बिना पूजा निष्फल होती है, अतः 'मण्डल' की रचनाकर विधिवत् उसमें पूजा करे ॥२३॥

**अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ।**
**त्रैलोक्यं मण्डितं येन मण्डलं तत् सदा शिवम् ॥ २४ ॥**

अखण्ड मण्डलाकार विश्व को व्याप्त कर जो स्थित है और त्रैलोक्य जिस 'मण्डल' से शोभायमान है, वह सदाशिवस्वरूप कहा गया है ॥ २४ ॥

**उड्डीयानां चतुरस्त्रं कामरूपञ्च वर्त्तुलम् ।**
**जालन्धरञ्च चन्द्रार्धं त्र्यस्त्रः पूर्णगिरिर्भवेत् ॥ २५ ॥**
**अभ्यर्च्य मण्डलं पश्चादाधारान् स्थापयेत् क्रमात् ।**

चतुरस्त्र उड्डीयान पीठ है, वृत्त (वर्तुल) कामरूप पीठ है, चन्द्रार्ध जालन्धर पीठ है और त्रिकोण (त्र्यस्त्र) पूर्णगिरि पीठ है । ऐसे 'मण्डल' की पूजा करने के बाद क्रमशः आधारों की स्थापना करनी चाहिए ॥ २५-२६ ॥

**समान्यश्रीगुरुभोगबलिपात्राणि पञ्चधा ॥ २६ ॥**
**द्विपात्रं वा त्रिपात्रं वा एकपात्रं न कारयेत् ।**
**स्वदक्षिणादिवामान्तं स्थाप्याभ्यर्च्यासवेन तु ॥ २७ ॥**

**संपूर्य मूलमन्त्रेण कुलेश्वरि विनिधानवित् ।**
**तत्र माषप्रमाणन्तु मत्स्यं मांसं विनिक्षेपेत् ॥ २८ ॥**

**सामान्य आदि पाँच पात्र**—१. सामान्यार्ध्य पात्र, २. श्री पात्र, ३. गुरु पात्र, ४. भोग पात्र और ५. बलि पात्र—ये पाँच पात्र हैं । दो पात्र या तीन पात्र या एक पात्र न रखे। हे कुलेश्वरि! अपने दाईं ओर से लेकर बाईं ओर तक इन्हें स्थापित कर इनकी पूजा करे और मूल मन्त्र से आसव द्वारा पूर्ण करे। फिर इनमें माष अर्थात् उरद के बराबर मत्स्य और मांस खण्ड छोड़े ॥ २६-२८ ॥

**नष्टैः पर्युषितोच्छिष्टैर्दुर्गन्धैर्गन्धवर्जितैः ।**
**हेतुभिः परपात्रस्थैस्तर्पितं निष्फलं भवेत् ॥ २९ ॥**

**तर्पण द्रव्य का विचार**—नष्ट, बासी, जूठे, दुर्गन्धित, गन्धहीन एवं दूसरे के पात्र में स्थित 'हेतु' (मद्य) से किया गया तर्पण निष्फल होता है ॥२९॥

**न पूरयेत्तु पात्राणि अप्रियैस्तैः कुलेश्वरि ।**
**स्वादिष्ठैश्च मदिरौष्ठैश्च द्रव्यैरमृतसन्निभैः ।**
**मनोहरैर्महेशानि तर्पणं सफलं भवेत् ॥ ३० ॥**

हे कुलेश्वरि ! इस प्रकार के अप्रिय द्रव्यों से पात्रों को पूर्ण न करे । हे महेशानि ! अमृत के समान स्वादिष्ट, सुगन्धित और मनोहर द्रव्य द्वारा जो तर्पण किया जाता है, वह सिद्धिदायक होता है ॥ ३० ॥

**असंस्कृता सुरा पापकलहव्याधिदुःखदा ।**
**आयुःश्रीकीर्त्तिसौभाग्यधनधान्यविनाशिनी ॥ ३१ ॥**

**असंस्कृत सुरा वर्जित**—असंस्कृत सुरा पाप, कलह, व्याधि और दुःख देने वाली होती है तथा आयु, श्री, कीर्ति, सौभाग्य, धन धान्य को नष्ट करने वाली कही गई है ॥ ३१ ॥

**तस्मात् संस्कृत्य विधिवत् कुलद्रव्यं ततोऽर्चयेत् ।**
**अन्यथा नरकं याति दाता भोक्ता न संशयः ॥ ३२ ॥**
**विना द्रव्यादिवासेन न जपेन्न स्मरेत् प्रिये ।**
**ये स्मरन्ति नरा मूढास्तेषां दुःखं पदे पदे ॥ ३३ ॥**

अतः कुलद्रव्य का सविधि संस्कार कर ले । तब अर्चन करे । अन्यथा असंस्कृत द्रव्य का देने वाला और भोग करने वाला नरक में जाता है, इसमें सन्देह नहीं । द्रव्यों की प्रतिष्ठा किए बिना न जप करे, न ध्यान । जो ऐसा न कर ध्यान करते हैं, उन मूर्खों को पग पग पर दुःख होता है ॥ ३२-३३ ॥

नासवेन विना मन्त्रो न मन्त्रेण विनासवः ।
परस्परविरोधित्वात् कथं पूजा विधीयते ॥ ३४ ॥
तत्संशयनिवृत्तिश्च ज्ञात्वा गुरुमुखात् प्रिये ।

आसव के बिना मन्त्र मन्त्र नहीं होता और मन्त्र के बिना आसव निरर्थक होता है । परस्पर विरोध होने से पूजा कैसे हो सकती है ? हे प्रिये ! अतः इस सम्बन्ध में जो सन्देह हो, उसका निवारण गुरुमुख से कर ले ॥ ३४-३५॥

वीक्षणं प्रोक्षणं ध्यानं मन्त्रमुद्राविशोधनम् ।
द्रव्यं तर्पणयोग्यं स्याद्देवताप्रीतिकारकम् ॥ ३५ ॥
अग्निसूर्येन्दुब्रह्मेन्द्रविष्णुरुद्रसदाशिवैः ।
चतुर्विंशतिमन्त्रैः स्यान्मद्यञ्चैव परामृतम् ॥ ३६ ॥

**मद्य का अमृतीकरण**—वीक्षण, प्रोक्षण, ध्यान, मन्त्र और मुद्रा से संशोधित द्रव्य तर्पण करने के योग्य है । उससे देवता प्रसन्न होते हैं । अग्नि, सूर्य, इन्दु (चन्द्र), ब्रह्मा, इन्द्र, विष्णु, रुद्र और सदाशिव के चौबीस मन्त्रों से मद्य परामृत बन जाता है ॥ ३५-३६ ॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ३७ ॥
पूर्णा पूर्णामृता चेति कथिताः कुलनायिके ।
सौम्याः कामप्रदायिन्यः षोडश स्वरजाः कलाः ॥ ३८ ॥

**स्वर से उत्पन्न कामदायिनी सोलह चन्द्र कलाएँ**—१. अमृता, २. मानदा, ३. पूषा, ४. तुष्टि, ५. पुष्टि, ६. रति, ७. धृति, ८. शशिनी, ९. चन्द्रिका, १०. कान्ति, ११. ज्योत्स्ना, १२. श्रीः, १३. प्रीति, १४. अङ्गदा, १५. पूर्णा, १६. पूर्णामृता—ये १६ स्वरों से उत्पन्न सौम्या (चन्द्र की) कलाएँ कामप्रदायिनी हैं ॥ ३७-३८ ॥

तपनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा रोधिनी धारिणी क्षमा ।
कभाद्या वसुदाः सौराष्ठडान्ता द्वादशेरिताः ॥ ३९ ॥

**क - भ से ठ - ड तक वर्णों की वसुदायिनी बारह सूर्य कलाएँ**—१. तपनी, २. तापिनी, ३. धूम्रा, ४. मरीचि, ५. ज्वालिनी, ६. रुचि, ७. सुषुम्ना, ८. भोगदा, ९. विश्व, १०. रोधिनी, ११. धारिणी, १२. क्षमा—ये १२ सौरा (सूर्य की) वसुप्रदा कलाएँ हैं, जो क - भ से आरम्भ होकर ठ - ड में समाप्त होती हैं ॥ ३९ ॥

**धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।**
**सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ।**
**आग्नेया यादिवर्णाद्या दश धर्मप्रदाः कलाः ॥ ४० ॥**

**य से क्ष तक वर्णों की दस धर्मदायिनी अग्निकलायें**—१. धूम्रार्चि, २. उष्मा, ३. ज्वलिनी, ४. ज्वालिनी, ५. विस्फुलिङ्गिनी, ६. सुश्री, ७. सुरूपा, ८. कपिला, ९. हव्यवहा और १०. कव्यवहा—ये अग्नि की धर्मप्रदा कलाएँ हैं, जो 'य' वर्ण से प्रारम्भ (क्ष पर्यन्त) होती हैं ॥ ४० ॥

**सृष्टिर्मेधा स्मृतिर्ऋद्धिः कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ।**
**स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकला दश ।**
**अकारप्रभवा ब्रह्मजाताः स्युः सृष्टये कलाः ॥ ४१ ॥**

**ॐकार की कलाओं के नाम, अकार से उत्पन्न ब्रह्मजात १० सृष्टि कलाएँ**—१. सृष्टि, २. मेधा, ३. स्मृति, ४. ऋद्धि, ५. कान्ति, ६. लक्ष्मी, ७. द्युति, ८. स्थिरा, ९. स्थिति और १०. सिद्धि—ये क-च वर्ग की १० सृष्टि कलाएँ हैं, जो अकार से उत्पन्न हैं और ब्रह्मजाता हैं ॥ ४१ ॥

**जरा च पालिनी शान्तिरीश्वरी रतिकामिके ।**
**वरदाह्लादिनीप्रीतिदीर्घाः स्युष्टतवर्गजाः ।**
**उकारप्रभवा विष्णुजाताः स्युः स्थितये कलाः ॥ ४२ ॥**

**उकार से उत्पन्न विष्णुजात १० स्थिति कलाएँ**—१. जरा, २. पालिनी, ३. शान्ति, ४. ईश्वरी, ५. रति, ६. कामिका, ७. वरदा, ८. ह्लादिनी, ९. प्रीति और १०. दीर्घा—ये ट-त वर्ग की १० स्थितिकलाएँ हैं,जो उकार से उत्पन्न हैं और विष्णुजाता है ॥ ४२ ॥

**तीक्ष्ण रौद्री भया निद्रा तन्द्रा क्षुत् क्रोधिनी क्रिया ।**
**उत्कारी मृत्युरित्युक्ता पयवर्गकला दश ।**
**मकारप्रभवा रुद्रजाताः संहृतये कलाः ॥ ४३ ॥**

**मकार से उत्पन्न रुद्रजात १० संहार कलाएँ**—१. तीक्ष्णा, २. रौद्री, ३. भया, ४. निद्रा, ५. तन्द्रा, ६. क्षुत्, ७. क्रोधिनी, ८. क्रिया, ९. उत्कारी और १०. मृत्यु—ये प-य वर्ग की १०. संहार कलाएँ हैं, जो मकार से उन्पन्न हैं और रुद्रजाता हैं ॥ ४३ ॥

**षवर्गगाश्चतस्रः स्युः पीता श्वेतारुणासिताः ।**
**कलाश्चेश्वरसञ्जातास्तिरोधानाय बिन्दुजाः ॥ ४४ ॥**

**बिन्दु से उत्पन्न ईश्वरजात ४ तिरोधान कलायें**—१. पीता, २. श्वेता, ३. अरुणा और ४. असिता—ये ष-वर्ग की ४ तिरोधानकलायें हैं, जो बिन्दु से उत्पन्न हैं और ईश्वरजाता हैं ॥ ४४ ॥

**निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।**
**इन्धिका दीपिका चापि रेचिका मोचिका परा ॥ ४५ ॥**
**सूक्ष्मा सूक्ष्मामृता ज्ञानाऽमृता चाप्यायिनी तथा ।**
**व्यापिनी व्योमरूपा च षोडश स्वरजाः कलाः ।**
**सदाशिवभवा नादादनुग्रहकलाः क्रमात् ॥ ४६ ॥**

**नाद से उत्पन्न सदाशिवजात १६ अनुग्रहात्मक कलाएँ**—१. निवृत्ति, २. प्रतिष्ठा, ३. विद्या, ४. शान्ति, ५. इन्धिका, ६. दीपिका, ७. रेचिका, ८. मोचिका, ९. परा, १०. सूक्ष्मा, ११. सूक्ष्मामृता, १२. ज्ञाना, १३. अमृता, १४. आप्यायिनी, १५. व्यापिनी और १६. व्योमरूपा—ये स्वरों की सोलह अनुग्रहकलायें हैं, जो नाद से उत्पन्न हैं और सदाशिवजाता हैं ॥ ४५-४६ ॥

**प्रथमं प्रकृतेर्हंसःप्रतद्विष्णुरनन्तरम् ।**
**त्र्यम्बकन्तु तृतीयं स्याच्चतुर्थस्तत्पदादिकः ॥ ४७ ॥**
**विष्णुर्योनिं कल्पयतु पञ्चमः कल्पनामनुः ।**
**चतुर्नवतिमन्त्रात्मदेवताभावसिद्धिदाः ॥ ४८ ॥**

**तत्त्वसंस्कार के मन्त्र**—ब्रह्म कलाओं के पूजन के बाद 'हंसः' इत्यादि मन्त्र से, विष्णु कलाओं के बाद 'प्रतद्विष्णु' इत्यादि मन्त्र से, रुद्र कलाओं के बाद 'त्र्यम्बकं' इत्यादि यजुः मन्त्र से, ईश्वर कलाओं के बाद 'तद् विष्णोः' इत्यादि मन्त्र से और सदाशिव कलाओं के पूजन के बाद 'विष्णुर्योनिं' इत्यादि मन्त्र से पूजन करे । इन ९४ मन्त्रों से पूजन करने से मन्त्र, आत्मा और देवता के भाव की सिद्धि मिलती है ॥ ४७-४८ ॥

**मन्त्रजापश्च संप्रोक्त आत्मस्तवश्च पञ्चभिः ।**
**अत्र ये (ते) पञ्च संप्रोक्ता मन्त्रास्ते कुलनायिके ॥ ४९ ॥**
**अखण्डैकरसानन्दाकरे परसुधात्मनि ।**
**स्वच्छन्दस्फुरणामत्र निधेह्यकुलरूपिणि ॥ ५० ॥**
**अकुलस्थामृताकारे सिद्धिज्ञानकरे परे ।**
**अमृतत्वं विधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥ ५१ ॥**
**तद्रूपेणैकरस्यञ्च कृत्वार्घ्यं तत्स्वरूपिणि ।**
**भूत्वा परामृताकारं मयि चित्स्फुरणं कुरु ॥ ५२ ॥**

हे कुलनायिके ! उक्त पाँच मन्त्र हैं । उक्त पूजन के बाद निम्न तीन मन्त्रों से प्रथम तत्त्व को अभिमन्त्रित करे—

अखण्डैकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेह्यकुलरूपिणि ॥ १ ॥
अकुलस्थामृताकारे सिद्धिज्ञानकरे परे ।
अमृतत्त्वं विधेह्यस्मिन् वस्तूनि क्लिन्नरूपिणि ॥ २ ॥
तद्रूपेणैकस्यं च कृत्वार्घ्यं तत्स्वरूपिणि ।
भूत्वा परामृताकारं मयि चित्स्फुरणं कुरु ॥ ३ ॥

**वाग्भवं पार्श्वगं भूमिः पुष्टिरिन्दुसमन्विता ।**
**स्थितिश्च पावकानुग्रहार्थेन्दुसमलङ्कृता ॥ ५३ ॥**
**स्थिरेन्धिकेन्दुसंयुक्ता श्वेता बिन्दुयुगान्विता ।**
**तथामृते पदं ब्रूयात्तत्पश्चादमृतोद्भवे ॥ ५४ ॥**
**तथामृतेश्वरीत्युक्त्वा पश्चादमृतवर्षिणि ।**
**अमृतं स्रावयद् द्वन्द्वं द्विठान्तो द्रव्यशुद्धिकृत् ।**
**अमृतेशीमनुः प्रोक्तः पञ्चत्रिंशद्भिरक्षरैः ॥ ५५ ॥**

**अमृतेशी मन्त्र**—अब द्रव्य को शुद्ध करने वाला ३५ अक्षरों का 'अमृतेशी' नामक मन्त्र जपे । यथा—**ऐं प्लूं स्त्रौं जूं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा** ॥ ५०-५५ ॥

**वाग्भवं वदयुग्मञ्च वाग्वादिनीति वाग्भवम् ।**
**कामराजं ततः क्लिन्ने क्लेदिनि क्लेदयेति च ॥ ५६ ॥**
**महामोक्षं कुरुयुग्मं कामराजमतः परम् ।**
**तार्त्तीयं मोक्षशब्दान्ते कुरुयुग्मं वदेत्ततः ॥ ५७ ॥**
**स्यात् प्रासादपरा चान्तेसप्तत्रिंशद्भिरक्षरैः ।**
**दीपनीमनुरित्युक्तः सर्वसिद्धिकरः प्रिये ॥ ५८ ॥**

इसके बाद सर्वसिद्धिदायक ३७ अक्षरों का 'दीपनी' नामक मन्त्र जपे । यथा—**ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महामोक्षं कुरु कुरु क्लीं हसौं मोक्षं कुरु कुरु हसौं स्हौं** ॥ ५६-५८ ॥

**एताः कला मातृकाञ्चाप्यख(ण्डेन्द्वा)ण्डैकादिकान् मनून् ।**
**अमृतेशीं दीपनीञ्च मूलामन्त्रमपि क्रमात् ॥ ५९ ॥**
**एकद्वित्रिचतुःपञ्च द्विचतुर्वारमम्बिके ।**
**संस्मृत्याभ्यर्च्य पात्रन्तु पूजयेद्धेनुमुद्रया ॥ ६० ॥**

**पात्रशुद्धि की विधि**—इस प्रकार, इन कलाओं, मातृका, अखण्डैक आदि मन्त्रों, अमृतेशी, दीपनी मन्त्रों और मूल मन्त्र का क्रमशः एक, दो, तीन, चार, पाँच और आठ बार स्मरण कर पात्र का पूजन कर उसे धेनुमुद्रा दिखाए ॥ ५९-६० ॥

**ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।**
**आपूरितं महापात्रं पीयूषरसमावह ॥ ६१ ॥**

**पात्रशुद्धि का मन्त्र**—अन्त में निम्न मन्त्र से पात्र को शुद्ध करे—

ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥ ६१ ॥

**शुद्धद्रव्येण तेनापि गन्धपुष्पाक्षतैरपि ।**
**न्यासोक्तसर्वमन्त्रैश्चाप्यात्मानं पूजयेत् प्रिये ॥ ६२ ॥**
**मूर्ध्नि श्रीगुरुपङ्क्तीश्च मूलाधारे च पादुकाम् ।**

इसके बाद उक्त प्रकार से शुद्ध किये गये द्रव्य से और गन्ध पुष्पाक्षतों से तथा न्यासोक्त सभी मन्त्रों से, हे प्रिये ! अपनी पूजा करे । सिर पर श्रीगुरुपङ्क्ति की और मूलाधार में श्री पादुका की पूजा करे ॥ ६२-६३ ॥

**दिव्यौघे चादिनाथश्च तच्छक्तिश्च सदाशिवः ॥ ६३ ॥**
**तत्पत्नी चेश्वरस्तस्य भार्या रुद्रश्च तद्वधूः ।**
**विष्णुश्च तत्प्रिया ब्रह्मा तत्कान्ता द्वादशेरिताः ॥ ६४ ॥**

**दिव्य सिद्ध एवं मानवौघ गुरु पंक्तियाँ**—दिव्यौघ पङ्क्ति में—१. आदिनाथ और २. उनकी शक्ति, ३ सदाशिव और ४. उनकी पत्नी, ५ ईश्वर और ६. उनकी भार्या, ७. रुद्र और ८. उनकी वधु, ९. विष्णु और १०. उनकी प्रिया, ११. ब्रह्मा और १२. उनकी पत्नी—ये बारह हैं ॥ ६३-६४ ॥

**सिद्धौघे सनकश्चैव सनन्दश्च सनातनः ।**
**सनत्कुमारश्च सनत्सुजातश्च ऋभुक्षजः ॥ ६५ ॥**
**दत्तात्रेयो रैवतको वामदेवस्ततः परम् ।**
**ततो व्यासः शुकश्चैव एकादश समीरिताः ॥ ६६ ॥**

**सिद्धौघ पङ्क्ति** में—१. सनक, २. सनन्दन, ३. सनातन, ४. सनत्कुमार, ५. सनत्सुजात, ६. ऋभुक्षज, ७. दत्तात्रेय, ८. रैवतक, ९. वामदेव, १०. व्यास और ११. शुक—ये ग्यारह हैं ॥ ६५-६६ ॥

**मानवौघे नृसिंहश्च महेशो भास्करस्तथा ।**
**महेन्द्रो माधवो विष्णुः षडेते च प्रकीर्त्तिताः ॥ ६७ ॥**

**मानवौघ पङ्क्ति में**—१. नृसिंह, २. महेश, ३. भास्कर, ४. महेन्द्र ५. माधव, ६. विष्णु—ये छः कहे गए हैं ॥ ६७ ॥

**नमोऽन्ते योजयेद्देवि दिव्यौघे परमं शिवम् ।**
**महाशिवञ्च सिद्धौघे मानवौघे सदाशिवम् ॥ ६८ ॥**

दिव्यौघ में प्रत्येक नाम के अन्त में 'नमः' और 'परम शिव' की, सिद्धौघ में 'नमः और 'महाशिव' की तथा मानवौघ में 'नमः' और 'सदाशिव' की योजना करे ॥ ६८ ॥

**ततः पीठं समभ्यर्च्य देवीमावाहयेत् प्रिये ।**
**महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।**
**सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥ ६९ ॥**
**देवेशि भक्तिसुलभे सर्वावरणसंयुते ।**
**यावत्त्वां पूजयामीह तावत्त्वं सुस्थिरा भव ॥ ७० ॥**

**देवी के आवाहन का मन्त्र**—हे प्रिये ! तदनन्तर पीठपूजा कर देवी का आवाहन निम्न मन्त्र से करे—

महापद्मवनान्तःस्थे ! कारणानन्दविग्रहे ।
सर्वभूतहिते ! मातरेह्येहि परमेश्वरि ॥
देवेशि ! भक्तिसुलभे ! सर्वावरणसंयुते ।
यावत् त्वां पूजयामीह तावत् त्वं सुस्थिरा भव ॥ ६९-७० ॥

**मन्त्रेणानेन चावाह्य यजेद्देवीमनन्यधीः ।**
**ध्यात्वा मुद्रां प्रदर्श्यार्चेत् गन्धपुष्पाक्षतादिभिः ॥ ७१ ॥**

इस मन्त्र से आवाहन कर देवी का ध्यान करे और मुद्रा दिखाकर गन्ध पुष्पाक्षत आदि से उनकी पूजा सावधान चित्त होकर करे ॥ ७१ ॥

**चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः ।**
**साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥ ७२ ॥**

**ब्रह्म के रूप की कल्पना का कारण**—चिन्मय, अप्रमेय, निर्गुण और अशरीरी ब्रह्म के रूप की कल्पना साधकों के हित के लिये की गई है ॥७२॥

**लिङ्गस्थण्डिलवह्न्यम्बुसूपकुड्यपटेषु च ।**
**मण्डले फलके मूर्ध्नि हृदि वा दश कीर्त्तिताः ॥ ७३ ॥**
**एषु स्थानेषु देवेशि यजन्ति परमां शिवाम् ।**
**अरूपां रूपिणीं कृत्वा कर्मकाण्डरता नराः ॥ ७४ ॥**

**देवी की आराधना के दश स्थान**—१. लिङ्ग, २. स्थण्डिल, ३. वह्नि, ४. जल, ५. वस्त्र, ६. सूर्य, ७. मण्डल, ८. फलक, ९. मूर्ध्नि और १०. हृदय—इन १० स्थानों में कर्मकाण्ड में तत्पर लोग अरूपा भगवती को रूपवती बनाकर परमा शिव का पूजन करते हैं ॥ ७३-७४ ॥

**गवां सर्वाङ्गजं क्षीरं स्रवेत् स्तनमुखाद् यथा ।**
**तथा सर्वगतो देवः प्रतिमादिषु राजते ॥ ७५ ॥**

**प्रतीक में पूजन करने का कारण**—जिस प्रकार गायों के सारे शरीर में व्याप्त दूध उनके स्तन से स्रवित होता है, उसी प्रकार सर्वत्र व्याप्त देवता प्रतिमाओं आदि में विराजमान रहते हैं ॥ ७५ ॥

**आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः ।**
**साधकस्य च विश्वासात् सन्निधौ देवता भवेत् ॥ ७६ ॥**
**गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।**
**स्वकर्मरचितं दत्तं पुनस्तामेव पोषयेत् ॥ ७७ ॥**
**एवं सर्वशरीरस्था सर्पिर्वत् परमेश्वरी ।**
**विना चोपासनां देवि न ददाति फलं नृणाम् ॥ ७८ ॥**

बिम्ब के पूजन की अनुरूपता और साधक के विश्वास से देवता का सामीप्य मिलता है । गाय का घी शरीर में स्थित रहता हुआ भी अङ्गों को पुष्ट नहीं करता । अपने कर्म के द्वारा रचित घृत देने पर उसे ही पुष्ट करता है । इसी प्रकार घी के समान सभी शरीरों में स्थित परमेश्वरी उपासना के बिना मनुष्यों को फल नहीं देतीं ॥ ७६-७८ ॥

**सकलीकृत्य तत्प्राणान् समुद्दीप्येन्द्रियाणि च ।**
**प्रतिष्ठाप्यार्चयेद्देवि चान्यथा निष्फलं भवेत् ॥ ७९ ॥**

**नियमपालन का महत्त्व**—सकलीकरण कर, देवता के प्राणों और इन्द्रियों को समुद्दीप्त कर तथा प्राणप्रतिष्ठा कर अर्चन करे । हे देवि ! अन्यथा कोई फल नहीं होता ॥ ७९ ॥

**मन्त्रहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् ।**
**क्षमया साधयेत् सर्वं हीनमङ्गं पदं तथा ॥ ८० ॥**

मन्त्रहीन, क्रियाहीन और विधिहीन अङ्ग या पद जो कुछ हो, उसे क्षमाप्रार्थना द्वारा सिद्ध करे ॥ ८० ॥

**नियमादतिरेकेण यद् यत् कर्म करोति यः ।**
**न किञ्चिदप्यस्य फलं सिध्यति क्रमदोषतः ॥ ८१ ॥**

नियम से अतिरिक्त जो भी कर्म किया जाता है, उसका कोई भी फल क्रमदोष के कारण नहीं होता ॥ ८१ ॥

**न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।**
**यथाविधि कृतानीह सत्कर्माणि फलन्ति हि ॥ ८२ ॥**

न्यून या अधिक कर्मों का कभी फल नहीं होता । यथाविधि किये गए सत्कर्म ही फल देते हैं ॥ ८२ ॥

**तद्विधानकृतं कर्म जपहोमार्चनादिषु ।**
**देवताप्रीतिदं भूयाद् भुक्तिमुक्तिफलप्रदम् ॥ ८३ ॥**

जप, होम, अर्चन आदि में उनकी विधिपूर्वक किये गए कर्म ही देवता को प्रसन्न करने वाले होते हैं और भुक्ति मुक्तिरूपी फलदायक होते हैं ॥ ८३ ॥

**देवस्य मन्त्ररूपस्य मन्त्रव्याप्तिमजानताम् ।**
**कृतार्चनादिकां सर्वं व्यर्थं भवति शाम्भवि ॥ ८४ ॥**

**देवता मन्त्र और यन्त्र में ऐक्य**—देवता, मन्त्र और यन्त्र की परस्पर व्यापकता को जाने बिना जो अर्चन आदि किया जाता है, वह सब हे शाम्भवि ! व्यर्थ होता है ॥ ८४ ॥

**यन्त्रं मन्त्रमयं प्रोक्तं देवता मन्त्ररूपिणी ।**
**यन्त्रे सा पूजिता देवि सहसैव प्रसीदति ॥ ८५ ॥**

'यन्त्र' मन्त्रमय कहा गया है और 'देवता' मन्त्ररूपिणी है । 'यन्त्र' में उनका पूजन किये जाने से हे देवि ! वह तुरन्त ही प्रसन्न होती है ॥ ८५ ॥

**कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ।**
**यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥ ८६ ॥**

**'यन्त्र'-शब्द की व्युत्पत्ति**—काम क्रोधादि दोषों से उत्पन्न सभी प्रकार के दुःखों का नियन्त्रण करने से इसे 'यन्त्र' कहते हैं । 'यन्त्र' में पूजा करने से देवता प्रसन्न होते हैं ॥ ८६ ॥

**शरीरमिव जीवस्य दीपस्य स्नेहवत् प्रिये ।**
**सर्वेषामपि देवानां तथा यन्त्रं प्रतिष्ठितम् ॥ ८७ ॥**

हे प्रिये ! जीव के लिए जैसे शरीर है और दीपक के लिये जैसे तेल या घी है, उसी प्रकार सभी देवताओं के लिए उनका प्रतिष्ठित 'यन्त्र' होता है ॥ ८७ ॥

**तस्माद् यन्त्रं लिखित्वा वा ध्यात्वा सावृतिकं शिवम् ।**
**ज्ञात्वा गुरुमुखात् सर्वं पूजयेद्विधिना प्रिये ॥ ८८ ॥**

हे प्रिये ! अतः 'यन्त्र' की रचना कर तथा साकार शिव का ध्यान कर और गुरुमुख से सब कुछ जानकर विधिपूर्वक पूजन करे ॥ ८८ ॥

**एकपीठे पृथक्पूजां विना यन्त्रं करोति यः ।**
**अङ्गाङ्गित्वं परित्यज्य देवताशापमाप्नुयात् ॥ ८९ ॥**

**यन्त्रपूजा की विधि**—एक पीठ में पृथक् देवताओं की पूजा उनके यन्त्रों के बिना जो करता है, अङ्गाङ्गी भाव न होने से उस साधक को देवता का शाप मिलता है ॥ ८९ ॥

**एकपीठे कुलेशानि स्वे स्वे यन्त्रे पृथक्पृथक् ।**
**यजेदावरणोपेता देवतास्तद्विधानतः ॥ ९० ॥**

हे कुलेशानि ! अतः एक पीठ में पृथक् देवताओं की पूजा उनके अलग यन्त्रों में उनकी पद्धति से उनके आवरणों के सहित अलग अलग करनी चाहिए ॥ ९० ॥

**आवाह्य देवतामेकां पूजयेदन्यदेवताम् ।**
**उभाभ्यां लभते पापं मन्त्री चञ्चलमानसः ॥ ९१ ॥**

एक देवता का आवाहन कर अन्य देवता का पूजन करने वाला चञ्चल मन साधक दोनों ही देवताओं का शाप प्राप्त करता है ॥ ९१ ॥

**इत्यादिलक्षणं ज्ञात्वा गुरुतः शास्त्रतः प्रिये ।**
**विधिनाभ्यर्चयेत् सम्यग्देवता सुप्रसीदति ॥ ९२ ॥**
**षोडशैरुपचारैस्तु साङ्गं सावरणं शिवम् ।**
**पूजयेन्मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ॥ ९३ ॥**
**महाषोढोदिताशेषपरिवारांश्च शाम्भवि ।**
**प्रणवादिनमोऽन्तेन तत्तन्नाम्ना समर्चयेत् ॥ ९४ ॥**

इन नियमों को गुरुदेव से और शास्त्र से जानकर, हे प्रिये ! विधिपूर्वक सोलह उपचारों से अङ्गों और आवरणों सहित शिव का अर्चन करे, तो देवता प्रसन्न होते हैं । हे शाम्भवि ! मूलमन्त्र से गन्धपुष्पाक्षतादि के द्वारा महाषोढा में उल्लिखित समस्त परिवार का, प्रत्येक नाम के आदि में प्रणव (ॐ) और अन्त में 'नमः' लगाकर पूजन करे ॥ ९२-९४ ॥

**आगमोक्तेन मार्गेण तर्पयेदलिबिन्दुभिः ।**
**अङ्गुष्ठानामिकाभ्याञ्च नखे निःसृतमूर्ध्वतः ।**
**स्वपात्रस्पन्दनिस्यन्दं विधिवत् कुलनायिके ॥ ९५ ॥**
**सकृत्तर्पणमुत्सृज्य जप्त्वा मूलञ्च पादुकाम् ।**
**अन्तःशक्तिं समुत्थाप्य तर्पयेद्देहदेवताः ॥ ९६ ॥**

**देवतर्पण की विधि**—हे कुलनायिके ! आगमोक्त मार्ग से अलि ( मद्य ) बिन्दुओं से तर्पण करे । अपने पात्र में स्थित द्रव्य में से विधिवत अंगुष्ठ और अनामिका ( तीसरी अंगुलि ) इन दोनों के संयुक्त नख से द्रव्य ऊपर निकालकर मूल मन्त्र और पादुका का जप कर अन्तःशक्ति का स्मरण करते हुये देवताओं का तर्पण करे ॥ ९५-९६ ॥

**अङ्गुष्ठो भैरवो देवो अनामा चण्डिका प्रिये ।**
**अनामाङ्गुष्ठयोगेन तर्पयेत् कुलसन्ततिम् ॥ ९७ ॥**

अंगुष्ठ भैरवरूप हैं और अनामा चण्डिकारूप । इन दोनों के योग से कुलसन्तति (शक्ति परिवार) का तर्पण करे ॥ ९७ ॥

**अङ्गुष्ठानामिकाभ्याञ्च वश्यकर्मणि तर्पयेत् ।**
**तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके ।**
**कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ॥ ९८ ॥**

हे प्रिये ! वश्यकर्म में अंगुष्ठ और अनामिका से, अभिचार कर्म में तर्जनी और अंगुष्ठ से तथा स्तम्भन कर्म में कनिष्ठा और अंगुष्ठ से तर्पण करना चहिए ॥ ९८ ॥

**एवं सन्तर्प्य देवेशि कुलद्रव्यैर्यथाविधि ।**
**देवतापुरतो देवि गुरुपङ्क्तीश्च पूजयेत् ।**
**पङ्क्तित्रयक्रमेणाथ ज्ञात्वा सम्यगनन्यधीः ॥ ९९ ॥**

इस प्रकार यथा विधि कुलद्रव्यों से तर्पण कर तीनों गुरु पंक्तियों को समुचित रूप से जानकर देवता के समक्ष सावधानीपूर्वक उनका पूजन करना चाहिए ॥ ९९ ॥

**कराभ्यां चिन्मुद्रां समधुनृकपालञ्च दधतीं**
**द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ।**
**कृपापूर्णापाङ्गीमरुणनयनामम्बरजटा-**
**मुपेतां सिद्धौघैर्यजतु गुरुपंक्तिं क्रमगतिम् ॥ १०० ॥**

**गुरुपंक्ति का ध्यान**—निम्न प्रकार गुरु पंक्ति का ध्यान करे । यथा—

कराभ्यां चिन्मुद्रां समधुनृकपालं च दधतीं
द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ।
कृपापूर्णापाङ्गीमरुणनयनामम्बरजटा-
मुपेतां तिस्रौघैर्यजतु गुरुपङ्क्तिं कृतमतिः ॥

दोनों हाथों में चिन्मुद्रा धारण करने वाली, मधु के सहित नर कपाल लिए हुए, स्वर्ण के समान और अरुण वर्ण के पुष्पों का वस्त्र धारण करने वाली, कृपापूर्ण लाल-लाल नेत्रों वाली, अम्बर रूप जटा धारण करने वाली तीनों पङ्क्ति से युक्त गुरुपङ्क्ति का साधक यजन करे ।

**एवं संपूज्य धूपञ्च दीपं नैवेद्यमेव च ।**
**आसवं पिशितोपेतं भक्ष्याणि विविधानि च ।**
**कदल्यादिफलान्येव ताम्बूलञ्च समर्पयेत् ॥ १०१ ॥**

इस प्रकार ध्यानपूर्वक धूप, दीप, नैवेद्य आसव और मांसयुक्त विविध भक्ष्य पदार्थ, केला आदि फल तथा ताम्बूल समर्पित करे ॥ १०१ ॥

**इति ते कथितं देवि कुलाचारस्य लक्षणम् ।**
**द्रव्यसंस्कारशुद्ध्यादि किमन्यत् श्रोतुमिच्छसि ॥ १०२ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे द्रव्यसंस्कार-विधानकथनं नाम षष्ठोल्लासः ॥ ६ ॥**



इस प्रकार मैंने कुलाचार के लक्षण, द्रव्य, संस्कार एवं शुद्धि आदि को बताया । अब हे देवि ! आप अन्य क्या सुनना चाहती हैं ? ॥ १०२ ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में द्रव्यसंस्कार-विधानकथन नामक छठवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ ६ ॥**



# अथ सप्तमोल्लासः

श्रीदेव्युवाच

कुलेश बटुकादीनां बलिञ्च शक्तिलक्षणम् ।
तदद्रव्यस्यैव स्वीकारं वद मे करुणानिधे ॥ १ ॥

**बटुक और शक्तिपूजन**—श्री देवी ने कहा—हे कुलेश ! हे करुणा के समुद्र ! बटुकादि को बलि और शक्ति के लक्षण तथा उनके द्रव्य स्वीकार के सम्बन्ध में भी मुझे बताइये ॥ १ ॥

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण तत्त्वज्ञानं प्रकाशते ॥ २ ॥

**बटुकादि को बलि देना आवश्यक**—ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने पूछा है, उसे मैं कहूँगा । उसके सुनने मात्र से तत्त्वज्ञान प्रकाशित होता है ॥ २ ॥

यावन्नो वटुके दद्यात्तावन्नैव कुलेश्वरि ।
तृप्यन्ति देवताः सर्वाः स्मरणाद् यजनादपि ॥ ३ ॥

हे कुलेश्वरि ! जब तक बटुक को बलि नहीं दी जाती, तब तक ध्यान और पूजन करने से भी किसी देवता की तृप्ति नहीं होती ॥ ३ ॥

वटुकादीन् यजेत्तस्माद् गन्धपुष्पासवामिषैः ।
तत्तन्मन्त्रविधानेन देवता प्रीतिमाप्नुयात् ॥ ४ ॥

अतः बटुकादि का उनके मन्त्रविधान से गन्ध, पुष्प, अमृत, आसव और आमिष से पूजन कर देवता की प्रसन्नता को प्राप्त करे ॥ ४ ॥

यत्किञ्चिद्द्रव्यसंघातं पूजार्थं भोगहेतुना ।
आनीतं दीयते भक्त्या क्षेत्रपेभ्यः कुलेश्वरि ॥ ५ ॥

पूजा एवं भोग के लिये जो भी द्रव्यसामग्री लाई गई हो, हे कुलेश्वरि ! उसे भक्तिपूर्वक क्षेत्रपालों को प्रदान करे ॥ ५ ॥

वटुकमन्त्रान् वक्ष्यामि शृणुष्व कुलनायिके ।
यैः समर्चितमात्रेण सर्वे नश्यन्त्युपद्रवाः ॥ ६ ॥

**बटुकबलि के मन्त्र**—अब बटुक के मन्त्रों को कहूँगा । हे कुलनायिके ! सुनिए। इन मन्त्रों से पूजन करने मात्र से सभी उपद्रव नष्ट हो जाते हैं ॥ ६ ॥

तारत्रयं ततो देवीपुत्रेति बटुकेति वा ।
नाथेति कपिलजटाभारभास्वरपिङ्गल ॥ ७ ॥
त्रिनेत्रेति पदं पश्चाज्ज्वालामुखपदं ततः ।
इमां पूजां बलिं गृहणद्वयं पावकवल्लभा ।
उक्तो वटुकमन्त्रोऽयं चतुश्चत्वारिंशदक्षरैः ॥ ८ ॥
बलिदानेन सन्तुष्टो बटुकः सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥ ९ ॥

तीन प्रणव ( ॐ ), उसके बाद देवीपुत्र, फिर 'बटुकनाथ कपिल जटाभारभास्करपिङ्गल', फिर त्रिनेत्र, इसके बाद 'ज्वालामुख' पद, फिर 'इमां पूजां बलिं' के बाद दो 'गृहण गृहण' फिर स्वाहा पद कहे । यह ४४ अक्षरों का बटुकमन्त्र है । इससे बलि देकर निम्न मन्त्र से प्रार्थना करे ।

**विमर्श—मन्त्रोद्धार**—ॐ ॐ ॐ देवीपुत्र बटुकनाथ कपिलजटाभार-भास्वर पिङ्गल त्रिनेत्र ज्वालामुख ! इमां पूजां बलिं गृहण गृहण स्वाहा । (४४)

बलिदानेन सन्तुष्टो वटुकः सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥ ७-९ ॥

तारत्रयं ततः सर्वयोगिनीभ्यः पदं वदेत् ।
तत्पश्चात् सवर्भूतेभ्यः सर्वभूताधिवर्त्ति च ॥ १० ॥
पदं ताभ्यो डाकिनीभ्यः शाकिनीभ्यः पदं वदेत् ।
त्रैलोक्येति पदं चैव वासिनीभ्य इमां वदेत् ॥ ११ ॥
पूजां बलिं गृहणयुग्मं स्वाहान्तो योगिनीमनुः ।
कथितोऽयं महेशानि मन्त्रः पञ्चादशाक्षरः ॥ १२ ॥
या काचिद् योगिनी रौद्रा सौम्या घोरतरा परा ।
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ॥ १३ ॥

ॐ ॐ ॐ सर्वयोगिनीभ्यः सर्वभूतेभ्यः सर्वभूताधिवर्त्तिताभ्यः डाकिनीभ्यः शाकिनीभ्यः त्रैलोक्यवासिनीभ्यः इमां पूजां बलिं गृहण गृहण स्वाहा। हे महेशानि ! यह ५० अक्षरों का योगिनीमन्त्र कहा गया है । इससे बलि देकर निम्न मन्त्र से प्रार्थना करे ।

या काचिद् योगिनी रौद्रा सौम्या घोरतरा परा ।
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ।। १०-१३ ।।

**तारत्रयं वदेत् सर्वभूतेभ्यः सर्व एव हि ।**
**पश्चाद् भूतपतिभ्यो हृद्युक्तः सप्तदशाक्षरः ।। १४ ।।**
**भूता ये विविधाकारा दिव्या भौमान्तरिक्षगाः ।**
**पातालसंस्था मे केविच्छिवयोगेन भाविताः ।। १५ ।।**
**ध्रुवाद्याः सत्यसन्धाश्च इन्द्राद्याः स्वर्व्यवस्थिताः ।**
**तृप्यन्तु प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।। १६ ।।**

**सर्वभूतपति बलि के मन्त्र**—ॐ ॐ ॐ सर्वभूतेभ्यः सर्वभूतपतिभ्यो स्वाहा । यह १७ अक्षरों का मन्त्र है । इससे बलि देकर प्रार्थना करे—

भूता ये विविधाकारा दिव्या भौमान्तरिक्षगाः ।
पातालसंस्था ये केचिच्छिवयोगेन भाविताः ।।
ध्रुवाद्याः सत्यसन्धाश्च इन्द्राद्याः स्वर्व्यवस्थिताः ।
तृप्यन्तु प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ।। १४-१६ ।।

**तारत्रयं वदेद्देहियुग्मं देवीपदं वदेत् ।**
**पुत्राय बटुकनाथाय पश्चादुच्छिष्टहारिणे ।**
**सर्वविघ्नान् पदं पश्चात् नाशयद्वितयं तथा ।। १७ ।।**
**गृह्णयुग्मं रुरुपदं क्षेत्रपालपदं ततः ।**
**सर्वोपचारसहितामिमां पूजां बलिं वदेत् ।**
**गृह्ण गृह्ण द्विठान्तोऽयं क्षेत्रपालमनुः प्रिये ।। १८ ।।**
**चतुःषष्ट्यक्षरैः प्रोक्तः सर्वसिद्धिप्रदायकः ।**
**योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किङ्करः ।**
**प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ।। १९ ।।**

**क्षेत्रपालबलि के मन्त्र**—ॐ ॐ ॐ देहि देहि देवीपुत्राय बटुकनाथाय उच्छिष्टहारिणे सर्वविघ्नान् नाशय नाशय गृह्ण गृह्ण रुरु क्षेत्रपाल सर्वोपचार-सहितामिमां पूजां बलिं गृह्ण गृह्ण स्वाहा ।

हे प्रिये ! यह ६४ अक्षरों का सर्वसिद्धिप्रदायक क्षेत्रपाल का मन्त्र है। इससे बलि देकर प्रार्थना करे—

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालस्य किङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ।। १७-१९ ।।

तारत्रयं वदेत्तारं श्रीप्रासादपरामनुः ।
ह्रां ह्रीं ह्रूं युगञ्चादौ भैरवाधिष्ठिताय च ॥ २० ॥
अक्षोभ्यानन्दतः पश्चाद्धृदयाभीष्टदः परम् ।
सिद्धार्थपदमाभाष्य पश्चादवतरद्वयम् ॥ २१ ॥
क्षेत्रपालपदं पश्चात् महाशान्त पदं ततः ।
मातृपुत्रपदं पश्चात् कुलपुत्रपदं तथा ॥ २२ ॥
सिद्धिपुत्रपदं चास्मिन् स्थानाधिपपदं ततः ।
ग्रामाधिपतयेऽस्मिन् स्याद्देशाधिपतये ततः ॥ २३ ॥
वदेद् बटुकनाथेति देवीपुत्रपदं ततः ।
मेघनादपदं पश्चात् प्रचण्डोग्रपदं वदेत् ॥ २४ ॥
कपालीति पदं पश्चाद्भीषणेति पदं वदेत् ।
स्यात् सर्वविघ्नाधिपतये इमां पूजां बलिं वदेत् ॥ २५ ॥
गृहण गृहण कुरुद्वन्द्वं मम दूरययुग्मकम् ।
ज्वलयुक्प्रज्वलयुगं सर्वविघ्नानीतीरयेत् ॥ २६ ॥
नाशयद्वितयं क्षां क्षं पश्चाद् बुद्धिमितीरयेत् ।
क्षेत्रपालाय वौषट् हूं षष्ट्युत्तरशताक्षरः ॥ २७ ॥

राजराजेश्वर बलि का मन्त्र—ॐ ॐ ॐ ह्सौः स्हौः ह्रां ह्रीं ह्रूं भैरवाधिष्ठिताय अक्षोभ्यानन्द हृदयाभीष्टदः सिद्धार्थ अवतर अवतर क्षेत्रपाल महाशान्त मातृपुत्र कुलपुत्र सिद्धिपुत्र अस्मिन् स्थानाधिप ग्रामाधिपतये अस्मिन् देशाधिपतये वटुकनाथ देवीपुत्र मेघनाद प्रचण्डोग्रकपाली भीषण सर्वविघ्नाधिपतये इमां पूजां बलिं गृहण गृहण कुरु कुरु मम दूरय दूरय ज्वल ज्वल प्रज्वल प्रज्वल सर्वविघ्नान् नाशय नाशय क्षां क्षं बुद्धिं क्षेत्रपालाय वौषट् हूं ।

यह १६० अक्षरों का मन्त्र है ॥ २७ ॥

तारत्रयं वदेत् पश्चादमुक क्षेत्रपाल च ।
राजराजेश्वर इमां पूजां बलिमतः परम् ।
गृहणयुग्मं द्विठान्तोऽयमष्टाविंशाक्षरो मनुः ॥ २८ ॥
अनेन बलिदानेन वटुवंशसमन्वितः ।
राजराजेश्वरो देवो मे प्रसीदतु सर्वदा ॥ २९ ॥

ॐ ॐ ॐ अमुकक्षेत्रपाल राजराजेश्वर इमां पूजां बलिं गृहण गृहण स्वाहा। यह २८ अक्षरों का मन्त्र है । इनसे वटुवंशसमन्वित राजराजेश्वर को बलि देकर प्रार्थना करे—

अनेन बलिदानेन वटुवंशसमन्वितः ।
राजराजेश्वरो देवो मे प्रसीदतु सर्वदा ॥ २९ ॥

**पश्चिमे वटुकं देवमुत्तरे योगिनीबलिम् ।**
**पूर्वे भूतबलिं दद्यात् क्षेत्रपालञ्च दक्षिणे ।**
**राजराजेश्वरं मध्ये पूजयेत् कुलनायिके ॥ ३० ॥**

**बटुकादि बलि देने के स्थान**—बटुक को पश्चिम में, योगिनी को उत्तर में, सर्वभूत को पूर्व में और क्षेत्रपाल को दक्षिण में बलि देकर, हे कुलनायिके ! मध्य में राजराजेश्वर की पूजा करे ॥ ३० ॥

**अङ्गुष्ठानामिकाभ्याञ्च बटुकस्य बलिः स्मृतः ।**
**तर्जनीमध्यमानामिकाङ्गुष्ठैर्योगिनीबलिः ॥ ३१ ॥**
**अङ्गुलीभिश्च सर्वाभिरुक्तो भूतबलिः प्रिये ।**
**अङ्गुष्ठतर्जनीभ्याञ्च क्षेत्रपालबलिर्भवेत् ।**
**अङ्गुष्ठमध्यमाभ्याञ्च राजराजेश्वरस्य च ॥ ३२ ॥**

**बटुकादि बलि में अंगुलि नियम**—हे प्रिये ! अंगुष्ठ अनामिका से वटुक को, तर्जनी, मध्यमा, अनामा, अंगुष्ठ से योगिनी को, सभी अंगुलियों से सर्वभूत को, अंगुष्ठ तर्जनी से क्षेत्रपाल को और अंगुष्ठ मध्यमा से राजराजेश्वर को बलि दे ॥ ३१-३२ ॥

**बटुकादीन् समर्च्यैवं कुलदीपान् प्रदर्शयेत् ।**
**ईषद्रक्तसुपिष्टेन चतुरङ्गुलिमानतः ॥ ३३ ॥**
**दीपान् डमरुकाकारान् त्रिकोणानतिशोभनान् ।**
**कर्षाज्यग्राहिणः कुर्य्यान्नव सप्ताथ पञ्च वा ॥ ३४ ॥**
**अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभान् ।**
**त्रिधा देव्युपरि भ्राम्य कुलदीपान् निवेदयेत् ॥ ३५ ॥**
**समस्तचक्रचक्रेशि देवेशि सकलात्मिके ।**
**आरार्त्रिकमिदं देवि गृहाण मम सिद्धये ।**

**कुलदीप के लक्षण और मन्त्र**—वटुकादि का पूजन कर कुलदीपों का अर्चन करे । चार अंगुल बड़े डमरु के आकार के तीन कोने वाले सुन्दर नौ, सात या पाँच दीपक हलके लाल रंग के आटे से बनाये । दीपक ऐसे हों कि उनमें एक कर्ष (तोला) घी आ जाय । फिर अन्तस्तेज को बहिस्तेज से मिलाते हुए अमित प्रभा वाले कुलदीपकों को तीन बार देवी के ऊपर घुमाकर इस मन्त्र से निवेदित करे—

समस्तचक्रचक्रेशि ! देवेशि ! सकलात्मिके !
आरार्त्रिकमिदं देवि ! गृहाण मम सिद्धये ।। ३३-३६ ।।

**कुलदीपान् प्रदर्श्याथ शक्तिपूजां समाचरेत् ।। ३६ ।।**
**स्वशक्तिं वीरशक्तिं वा दीक्षितां गुरुमार्गतः ।**
**पाययित्वा चरेत् पानमिति शास्त्रस्य निश्चयः ।। ३७ ।।**

**शक्ति के पीने के बाद साधक द्वारा पान—**

कुलदीपों को प्रदर्शित कर साधक अब शक्ति की पूजा करे । स्वशक्ति या वीरशक्ति या विशेष रूप से दीक्षित शक्ति को पान कराकर साधक गुरु परम्परा से स्वयं पान करे । यह शास्त्र का निर्णय है ।। ३६-३७ ।।

**अदीक्षितां स्त्रियं कुर्यात् सद्यः संस्कारमम्बिके ।**
**मन्त्रदीक्षाविधानेन् शुद्धा भवति नान्यथा ।। ३८ ।।**

हे अम्बिके ! साधक अदीक्षित स्त्री का तुरन्त संस्कार करे । मन्त्रदीक्षा की विधि से वह शुद्ध होती है, अन्य प्रकार से नहीं ।। ३८ ।।

**तस्मात् सुलक्षणां शक्तिं गन्धपुष्पाक्षतादिभिः ।**
**अभ्यर्च्य देवताबुद्ध्या भोगपात्रं निवेदयेत् ।। ३९ ।।**

अतः सुलक्षणा शक्ति को देवता मान कर गन्ध पुष्पाक्षत आदि से उसका पूजन कर उसे भोगपात्र प्रदान करे ।। ३९ ।।

**तदन्ते कन्यकाश्चापि प्रमदाश्च मनोहराः ।**
**सम्पूज्य देवताबुद्ध्या दद्यात् पात्रं पृथक् पृथक् ।। ४० ।।**

उसके बाद सुन्दर कन्याओं और स्त्रियों को भी देवतास्वरूप मानकर उनकी पूजा कर उनमें से प्रत्येक को अलग अलग पात्र प्रदान करे ।। ४० ।।

**अनिवेद्य तु यः शक्त्यै कुलद्रव्यं निषेवते ।**
**पूजितं निष्फलं तस्य देवता न प्रसीदति ।। ४१ ।।**

जो शक्ति को बिना दिये कुलद्रव्य का सेवन करता है, उसकी पूजा निष्फल होती है और देवता प्रसन्न नहीं होते ।। ४१ ।।

**चण्डाली चर्मकारी च मातङ्गी पुक्कसी तथा ।**
**श्वपची खट्टकी चैव कैवर्त्ती विश्वयोषितः ।। ४२ ।।**
**कुलाष्टकमिदं प्रोक्तमकुलाष्टकमुच्यते ।**

**कुलाष्टक : आठ कुलशक्तियाँ**—१ चाण्डाली, २ चर्मकारी, ३ मातङ्गी, ४ पुक्कसी, ५ श्वपची, ६ खट्टकी, ७ कैवर्ती, ८ विश्वयोषिता—ये आठ कुलशक्तियाँ 'कुलाष्टक' कही गई हैं ॥ ४२-४३ ॥

**कन्दुकी शौण्डिकी चैव शस्त्रजीवी च रञ्झकी ॥ ४३ ॥**
**गायकी रजकी शिल्पी कौलिकी च तथाष्टमी ।**

**अकुलाष्टक : आठ अकुल शक्तियाँ**—१. कन्दुकी, २. शौण्डिकी, ३. शस्त्रजीवी, ४. रजकी, ५. गायकी, ६. रजकी, ७. शिल्पी, ८. कौलिकी—ये आठ अकुल शक्तियाँ 'अकुलाष्टक' कही गई हैं ॥ ४३-४४ ॥

**तन्त्रमन्त्रसमायुक्ता समयाचारपालिका ॥ ४४ ॥**
**कुमारी च व्रतस्था च योगमुद्राधरापि वा ।**
**पूजाकाले स्वतः प्राप्ता सा ज्ञेया सहजा बुधैः ॥ ४५ ॥**

**'सहजा' शक्ति**—तन्त्र-मन्त्र की ज्ञाता, समयाचार का पालन करने वाली, कुमारी अथवा व्रतधारिणी या योगिनी जो शक्ति पूजाकाल में स्वयं ही उपस्थित हो जाय, विद्वानों द्वारा वह 'सहजा' शक्ति कही गई हैं ॥ ४४-४५ ॥

**उक्तजात्यङ्गनाभावे चातुर्वर्ण्याङ्गनां यजेत् ।**

**शक्ति के अभाव में उसका अनुकल्प**—उक्त शक्तियों में से किसी भी शक्ति के न होने पर अर्थात् उक्त शक्तियों का अभाव होने पर चारों वर्ण में से किसी भी वर्ण की स्त्री का पूजन करे ॥ ४६ ॥

**सुरूपा तरुणी शान्ता कुलाचारयुता शुचिः ॥ ४६ ॥**
**शङ्काहीना भक्तियुक्ता गूढा शास्त्रोपजीविनी ।**
**अलोलुपा सुशीला च स्मितास्या प्रियवादिनी ॥ ४७ ॥**
**गुरुदैवतसम्भक्ता सुचिता कौलिकप्रिया ।**
**विमत्सरा विशेषज्ञा देवताराधनोत्सुका ।**
**मनोहरा सदाचारा शक्तिरेषा सुलक्षणा ॥ ४८ ॥**

**'सुलक्षणा' शक्ति**—'सुलक्षणा' शक्ति वह है, जो सुन्दर रूप वाली, तरुणी, शान्ता, कुलाचार परायणा, पवित्रा, शङ्का से हीन, भक्तियुता, गूढ़ रहस्य-युता, शास्त्र को मानने वाली, लोभहीना, सुशीला, जिसके मुख पर मुस्कान हो, मधुरभाषिणी, गुरु और देवता की भक्ति से युक्त, अच्छे विचार वाली, कौलिकों को चाहने वाली, ईर्ष्या एवं द्वेष से रहिता, विशेष बातों की जानने वाली, देवाराधन में रुचि रखने वाली, मनोहरा और सदाचारिणी हो ॥ ४६-४८ ॥

दुष्टोग्रा कर्कशा क्रूरा दुःखिता कुलदूषणी ।
दुराचारा पराधीना भीता लुब्धातुराऽलसा ॥ ४९ ॥
निद्रासक्तातिदुर्म्मेधा हीनाङ्गी व्याधिपीडिता ।
दुर्गन्धा कुत्सिता मूढा वृद्धोन्मत्ता रहस्यभित् ॥ ५० ॥
कुतर्का कुत्सितालापा निर्लज्जा कलहप्रिया ।
विरूपोन्मार्गगा स्तब्धा पङ्ग्वन्धविकृतानना ।
ईदृशीं मन्त्रयुक्ताञ्च शक्तिं यागे विवर्जयेत् ॥ ५१ ॥

**'वर्जनीया' शक्ति**—जो शक्ति दुष्टा, उग्रा, कर्कशा, क्रूरा, दुःखिता, कुल को दूषित करने वाली, दुराचारिणी, पराधीना, डरी हुई, लोभिनी, व्याकुला, आलसी, निद्रा में रुचि रखने वाली, दुर्बुद्धि वाली, अङ्गहीना, रोगिणी, दुर्गन्धा, कुरूपा, मूर्खा, बूढ़ी, पगली, रहस्य की बातों को भी कहने वाली, कुतर्किणी, गन्दी बात करने वाली, निर्लज्जा, झगड़ालू, विकृत रूप वाली, गलत मार्ग पर चलने वाली, चुप रहने वाली, लँगड़ी, अन्धी, विकृत मुख वाली हो, वह मन्त्रयुक्ता भी हो, तो उसे पूजायाग में न रखे ॥ ४९-५१ ॥

ततोऽर्चनादिकं सर्वं मन्त्रोदकपुरःसरम् ।
इतः पूर्वादिमनुना मन्त्री देव्यै समर्पयेत् ॥ ५२ ॥
तारत्रयमितः पूर्वं प्राणबुद्धी ततः परम् ।
देहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्तिषु ॥ ५३ ॥
मनसा चेतसा वाचा कर्मणा तत्परं वदेत् ।
हस्ताभ्याञ्च ततः पद्भ्यामुदरेण ततः परम् ॥ ५४ ॥
शिश्ना च यत् स्मृतं पश्चाद् यदुक्तं यत् कृतं वदेत् ।
तत् सर्वं गुरवे चान्ते मत्समर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तस्त्रिसप्तत्यक्षरः प्रिये ॥ ५५ ॥

**देवी को पूजासमर्पण का मन्त्र**—हे प्रिये ! तब समस्त अर्चनादि को अभिमन्त्रित जल से ७३ अक्षरों वाले निम्न मन्त्र द्वारा देवी को समर्पित करे—

ॐ ॐ ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतःजाग्रत्स्वप्नसुषुप्तिषु मनसा चेतसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना च यत् स्मृतं यत्कृतं यदुक्तं तत् सर्वं गुरवे समर्पितमस्तु स्वाहा (७३) ॥ ५२-५५ ॥

ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे ।
तव कृत्यमिदं सर्वमिति ज्ञात्वा क्षमस्व मे ॥ ५६ ॥

क्षमाप्रार्थनामन्त्र—

ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे ।
तव कृत्यमिदं सर्वमिति ज्ञात्वा क्षमस्व मे ॥ ५६ ॥

**एवं सम्प्रार्थ्य देवेशि स्तुत्वा नत्वा च भक्तितः ।**
**प्रधानदेवतामूर्त्तौ परिवारान् समर्चयेत् ।**
**एवं सावरणां देवीं चिन्तयेत् स्वहृदम्बुजे ॥ ५७ ॥**
**शेषिकाये समर्प्यात्ममूलमन्त्रेण शोधयेत् ।**

हे देवेशि ! इस प्रकार प्रार्थना कर स्तुतिपूर्वक भक्ति से नमस्कार कर प्रधान देवता की मूर्ति में उनके परिवारों का अर्चन करे । आवरणसहित अपने हृदयकमल पर देवी का ध्यान कर 'शेषिका' (Remainder) को समर्पित कर मूलमन्त्र से अपने को शुद्ध करे ॥ ५७-५८ ॥

**स्याद्वाग्भवं हृदुच्छिष्टचाण्डालि तदनन्तरम् ॥ ५८ ॥**
**वदेन्मातङ्गि सर्वन्ते वश्यंकुरुयुगन्ततः ।**
**एकविंशतिवर्णैश्च शेषिकामनुरीरितः ॥ ५९ ॥**
**मन्त्रेणानेन निर्माल्यं शेषिकायै समर्पयेत् ।**
**देवीमुच्छिष्टमातङ्गीं ध्यायेत् त्रैलोक्यमोहिनीम् ॥ ६० ॥**
**वीणावाद्यविनोदगीतनिरतां नीलांशुकोल्लासिनीं**
**बिम्बोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशालकाम् ।**
**मृद्वङ्गीं सिंतशङ्खकुण्डलधरां माणिक्यभूषोज्ज्वलां**
**मातङ्गीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ॥६१॥**

शेषिका का मन्त्र—

**ऐं नमः उच्छिष्टचाण्डालि मातङ्गि ! सर्वं ते वश्यं कुरु कुरु (२१) ।**

यह २१ अक्षरों का शेषिका मन्त्र है । इस मन्त्र से शेषिका को निर्माल्य समर्पित करे । फिर त्रैलोक्यमोहिनी देवी उच्छिष्टमातङ्गी का ध्यान करे । यथा—

वीणावाद्य, विनोद एवं गीत में तत्पर, नीले वस्त्रों से कान्तिमती, बिम्ब के समान अधरोष्ठों वाली, अलक्तक से आर्द्र चरणों वाली, केश पाशों को बिखेरे हुए, मृदु अंगों वाली श्वेत शङ्ख एवं कुण्डलों को धारण करने वाली, माणिक्य जटित उज्ज्वल आभूषणों से भूषित, सुन्दरस्मित युक्त मुख वाली, शुक के समान श्यामल वर्ण की देवी मातङ्गी का ध्यान करना चाहिए ॥ ५९-६१ ॥

**ततः श्रीगुरुरूपाय साक्षात् परशिवाय च ।**
**कराभ्यां पात्रमुद्धृत्य सद्वितीयं समर्पयेत् ॥ ६२ ॥**

**गुरु द्वारा शिष्यों को तत्त्वत्रय प्रदान**—तदनन्तर दोनों हाथों से पात्र उठा कर द्वितीयतत्त्व के साथ साक्षात् परशिवस्वरूप श्रीगुरुदेव को प्रदान करे ॥ ६२॥

**स्वसम्प्रदायसंयुक्तैर्वीरैश्च सह पूजयेत् ।**
**अन्योन्यवन्दनं कृत्वा पिबेत्तत्तदनुज्ञया ॥ ६३ ॥**

अपने सम्प्रदाय वाले वीर साधकों के साथ गुरुदेव का पूजन कर एक दूसरे की वन्दना करते हुये गुरुदेव की अनुमति से पान करे ॥ ६३ ॥

**सव्येनोद्धृत्य पात्रन्तु मुद्रां कृत्वाऽपसव्यतः ।**
**यथाविधि द्वितीयेन गृहणीयान्मन्त्रमुच्चरन् ॥ ६४ ॥**

दाहिने हाथ से पात्र को उठाकर बाएँ हाथ से मुद्रा बनाकर द्वितीय तत्त्व के साथ यथाविधि मन्त्रोच्चारण करते हुये उसे ग्रहण करे ॥ ६४ ॥

**पिशितं माषमात्रन्तु द्रव्यं चुल्लुकसम्मितम् ।**
**आत्मदेहत्रयं तत्त्वं त्रयेणाथ विशोधयेत् ॥ ६५ ॥**

मांस माष (एक माशा) बराबर और द्रव्य एक चुल्लू बराबर लेकर तीन बार में अपनें देहत्रय (स्थूल, सूक्ष्म और पर) का शोधन करे ॥ ६५ ॥

**तरुणोल्लाससहितः प्रसन्नवदनेक्षणः ।**
**गुरुः शिष्यान् समाहूय दद्यात्तत्त्वत्रयं प्रिये ॥ ६६ ॥**

हे प्रिये ! इसके लिये तरुणोल्लास से युक्त, प्रसन्नमुख और कृपादृष्टिपूर्वक गुरुदेव शिष्यों को बुलाकर तीनों तत्त्व प्रदान करें ॥ ६६ ॥

**शिष्योपायनमादाय शुद्धात्मा कुसुमादिकम् ।**
**यथाशक्ति निवेद्याथ वित्तशाठ्यविवर्जितः ॥ ६७ ॥**
**प्रणम्य बहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ।**
**समर्प्योपायनं भक्त्या शिवाय गुरुरूपिणे ॥ ६८ ॥**

हे प्रिये ! शिष्य शुद्धात्मा से, धन की शठता से रहित यथाशक्ति पुष्पादि उपहार सामग्री लेकर गुरुदेव स्वरूप शिव को अर्पित कर उन्हें भक्तिपूर्वक मानसिक रूप से अन्तरात्मा में धीरे धीरे प्रवेश कर अष्टाङ्ग प्रणाम करे ॥ ६७-६८ ॥

**ग्रथिताङ्गुष्ठकौ कृत्वा करौ सक्ताग्रतर्जनी ।**
**जानुभ्यामवनिं गत्वा पञ्चाङ्गं प्रणमेद् गुरुम् ॥ ६९ ॥**

घुटनों के बल पृथ्वी पर बैठकर दोनों हाथों के अँगूठों को ग्रथित कर तर्जनी को आगे निकालकर गुरुदेव को पञ्चाङ्ग प्रणाम करे ॥ ६९ ॥

**विमर्श**—हाथ, पैर, जानु, वक्षस्थल, मस्तक, आँख, वाणी और मन से किया गया प्रणाम अष्टाङ्ग प्रणाम होता है। हाथ, जानु, मस्तक, नेत्र और वाणी द्वारा किया गया प्रणाम पञ्चाङ्ग प्रणाम होता है।

**वामाऽङ्गुष्ठानामिकाभ्यां दक्षहस्तप्रसारितम्।**
**स्पृष्ट्वा विशुद्धहृदय ईषदानतमस्तकः ॥ ७० ॥**
**वामाङ्गुष्ठानामिकाभ्यां शिष्याय श्रीगुरुः प्रिये।**
**प्रकृत्याद्यैः पृथिव्यन्तैश्चतुर्विंशतिभिः प्रिये ॥ ७१ ॥**
**स्वरैरशुद्धतत्त्वैश्च वाग्भवेन कुलेश्वरि।**
**संयुक्तेनात्मतत्त्वेन स्थूलदेहं विशोधयेत् ॥ ७२ ॥**

**शिष्य के देह का शोधन**—हे प्रिये ! श्री गुरुदेव थोड़ा सिर झुकाकर अपने बाएँ हाथ की अंगुष्ठ, अनामा अंगुलियों से शिष्य के दाएँ हाथ को फैलाकर स्पर्श करें और हे प्रिये ! हे कुलेश्वरि ! शुद्ध हृदय से 'प्रकृति' आदि से 'पृथिवी' तक के २४ तत्त्वों द्वारा और वाग्भव (ऐं) बीज से युक्त स्वरों द्वारा आत्मतत्त्व से शिष्य के **स्थूल देह** का शोधन करें ॥ ७०-७२ ॥

**मायादिपुरुषान्तैश्च शुद्धाशुद्धैश्च सप्तभिः।**
**तत्त्वैः स्पर्शाह्वयैर्वर्णैः कामराजेन मन्त्रवित्।**
**युक्तेन विद्यातत्त्वेन सूक्ष्मदेहं विशोधयेत् ॥ ७३ ॥**

फिर 'माया' से 'पुरुष' तक के ७ शुद्धाशुद्ध तत्त्वों को कामराज (क्लीं) से युक्त स्पर्श वर्णों द्वारा विद्यातत्त्व से शिष्य के **सूक्ष्म देह** का शोधन करें ॥७३॥

**शुद्धैः शिवादिविद्यान्तैः पञ्चतत्त्वैश्च व्यापकैः।**
**परया शिवतत्त्वेन परं देहं विशोधयेत् ॥ ७४ ॥**

तदनन्तर 'शिव' से 'विद्या' तक के ५ शुद्ध तत्त्वों को परा (सौः) से युक्त व्यापक परशिवतत्त्व से **परदेह** का शोधन करे ॥ ७४ ॥

**षट्त्रिंशत्तत्त्वसहितमालिन्या बालया प्रिये।**
**सर्वतत्त्वाश्रयं बीजं सर्वतत्त्वैर्विशोधयेत् ॥ ७५ ॥**

हे प्रिये ! तब ३६ तत्त्वों सहित मालिनी बाला से सब तत्त्वों के आश्रय बीज से युक्त बीज का शोधन सब तत्त्वों से करे ॥ ७५ ॥

**शोधयेति पदं दद्यात् सद्द्वितीयमलिं गुरुः।**
**चुल्लुकं गुरुणा दत्तं शोधयामीति चोच्चरन्।**
**भक्त्या चावनतः शिष्यो निःशब्दं त्रिः पिबेदलिम् ॥ ७६ ॥**

**पाणिभ्यां संस्पृशेद्देहं सर्वतत्त्वं समुच्चरन् ।**
**शिरःप्रभृतिपादान्तं शुद्धं देहं विचिन्तयेत् ॥ ७७ ॥**

इसके बाद गुरुदेव शिष्य को द्वितीय सहित अलि ( = मदिरा ) देकर कहें—'शोधय' । गुरु द्वारा प्रदत्त चुल्लू भर अलि ( = मद्य ) को 'सर्वतत्त्वं शोधयामि' कहते हुये शिष्य झुककर भक्तिपूर्वक तीन बार बिना कोई शब्द किये उस मद्य का पान करे और दोनों हाथों से देह को स्पर्श कर यह अनुभव करे कि शिर से पैर तक सारा शरीर शुद्ध हो गया है ॥ ७६-७७ ॥

**स्थूलान्तमात्मतत्त्वं स्यात् सूक्ष्मं विद्यान्तगोचरम् ।**
**परान्तं शिवतत्त्वं स्यादिति तत्त्वत्रयं जगत् ॥ ७८ ॥**

**आत्मादि तत्त्वत्रय के भेद और उनके ज्ञान का फल**—'आत्मतत्त्व' स्थूल देह तक रहता है । 'विद्यातत्त्व' सूक्ष्म शरीर तक दिखाई देता है और 'शिवतत्त्व' परदेह तक है । सारा जगत् तत्त्वत्रयात्मक है ॥ ७८ ॥

**एवं तत्त्वत्रयज्ञानं गुरोर्ज्ञात्वा य आचरेत् ।**
**स जीवन्नेव मुक्तः स्यादिति शङ्करभाषितम् ॥ ७९ ॥**

इस प्रकार गुरु से तत्त्वत्रय को जानकर जो व्यवहार करता है, वह जीवित ही मुक्त होता हैं यह शङ्कर ( = शास्त्र ) वचन है ॥ ७९ ॥

**ततः स्वीकृत्य च गुरुः शिष्येभ्यः शेषदो भवेत् ।**
**आदाय गुरुणा दत्तं सद्वितीयासवं पिबेत् ॥ ८० ॥**

**गुरु आदि के समक्ष बैठकर पान का निषेध**—तब गुरुदेव स्वयं ग्रहण कर शेष द्रव्य शिष्यों को प्रदान करें । गुरुदेव द्वारा प्रदत्त आसव को द्वितीय तत्त्व के साथ पान करे ॥ ८० ॥

**श्रीगुरुज्येष्ठपूज्यानां पुरतः कुलनायिके ।**
**नोपविश्य पिबेन्मद्यं इति शास्त्रस्य निर्णयः ॥ ८१ ॥**

हे कुलनायिके ! श्री गुरुदेव और ज्येष्ठ तथा पूज्य साधकों के सम्मुख बैठकर मद्य पान न करे । यह शास्त्र की आज्ञा है ॥ ८१ ॥

**प्राणभेदफलोल्लासप्रणामस्थितिलक्षणम् ।**
**अविज्ञायाचरेद् यस्तु स भवेदापदाम्पदम् ॥ ८२ ॥**
**निर्मन्त्रं न पिबेन्मद्यं प्रायश्चित्तं विधीयते ।**
**तस्मान्मन्त्रविधानेन कर्तव्यं कुलनायिके ॥ ८३ ॥**

**प्राणभेदादि ज्ञान बिना और मन्त्रहीन पान का निषेध**—प्राणभेद के फलस्वरूप उल्लास, प्रणाम की स्थिति और लक्षण को जाने बिना जो आचरण करता है, वह आपत्ति में पड़ता है । मन्त्र के बिना आसव का पान न करे, अन्यथा प्रायश्चित्त करना पड़ता है । अतः हे कुलनायिके ! निम्न मन्त्रविधान से पान करे ॥ ८२-८३ ॥

**इदं पवित्रममृतं पिबामि भवभेषजम् ।**
**पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥ ८४ ॥**
**चित्ते स्वातन्त्र्यसारत्वात्तदानन्दमयात्मनः ।**
**तन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे ॥ ८५ ॥**
**सुषुम्नान्तं विकाशाय सुरसस्तेन पीयते ।**
**तस्मादिमां सुरां देवीं पूर्णोऽहं त्वां पिबाम्यहम् ॥ ८६ ॥**
**मन्त्रेणानेन देवेशि मूलमन्त्रेण मन्त्रवित् ।**
**अनाकुलमनाः कुर्यादलिपानं शनैः शनैः ॥ ८७ ॥**

**पान करने का मन्त्र—**

इदं पवित्रममृतं पिबामि भवभेषजम् ।
पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥
चित्ते स्वातन्त्र्यसारत्वात् तदानन्दमयात्मनः ।
तन्मयत्वाच्च भावानां भावश्चान्तर्हिता रसे ॥
सुषुम्नान्तं विकाशाय सुरसस्तोन पीयते ।
तस्मादिमां सुरां देवीं पूर्णोऽहं त्वां पिबाम्यहम् ॥

हे देवेशि ! इस मन्त्र और मूलमन्त्र का उच्चारण कर स्थिर म॰. से धीरे-धीरे साधक अलिपान करे ॥ ८४-८७ ॥

**स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ।**
**कुण्डल्याकृतिचिद्रूपे हुनेद् द्रव्यं समन्त्रकम् ॥ ८८ ॥**

अपने मूलाधार के त्रिकोण में स्थित, कोटि सूर्यों के समान प्रभा वाली, कुण्डली की आकृति वाली चिद्रूपा में निम्न मन्त्र से द्रव्य का हवन करे ॥ ८८॥

**महन्तापात्रभरितमिदन्तापरमामृतम् ।**
**पराहन्तामये वह्नौ होमस्वीकारलक्षणम् ॥ ८९ ॥**

अहन्तापात्रभरितमिदन्तापरमामृतम् ।
पराहन्तामये वह्नौ होमस्वीकारलक्षणम् ॥

द्रव्य से हवन का यह मन्त्र है ॥ ८९ ॥

**गुरुदैवतमन्त्राणामैक्यं सञ्चिन्तयेद्धिया ।**
**यावदुल्लासपर्यन्तमुपदेशे पिबेन्मधु ॥ ९० ॥**

गुरु, देवता और मन्त्र में ऐक्य भाव का चिन्तन करते हुये, जब तक उल्लास उत्पन्न न हो, तब तक मधु का पान करे ॥ ९० ॥

**चुल्लनं सिद्धिदं प्रोक्तं दीपो ज्ञानप्रदायकः ।**
**पानात् परपदप्राप्तिः कौले त्रयमितीरितम् ॥ ९१ ॥**

चुल्लू भर पान सिद्धिदायक है और दीप्ति होने तक पान करना ज्ञानदायक कहा गया है और पान से परम पद मिलता है । कौल सम्प्रदाय में ये तीन पर पद प्राप्तियाँ कही गई हैं ॥ ९१ ॥

**भोजनान्ते बिषं मद्यं मद्यान्ते भोजनं विषम् ।**
**अमृतं तद्विजानीयाद् यदन्नं सुरया सह ॥ ९२ ॥**

भोजन के अन्त में मद्य और मद्यपान के अन्त में भोजन विष होता है सुरा के साथ जो अन्न लिया जाता है, उसे अमृत समझे ॥ ९२ ॥

**चर्वणेन युतं पानममृतं कथितं प्रिये ।**
**चर्वणेन बिना पानं केवलं विषवर्द्धनं ॥ ९३ ॥**

हे प्रिये ! चर्वण के साथ पान करना अमृत होता है और चर्वण के बिना पान करना केवल विष को बढ़ाता है ॥ ९३ ॥

**पानञ्च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ।**
**दिव्यं देव्यग्रतः पानं वीरं मुद्रासने कृतम् ॥ ९४ ॥**
**स्वेच्छया पशुवत्पीतं पशुपानमितीरितम् ॥ ९५ ॥**

**पान के तीन भेद—१. दिव्य, २. वीर, ३. पशु**—दिव्य, वीर और पशु—इस क्रम से पान तीन प्रकार का कहा गया है । देवी के आगे पान करना 'दिव्य', मुद्रासन के साथ पान करना 'वीर' और स्वेच्छापूर्वक पशु के समान पिया गया 'पशुपान' है ॥ ९४-९५ ॥

**भुक्तिमुक्तिप्रदं दिव्यं वीरं भुक्तिप्रदं भवेत् ।**
**पशुपानं नरकदं प्रोक्तं पानफलं प्रिये ॥ ९६ ॥**

हे प्रिये ! 'दिव्यपान' भुक्ति-मुक्तिदायक होता है और 'वीरपान' भुक्ति दायक और 'पशुपान' नरकदायक होता है ॥ ९६ ॥

**दृष्टिमानसवाक्काये यावन्नो भवति भ्रमः ।**
**तावत् पानं प्रकुर्वीत पशुपानमतः परम् ॥ ९७ ॥**

जब तक दृष्टि, मन, वाणी और शरीर में भ्रम उत्पन्न न हो, तब तक पान करे । इससे अधिक पशुपान होता है ॥ ९७ ॥

**यावन्नेन्द्रियवैकल्यं यावन्नो मुखवैकृतम् ।**
**तावदेव पिबेन्मद्यमन्यथा पतनं भवेत् ॥ ९८ ॥**

जब तक इन्द्रियों में विकलता न हो, मुख में विकृति न हो, तब तक मद्यपान करे । इससे अधिक पान करने से पतन होता है ॥ ९८ ॥

**पूर्णाभिषेकयुक्तानां पानं देवि निगद्यते ।**
**कराभ्यां पात्रमुद्धृत्य स्मरेन्मूलञ्च पादुकाम् ।**
**आगलान्तं पिबेद्द्रव्यं स मुक्तो नात्र संशयः ॥ ९९ ॥**

हे देवि ! पूर्णाभिषिक्तों के पान की विधि कहता हूँ—दोनों हाथों से पात्र को उठाकर मूलमन्त्र और पादुका को स्मरण करे । कण्ठ तक पान करे, तो मुक्त होता है, इसमें सन्देह नहीं ॥ ९९ ॥

**पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।**
**उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ १०० ॥**

पी-पीकर पुनः पिये, तब तक पिए जब तक कि भूमि पर गिर न पड़े । उठकर फिर पिये, तो पुनर्जन्म नहीं होता ॥ १०० ॥

**आनन्दात्तृप्यते देवी मूर्च्छया भैरवः स्वयम् ।**
**वमनात् सर्वदेवाश्च तस्मात्त्रिविधमाचरेत् ॥ १०१ ॥**

आनन्द से देवी तृप्त होती है, मूर्च्छा से स्वयं भैरव और वमन से सभी देवता तृप्त होते हैं । अतः तीनों को संतृप्त करे ॥ १०१ ॥

**दिव्यपानरतानां वै यत् सुखं कुलयोगिनाम् ।**
**तत् सुखं सार्वभौमस्य नृपस्यापि न विद्यते ॥ १०२ ॥**

दिव्य पान में तत्पर कुलयोगियों को जो सुख मिलता है, वह सार्वभौम राजा को भी नहीं मिलता ॥ १०२ ॥

**यत् सुखं कुलनिष्ठानां कुलद्रव्यनिषेवनात् ।**
**तत् सौख्यमेव मोक्षः स्यात् सत्यमेव वरानने ॥ १०३ ॥**

हे वरानने ! कुलद्रव्य के सेवन से जो सुख कुलनिष्ठों को मिलता है, वह सुख ही मोक्ष है, यह सत्य है ॥ १०३ ॥

**इति ते कथितं किञ्चित् वटुशक्त्यादिपूजनम् ।**
**समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १०४ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे बटुक-शक्त्यादिपूजनं नाम सप्तमोल्लासः ॥ ७ ॥**



इस प्रकार हे कुलेशानि ! आपसे वटुक एवं शक्ति आदि के पूजन का कुछ संक्षिप्त वर्णन किया गया। अब आप क्या सुनना चाहती हैं ? ॥ १०४॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में बटुकशक्त्यादिपूजन नामक सातवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ ७ ॥**



# अथाष्टमोल्लासः

श्रीदेव्युवाच

**कुलेश श्रोतुमिच्छामि करुणामृतवारिधे ।**
**उल्लासभेदं देवेश द्रव्यपात्रादिसङ्गमम् ॥ १ ॥**
**रत्युद्वासनकालञ्च श्रीचक्रस्थितिमेव च ।**
**चेष्टां कौलिकशक्तीनां वद मे परमेश्वर ॥ २ ॥**

**उल्लास एवं पान-भेद**—श्री देवी ने कहा—हे कुलेश ! हे करुण रूप अमृत के समुद्र ! मैं उल्लास के भेद के विषय में सुनना चाहती हूँ । हे परमेश्वर ! हे देवेश ! द्रव्यपात्रादि की सङ्गति, रति, उद्वासनकाल ( Time of abandonment ), श्री चक्र की स्थिति और कौलिक शक्तियों की चेष्टा के विषय में बताइये ॥ १-२ ॥

ईश्वर उवाच

**शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।**
**तस्य श्रवणमात्रेण जायते दिव्यभावना ॥ ३ ॥**

**आरम्भादि सात उल्लास और उनके लक्षण**—ईश्वर ने कहा—हे देवि ! सुनिए, जो आप पूँछती हैं, उसे मैं बताऊँगा, जिसके सुनने मात्र से दिव्यभावना उत्पन्न होती है ॥ ३ ॥

**आरम्भस्तरुणश्चैव यौवनं प्रौढमेव च ।**
**तदन्तश्चोन्मनाश्चैव ततोल्लासश्च सप्तमः ॥ ४ ॥**

'उल्लास' सात हैं—१. आरम्भ, २. तरुण, ३. यौवन, ४. प्रौढ़, ५. प्रौढान्त, ६. उन्मना और ७. मनोल्लास (वश्योल्लास) ॥ ४ ॥

**तत्त्वत्रयं स्यादारम्भः कथितः कुलनायिके ।**
**कथितस्तरुणोल्लासस्तरुणं सुखमम्बिके ॥ ५ ॥**
**यौवनं मनसः सम्यगुल्लासः सुस्थितिः प्रिये ।**
**स्खलनं दृङ्मनोवाचां प्रौढमित्यभिधीयते ॥ ६ ॥**

हे कुलनायिके ! तीन तत्त्वों के उदित होने से 'आरम्भ' उल्लास होता है। हे अम्बिके ! तरुणसुख के होने पर 'तरुणोल्लास' माना जाता है । हे प्रिये ! मन के सम्यक् उल्लास की स्थिति को 'यौवनोल्लास' कहा जाता है और दृष्टि, मन, वचन का स्खलन होने पर 'प्रौढ़ोल्लास' होता है ॥ ५-६ ॥

**समुल्लासपरे चक्रे य इच्छेत् पात्रमेलनम् ।**
**अर्वाक् प्रौढसमुल्लासं नैव कुर्यात् कदाचन ।**
**यथाधिकारं तत्रापि कर्त्तव्यं पात्रमेलनम् ॥ ७ ॥**

**द्रव्यसङ्गति में नियम**—चक्र में समुल्लास की स्थिति होने पर यदि पात्रमेलन की इच्छा हो, तो कभी भी पहले प्रौढ उल्लास न करे और अधिकार के अनुसार ही पात्रमेलन करे ॥ ७ ॥

**अदीक्षितैरनाचारैरतन्त्रज्ञदैवतैः ।**
**दूषकैः समयभ्रष्टैर्न कुर्याद् द्रव्यसङ्गतिम् ॥ ८ ॥**

अदीक्षित, अनाचारी, अतन्त्रज्ञ, इष्टदेव से रहित, दोषभाव रखने वाले, समयाचार से भ्रष्ट साधक से द्रव्य की संगति न करे ॥ ८ ॥

**अभिज्ञं मन्यमानैश्च प्रपञ्चव्रतधारिभिः ।**
**पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यसङ्गतिम् ॥ ९ ॥**

अज्ञानी, अहङ्कारी, प्रपञ्ची, पशुभावापन्न, क्षुद्र कर्म करने वाले साधक से द्रव्य की संगति न करे ॥ ९ ॥

**स्त्रीद्विष्टैर्गुरुभिः शप्तैर्भक्तिहीनैर्दुरात्मभिः ।**
**कुलोपदेशहीनैश्च न कुर्याद् द्रव्यसङ्गतिम् ॥ १० ॥**
**पदवाक्यप्रमाणज्ञाः श्रुतिस्मृत्यर्थवेदिनः ।**
**कुलधर्मानभिज्ञाश्चेत्तत्सङ्गं परिवर्जयेत् ॥ ११ ॥**

स्त्रीद्वेषी, गुरुओं से अभिशप्त, भक्तिहीन, दुरात्मा, कुलोपदेश से हीन को द्रव्य संगति नहीं करनी चाहिए और पदवाक्य प्रमाण एवं श्रुति स्मृति के अर्थ जानने वाला भी यदि कुलधर्म से अनभिज्ञ है, तो उसके साथ द्रव्यपात्र की सङ्गति नहीं करनी चाहिए ॥ १०-११ ॥

**सत्कुले च प्रसूता वा वृद्धाश्चाचारवर्त्तिनः ।**
**त्वत्पूजाविमुखाः स्युश्चेत्तत्संसर्गं परित्यजेत् ॥ १२ ॥**

अच्छे कुल में उत्पन्न हो या आचारवान् वृद्ध हों, यदि आपकी पूजा से विमुख हैं, तो उनका सङ्ग छोड़ दे ॥ १२ ॥

**स्त्रीपुत्रमित्रबन्धूनां स्निग्धानामपि पार्वति ।**
**कुलाचारानभिज्ञानां सङ्गतिं वर्जयेत्प्रिये ॥ १३ ॥**

हे पार्वति ! सुनिए, स्त्री पुत्र, मित्र, बन्धु कितने ही घनिष्ठ क्यों न हों, यदि कुलाचार को नहीं जानते, तो उनकी सङ्गति न करे ॥ १३ ॥

**अदृष्टपौरुषाणाञ्च देशान्तरनिवासिनाम् ।**
**विना सङ्केतयोगेन न कुर्याद् द्रव्यसङ्गतिम् ॥ १४ ॥**

दूसरे देश के निवासियों के साथ, जिनका परिचय अज्ञात है, द्रव्यसङ्गति तब तक न करे, जब तक 'संकेत' द्वारा 'योग' ( ऐक्यभाव ) न हो ॥ १४ ॥

**एकपात्रं न कुर्वीत यदि साक्षात् कुलेश्वरः ।**
**मन्त्राः पराङ्मुखा यान्ति विघ्नश्चैव पदे पदे ॥ १५ ॥**

भले ही स्वयं कुलेश्वर क्यों न हो, 'एक पात्र' न करे अर्थात् एक ही पात्र द्वारा द्रव्यपान न करे । अन्यथा मन्त्र विपरीत हो जाते हैं और पग-पग पर विघ्न होते हैं ॥ १५ ॥

**स्वपात्रस्थितहेतुञ्च न दद्याद्भैरवाय च ।**
**यदि दद्यात्कुलेशानि देवताशापमाप्नुयात् ॥ १६ ॥**

अपने पात्र का हेतु (मद्य) भैरव को अर्पित न करे, यदि वह फिर भी देता है तो हे कुलेशानि ! देवता का शाप उसे प्राप्त होता है ॥ १६ ॥

**आसनं भोजनं पात्रमम्बरं शयनादिकम् ।**
**अनभिज्ञैरनर्हैश्च सङ्गमं नैव कारयेत् ॥ १७ ॥**

अपना आसन, भोजन, पात्र, वस्त्र और शैय्या आदि अनभिज्ञ और अयोग्य लोगों को न दे और उनका सङ्ग कभी न करे ॥ १७ ॥

**स्रोतोभेदेन वा कुर्यात्कौलिकः पात्रमेलनम् ।**
**पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयोस्तथा ॥ १८ ॥**

स्रोत भेद से अर्थात् आम्नाय के विभागों के अनुसार कौलिक को पात्र की सङ्गति करनी चाहिये । पूर्व और दक्षिण, उत्तर और पश्चिम आम्नायों में ऐक्यभाव है ॥ १८ ॥

**तस्मिन् क्रमार्चनपरैर्वीरैः स्वसदृशैरपि ।**
**कामिनीभिश्च तत्कुर्यात् स्रोतसाञ्च चतुष्टये ॥ १९ ॥**

अत: इन चारों स्रोतों के क्रमार्चन में तत्पर अपने समान वीर साधकों और स्त्रियों के साथ सङ्गति करे ॥ १९ ॥

**योगिभिर्योगिनीभिश्च प्रदत्तं पूर्णपात्रकम् ।**
**स्वमातृपादुकामूलमन्त्रजप्तं पिबेत्प्रिये ॥ २० ॥**

हे प्रिये ! योगियों और योगिनियों द्वारा प्रदत्त पूर्ण पात्र को अपनी मातृका और मूलमन्त्र से अभिमन्त्रित कर पान करे ॥ २० ॥

**क्वचित् यदृच्छया प्राप्तमलिपात्रन्तु भक्तितः ।**
**आदाय पूर्ववज्जप्त्वा पिबेद्देवि गुरुं स्मरन् ॥ २१ ॥**

कभी यदि दैवयोग से अलिपात्र ( मद्यपूर्ण पात्र ) प्राप्त हो, तो भक्ति से ग्रहण कर पूर्ववत् अभिमन्त्रित कर हे देवि ! गुरुदेव का स्मरण करते हुये उसे पान करे ॥ २१ ॥

**गुरुशक्तिसुतानाञ्च गुरुज्येष्ठकनिष्ठयोः ।**
**स्वज्येष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य पार्वति ॥ २२ ॥**

**चक्र में उच्छिष्ट पान भक्षण का नियम**—हे पार्वति ! गुरुशक्ति, गुरुपुत्र और अपने से ज्येष्ठ साधक का उच्छिष्ट खाना चाहिये, अन्य का नहीं ॥२२॥

**शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टञ्च चर्वणम् ।**
**आत्मोच्छिष्टं न दातव्यं परकीयं न भक्षयेत् ॥ २३ ॥**

शक्ति का उच्छिष्ट द्रव्य पीना चाहिये और वीरों का उच्छिष्ट चर्वण खाना चाहिये। अपना उच्छिष्ट न देना चाहिये और न दूसरों का खाना चाहिये ॥२३॥

**उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नोच्छिष्टमर्पयेत् ।**
**चक्रमध्येऽपि देवेशि अन्यथा पतनं भवेत् ॥ २४ ॥**

स्त्रियों का उच्छिष्ट तो खाये । किन्तु हे देवेशि ! उन्हें अपना उच्छिष्ट चक्र में भी न दे । अन्यथा पतन होता है ॥ २४ ॥

**कनिष्ठानां स्वशिष्याणां दद्यादुच्छिष्टमम्बिके ।**
**दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदाम्पदम् ॥ २५ ॥**
**आसवोच्छिष्टपात्रन्तु यो वा गृहणति मोहतः ।**
**स्नेहाल्लोभात् भयाद्वापि देवताशापमाप्नुयात् ॥ २६ ॥**

हे अम्बिके ! केवल अपने कनिष्ठ शिष्यों को ही उच्छिष्ट दे । जो स्नेह, लोभ या भयवश अन्य किसी को उच्छिष्ट आसव या पात्र देता या लेता है, वह देवता के शाप को प्राप्त करता और आपत्ति में पड़ता है ॥२५-२६॥

**प्रौढोल्लासे कुलेशानि कुर्याद्बलिविसर्जनम् ।**
**पूजागृहाद्बहिः कुर्यात्त्रिकोणे तु गृहान्तरे ॥ २७ ॥**
**गन्धपुष्पाक्षतैः पूज्य ध्यायेदुच्छिष्टभैरवम् ।**
**गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ।**
**कृष्णाभं भैरवं ध्यायेत् सर्वविघ्ननिवारणम् ॥ २८ ॥**

**उच्छिष्ट भैरव को बलि देने की विधि**—हे कुलेशानि ! प्रौढोल्लास होने पर पूजागृह से बाहर या गृह के भीतर एक त्रिकोण बनाकर गन्धपुष्पाक्षतों से उसकी पूजा कर गदा, त्रिशूल, डमरु और पात्र हाथ में लिए हुए त्रिलोचन एवं कृष्ण वर्ण के सभी विघ्नों का निवारण करने वाले उच्छिष्टभैरव का ध्यान करना चाहिए । यथा—

गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं ध्यायेत् सर्वविघ्ननिवारणम् ॥ २७-२८ ॥

**तारत्रयं समुच्चार्यं पश्चादुच्छिष्टभैरवम् ।**
**एहियुग्मं बलिं गृह्णयुग्मं फट् च द्विठान्तकः ॥ २९ ॥**
**बल्युद्वासनमन्त्रोऽयं द्वाविंशतिभिरक्षरैः ।**
**शान्तिस्तवं पठेत्पश्चात्तर्पयेदलिबिन्दुभिः ॥ ३० ॥**

तीन तार अर्थात् ॐ ॐ ॐ का उच्चारण कर 'उच्छिष्ट भैरव' कहे । फिर दो बार 'ऐहि' पद और दो बार 'गृह्ण' पद कहकर फट् एवं स्वाहा कहे । यह २२ अक्षरों का बलि प्रदान करने का मन्त्र है ॥ २९-३० ॥

**विमर्श**—इस प्रकार निम्न २२ अक्षरों वाले मन्त्र से बलि प्रदान करे—

ॐ ॐ ॐ उच्छिष्टभैरव एहि एहि बलिं गृह्ण गृह्ण फट् स्वाहा ।

**शान्ति-स्तव का पाठ**—तदनन्तर 'शान्तिस्तव' का पाठ कर अलि ( मद्य ) बिन्दुओं से तर्पण करे ॥ ३० ॥

**शान्तिस्तवमाह**

**यजन्ति देव्यो हरपादपङ्कजम्**
**प्रसन्नधामामृतमोक्षदायकम् ।**
**अनन्तसिद्धान्तमयप्रबोधकं**
**नमामि चाष्टाष्टकयोगिनीगणम् ॥ ३१ ॥**

जो योगिनी देवियाँ भगवान् शङ्कर के चरण कमल की पूजा किया करती हैं, प्रसन्न, (शङ्कर के) वाम भाग में स्थित, मोक्ष प्रदान करने वाली, अनन्त

सिद्धान्तों में प्रवेश के लिए बुद्धि का प्रबोधन करने वाली चौंसठ योगिनियों के समूह को मैं प्रणाम करता हूँ ॥ ३१ ॥

**योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।**
**नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥ ३२ ॥**

योगिनी चक्र के मध्य विराजमान, मातृ मण्डल से वेष्टित (घिरे हुए) भैरवी के प्रिय नाथ भैरव को मैं शिरसा नमन करता हूँ ॥ ३२ ॥

**अनादिघोरसंसारध्वान्तैकध्वंसकारिणे ।**
**नमः श्रीनाथवैद्याय कुलौषधिविधायिने ॥ ३३ ॥**

कुल (शक्ति) रूप (भव रोग के लिए) औषधि का विधान करने वाले अनादि एवं घोर संसार (की आसक्ति) को नष्ट करने वाले श्री नाथ रूप वैद्य के लिए नमस्कार है ॥ ३३ ॥

**आपदो दुरितं रोगाः समयाचारलंघनात् ।**
**ये ते सर्वे व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥ ३४ ॥**

समयाचार के उल्लंघन से ही आपत्ति, पाप एवं रोग होते हैं । वे सभी बाधाएँ दिव्य (श्री) चक्र के मेलन (पूजन) से समाप्त हो जायें ॥ ३४ ॥

**आयुरारोग्यमैश्वर्यं कीर्त्तिर्लाभः सुखं जयः ।**
**कान्तिर्मनोहरा चास्तु पान्तु सर्वाश्च देवताः ॥ ३५ ॥**

आयु, आरोग्य, ऐश्वर्य, कीर्ति, लाभ, सुख, विजय, शरीर की मनोहर कान्ति (श्री) चक्र के पूजन से प्राप्त होए और सभी (चक्रस्थ) देवता मेरी रक्षा करें ॥ ३५ ॥

**सम्पूजकानां प्रतिपालकानां**
**यतीन्द्रयोगीन्द्रतपोधनानाम् ।**
**देशस्य राष्ट्रस्य कुलस्य राज्ञः**
**करोतु शान्ति भगवान् कुलेशः ॥ ३६ ॥**

सम्यक् विधानानुसार पूजन करने वाले, प्रतिपालन करने वाले, यतीन्द्र, योगीन्द्र तथा तपस्वीगणों की, देश, राष्ट्र, कुल के अधिपति की भगवान् कुलेश (शक्ति के स्वामी भगवान् शङ्कर) शान्ति प्रदान करें ॥ ३६ ॥

**नन्दन्तु साधककुलाद्ध्यदर्शका ये**
**सिंहासनाद्युषितशाक्तमहान्वया ये ।**
**नन्दन्तु सर्वकुलकौलरताः परे ये**
**चान्ये विशेषपदभेदकशाम्भवा ये ॥ ३७ ॥**

जो साधक कुल के अद्वितीय दर्शक हैं एवं जो सिंहासनादि पर आसीन महाकुलीन (शाक्त) हैं वे आनन्दित होवें। अन्य सभी कुल में संलग्न कौल तथा जो विशेष (मोक्ष) पद के भेदक शम्भु के उपासक हैं वे प्रसन्न होएं ॥ ३७ ॥

**नन्दन्तु सिद्धगुरवस्तदनुक्रमज्ञा**
**ज्येष्ठान्वया समयिनो वटुकाः कुमार्यः ।**
**ये योगिनीप्रवरवीरकुले प्रसूता**
**नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥ ३८ ॥**

सिद्धगुरु गण और उनके अनुक्रम के ज्ञाता साधक, ज्येष्ठ सन्तान, समयाचार का पालन करने वाले, बटुक तथा कुमारियाँ आनन्दित होवें । जो वीर कुल (सम्प्रदाय) में जन्म लेने वाले योगिनियों के श्रेष्ठ उपासक हैं, पृथ्वी के स्वामी (राजा), गो, द्विज एवं समस्त सज्जनों का सम्प्रदाय प्रसन्न होए ॥ ३८॥

**नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा**
**निर्मत्सरा निरुपमा निरुपद्रवाश्च ।**
**नित्यं निरञ्जनरता गुरवो निरीहाः**
**शान्ताश्च शान्तमनसो हृतशोकशङ्काः ॥ ३९ ॥**

नीति निपुण एवं निरवद्यनिष्ठ, निर्मत्सर, उपमारहित, उपद्रवों से रहित कुल साधक प्रसन्न होएँ । नित्य शिव में आसक्त, इच्छारहित गुरु गण शान्त मन वाले होऐं । हृदय के शोक की शङ्का भी न रहे और सभी चराचर जगत् शान्ति प्राप्त करें ॥ ३९ ॥

**नन्दन्तु योगनिरताः कुलयोगयुक्ता**
**ह्याचार्यसामयिकसाधकपुत्रकाश्च ।**
**गावो द्विजा युवतयो यतयः कुमार्यो**
**धर्मे चरन्तु निरता गुरुभक्तलोकाः ॥ ४० ॥**

योग में संलग्न और कुल योग (शक्ति उपासक) से युक्त जन आनन्दित होवें । आचार्य और सामयिक साधक के पुत्र प्रसन्न होऐं । गाएँ, द्विज, युवतियाँ, सन्यासी और कुमारियाँ कुल धर्म में प्रवृत्त हों तथा गुरुभक्त लोक कुलधर्म में परायण हों ॥ ४० ॥

**नन्दन्तु साधककुला ह्यलमात्मनिष्ठाः**
**शापाः पतन्तु समयद्विषि योगिनीनाम् ।**
**सा शाम्भवी स्फुरतु कापिं समाप्यवस्था**
**यस्यां गुरोश्चरणपङ्कजमेव सत्यम् ॥ ४१ ॥**

आत्मनिष्ठ साधकों के समूह आनन्दित हों समायाचार से द्वेष करने वाले योगिनियों के शाप से नष्ट हों । वह सामरस्य की अवस्था वाली शम्भु की पत्नी पार्वती मेरे हृदय में प्रकट हो जायें । जिस शक्ति के गुरु रूप चरण कमल ही सत्य हैं वे हमारे हृदय में स्फुरण करें ॥ ४१ ॥

**याश्चक्रक्रमभूमिकावसतयो नाडीषु याः संस्थिता याः**
**कायोद्गतरोमकूपनिलया याः संस्थिता धातुषु ।**
**उच्छ्वासोर्मिमरुत्तरङ्गनिलया निश्वासवासाश्च या-**
**स्ता देव्यो रिपुपक्षभक्षणरता नन्दन्तु कौलार्चिताः ॥ ४२ ॥**

जो देवी (श्री) चक्र में, (पूजा) क्रम में, भूमिका (भूपुर) में वास करने वाली एवं नाड़ियों में निवास करने वाली देवियाँ हैं, जो देवियाँ शरीर के रोमकूपों में तथा (मांस मज्जा आदि) धातुओ में विराजमान हैं, उच्छ्वास एवं नि:श्वास रूपी प्राणवायु की महान् तरङ्गों में निवास करने वाली देवियाँ हैं, वे कौलों द्वारा अर्चित शत्रु पक्ष का भक्षण करते हुए मेरे मन्त्रों से पूजित होकर मेरे यज्ञ में तृप्त होवें ॥ ४२ ॥

**या देव्यः कुलसम्भवाः क्षितिगता या देवतास्तोयगा**
**या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वालयाः ।**
**या व्योमाहितमण्डलामृतमया याः सर्वगाः सर्वदा-**
**स्ताः सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥ ४३ ॥**

जो कुल (धर्म) में उत्पन्न देवियाँ हैं, जो आकाश एवं जल में निवास करने वाली देवियाँ है जो नित्य एवं प्रसन्न प्रभा से युक्त निधि में रहने वाली हैं और जो जो पृथ्वी पर प्रकृष्ट रूप से स्थित हैं, जो आकाश में स्थित बादलरूपी अमृत से युक्त है, जो देवियाँ सर्वदा सभी स्थानों में सर्वत्र गमन करने वाली हैं, वे कुलमार्ग के पालन में परायण देवियाँ मुझे शान्ति प्रदान करें ॥ ४३ ॥

**ऊर्ध्वे ब्रह्माण्डतो वा दिवि गगनतले भूतले वा तले वा**
**पाताले वानले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।**
**क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन**
**प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥४४॥**

ब्रह्माण्ड से ऊपर स्वर्ग में, गगन में, भूमि पर, ताल तलैया में, पाताल में, अग्नि में, जल में, वायु में (इन सभी पञ्चमहाभूतों में) जहाँ कहीं भी स्थित देव है, (तीर्थ) क्षेत्र में, पीठों में, उपपीठों में जहाँ भी धूप एवं दीप आदि (पंचोपचारों से) प्रसन्न देवियाँ हमारी शुभ बलिदान विधि से पूजित एवं वीरेन्द्र से वन्द्य वे देवियाँ सदा हमारी रक्षा करें ॥ ४४ ॥

**ब्रह्मा श्रीः शेषदुर्गागुहवटुकगणा भैरवाः क्षेत्रपाद्या**
**वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः ।**
**भूता गन्धर्वविद्याधरऋषिपितृयक्षासुराः किन्नराद्या**
**योगीशाश्चारणाः किम्पुरुषमुनिवराश्चक्रगाः पान्तु सर्वे ॥४५॥**

ब्रह्मा, लक्ष्मी, शेषनाग, दुर्गा, कार्तिकेय, बटुकगण, भैरव एवं क्षेत्रपाल आदि, रुद्र, आदित्य, ग्रह, वसु पितर, मुनिगण, सिद्ध तथा गुह्यक आदि, भूत, गन्धर्व विद्याधर, ऋषि, पितर, किन्नर, यक्ष एवं नाग योगीश एवं चारण आदि, सुरश्रेष्ठ के समूह हमारे पूजन में सन्तुष्ट होवें ॥ ४५ ॥

**देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा**
**योगिन्यो वटुकाश्च यक्षपितरो भूताः पिशाचा ग्रहाः ।**
**अन्ये भूचरखेचरा दिशिचरा वेतालकाश्चेटका-**
**स्तृप्यन्तां कुलपुत्रकस्य पिबतः पानं सदीपञ्चरुम् ॥ ४६ ॥**

देहस्थ अखिल देवगण, गजानन, क्षेत्राधिप, भैरव, योगिनियाँ, बटुक, यक्ष, पितर, भूत, पिशाच, ग्रह, अन्य भूचारी एवं आकाश में विचरण करने वाले, दिशाओं में विचरण करने वाले, वेताल, चेटक (इन्द्रजालक) और पितर गण, कुल पुत्र (कुल के उपासक) योगी के दीप्त चरु को पीकर तृप्त होवें ॥४६॥

**सत्यञ्चेद् गुरुवाक्यमेव पितरो देवाश्च चेद् योगिनी**
**प्रीता चेत् परदेवता यदि भवेद्वेदाः प्रमाणं हि चेत् ।**
**शाक्तेयं यदि दर्शनं भवति चेदाज्ञाप्यमोघापि चेत्**
**सत्यञ्चापि च कौलधर्मपरमं स्यान्मे जयः सर्वदा ॥ ४७ ॥**

यदि गुरुवाक्य सत्य है, पितर, देव, आगम एवं योगिनी सत्य है, यदि परदेवता प्रसन्न हैं और यदि वेद प्रमाण हैं, यदि शाक्त दर्शन सत्य है, यदि (गुरु या शक्ति की) आज्ञा अमोघ है तो कौल धर्म भी सत्य है अतः मुझ कौल की सर्वदा जय होए ॥ ४७ ॥

**नन्दन्तु साधकाः सर्वे नश्यन्तु कुलदूषकाः ।**
**अन्तःस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ ४८ ॥**

सभी साधक गण प्रसन्न होंवे । कुलधर्म को दूषित करने वाले पाखण्डियों का विनाश होवे । मुझमें शम्भु से सम्बन्धित अवस्था (शाम्भवी मुद्रा) हो और मेरे गुरु सदैव प्रसन्न रहें ॥ ४८ ॥

**यद्येषा भैरवी देवी यदि भैरवशासनम् ।**
**यद्येष कुलधर्मः स्यात्तदा नश्यन्तु दूषकाः ॥ ४९ ॥**

यदि यह भैरवी देवी हैं और यदि भैरव का शासन है तथा यदि यह कुलधर्म है तो कुल के दूषक नष्ट हो जायँ ॥ ४९ ॥

**यासामाज्ञाप्रभावेण स्थापितं भुवनत्रयम् ।**
**नमस्ताभ्यः समस्ताभ्यो योगिनीभ्यो निरन्तरम् ॥ ५० ॥**

जिन (शक्ति) की आज्ञा के प्रभाव से तीनों लोक प्रतिष्ठित हुए उन समस्त योगिनियों को निरन्तर नमस्कार है ॥ ५० ॥

**पिबन्तु मातरः सर्वाः पिबन्तु कुलसत्तमाः ।**
**पिबन्तु भैरवाः सर्वे मम देहे व्यवस्थिताः ॥ ५१ ॥**

मेरे देह में विद्यमान सभी (ब्राह्मी, माहेश्वरी आदि) माताएँ पान करें और कुल श्रेष्ठ गण पान करें तथा सभी भैरव पान कर तृप्त होवें ॥ ५१ ॥

**तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः ।**
**योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥ ५२ ॥**

सभी (ब्राह्मी, माहेश्वरी आदि) माताएँ एवं गणाधिपों के सहित समुद्र और मेरे देह में वास करने वाले योगिनी एवं क्षेत्रपाल गण पान करें ॥ ५२ ॥

**शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।**
**कालाग्न्यादिशिवान्तञ्च जगद् यज्ञेन तृप्यतु ॥ ५३ ॥**

शिव आदि देवगण, पृथ्वी पर्यन्त सृष्टि युक्त ब्रह्मादि, काल, अग्नि, भवानी एवं जगत् मेरे यज्ञ से तृप्त होवें ॥ ५३ ॥

**द्वारस्था मणिमण्डपस्य परितः श्रीनन्दने कानने**
**शून्यागारविहारकन्दरमठे व्योम्नि श्मशाने स्थिताः ।**
**कूपस्थानगताश्चतुष्पथगताः सन्देशसंस्थाश्च ये**
**पर्ङ्कार्थावहकेतुमानकुसुमात् गृहणन्तु ते पान्तु च ॥ ५४ ॥**

द्वार पर निवास करने वाले, श्रीनन्दन के उद्यान में मणिमण्डप के चारों ओर स्थित, शून्य गृह में, विहार एवं कन्दरा तथा मठ (देवालय) में, आकाश में, श्मशान में स्थित देव, कूपस्थान में, चौराहे पर रहने वाले, सम्यक् प्रदेश में निवास करने वाले, पर्यङ्क (पलंग) पर, वायु में, झण्डे या बुर्जियों पर तथा फूलों में रहने वाले तदभिमानी देवगण मेरे यज्ञ को ग्रहण करे तथा मेरी रक्षा करें ॥ ५४ ॥

**पठित्वाभ्यर्चनापात्रं समुद्धृत्य गुरुः प्रिये ।**
**ततो दद्यात् स्वशिष्याय प्रसादं कुलनायिके ॥ ५५ ॥**

प्रौढोल्लास के सहित यदि वे वहाँ रहते हैं, तो इसे 'श्री चक्रं' कहा जाता है और वही उनका 'वृन्द' भी कहा जाता है ॥ १९ ॥

**कुर्यान्नवकुमारीणां पूजामाश्विनमासके ।**
**प्रातर्निमन्त्रयेद्भक्त्या साधकः शुद्धमानसः ॥ २० ॥**

**नौ कुमारियों की पूजाविधि और उसका फल**—आश्विन मास में नौ कुमारियों की पूजा करे । शुद्ध मन से साधक प्रात:काल भक्तिपूर्वक उन्हें निमन्त्रण दे ॥ २० ॥

**मनोहरामेकवर्षी बालाञ्च शुभलक्षणाम् ।**
**मन्त्री स्नात्वाथ शुद्धात्मा कुर्याद्देवि क्रमार्चनम् ॥ २१ ॥**

प्रतिपदा के दिन एक वर्ष की मनोहर और शुभ लक्षण वाली बालिका को स्नान कराकर शुद्ध आत्मा से साधक क्रमपूर्वक पूजा करे ॥ २१ ॥

**अभ्यङ्गस्नानशुद्धान्तां पूजासदनमानयेत् ।**
**देवतासन्निधौ बालामुपवेश्य समर्चयेत् ॥ २२ ॥**
**गन्धपुष्पादिभिर्धूपैर्दीपैश्च कुलदीपकैः ।**
**भोग्यभोज्यान्नपानाद्यैः क्षीराज्यमधुमांसकैः ।**
**कदलीनारिकेलादिफलैस्तां परितोषयेत् ॥ २३ ॥**

तैल, स्नानादि से शुद्ध उस बाला को पूजागृह में लाकर देवता के समीप बैठाकर गन्ध, पुष्प, धूप, दीप एवं कुलदीपकों से उसकी पूजा करे । फिर दूध, घी, मधु, मांसादि भोज्य अन्न पानादि और केला, नारियल आदि फलों से उसे सन्तुष्ट करे ॥ २२-२३ ॥

**सशक्तिकः स्वयं देवि प्रौढान्तोल्लाससंयुतः ।**
**यथाशक्ति जपेदेकोत्तरवृद्ध्याऽथवा मनुम् ॥ २४ ॥**
**बालामलङ्कृतां पश्यन् चिन्तयेत् स्वेष्टदेवताम् ।**
**ततस्तां देवताबुद्ध्या नमस्कृत्य विसर्जयेत् ॥ २५ ॥**

स्वयं शक्ति सहित प्रौढ़ोल्लास पर्यन्त आनन्दयुक्त होकर, हे देवि ! उस सुशोभिता बाला को देखता हुआ अपने इष्ट देवता का स्मरण करे और यथाशक्ति एक से अधिक मन्त्र का जप करे । तब उसे देवता बुद्धि से नमस्कार कर विसर्जित करे ॥ २४-२५ ॥

**द्वितीयायां द्विवर्षान्तामेकवर्षाञ्च पूजयेत् ।**
**एवं तिथौ कुमारीञ्च यजेत् पूर्वदिनार्चिताम् ॥ २६ ॥**

द्वितीया तिथि में दो वर्ष की कन्या का और पूर्व तिथि में पूजिता एक वर्ष की कन्या का पूजन पूर्ववत् करे ॥ २६ ॥

**नवम्यामेकवर्षादि-नववर्षान्तकन्यका: ।**
**बाला शुद्धा च ललिता मालिनी च वसुन्धरा ।**
**सरस्वती रमा गौरी दुर्गा च नव कीर्त्तिता: ॥ २७ ॥**
**त्रितारार्द्यैर्नमोऽन्तैश्च देवतापदपश्चिमै: ।**
**नामभिश्च चतुर्थ्यन्तै: पूजयेत्ता: पृथक् पृथक् ॥ २८ ॥**

इसी क्रम से नवमी के दिन एक वर्ष से नौ वर्ष तक की कन्याओं की पूजा करे । ये नौ कन्याएँ क्रमशः १. बाला, २. शुद्धा, ३. ललिता, ४. मालिनी, ५. वसुन्धरा, ६. सरस्वती, ७. रमा, ८. गौरी और ९. दुर्गा कही गई हैं । आदि में तीन प्रणव (ॐ ॐ ॐ), अन्त में 'नमः' पद, 'देवता' एवं 'कन्या' के चतुर्थ्यन्त नाम लगाकर अलग अलग उन कन्याओं का पूजन करना चाहिए ॥ २७-२८ ॥

**विमर्श**—इनके पूजन के मन्त्र इस प्रकार हैं—१. ॐ ॐ ॐ बालायै देवतायै नमः, २. ॐ ॐ ॐ शुद्धायै देवतायै नमः, ३. ॐ ॐ ॐ ललितायै देवतायै नमः, ४. ॐ ॐ ॐ मालिन्यै देवतायै नमः, ५. ॐ ॐ ॐ वसुन्धरायै देवतायै नमः, ६. ॐ ॐ ॐ सरस्वत्यै देवतायै नमः, ७. ॐ ॐ ॐ रमायै देवतायै नमः, ८. ॐ ॐ ॐ गौर्यै देवतायै नमः, ९. ॐ ॐ ॐ दुर्गायै देवतायै नमः। इन मन्त्रों से इनकी अलग अलग पूजा करे।

**बटुकं पञ्चवर्षञ्च नववर्षं गणेश्वरम् ।**
**गन्धपुष्पाम्बराकल्पैर्यथाविभवविस्तरै: ॥ २९ ॥**

इनके साथ ही पाँच वर्ष के बालक की 'वटुक' रूप में और नौ वर्ष के बालक की 'गणेश' रूप में यथाशक्ति गन्ध, पुष्प, वस्त्रादि द्वारा पूजा करे ॥२९

**अभ्यर्च्य देवताबुद्ध्या पदार्थै: परितोषयेत् ।**
**स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जित: ॥ ३० ॥**

इन सबको देवता समझते हुए धन की कंजूसी न करते हुए अपने कार्य की सिद्धि के लिए विविध पदार्थों से इन्हें सन्तुष्ट करे ॥ ३० ॥

**नवरात्रं जपेदेकोत्तरवृद्ध्या क्रमेण च ।**
**नवरात्रकृतां पूजां देवि देव्यै समर्पयेत् ॥ ३१ ॥**

हे देवि ! इस प्रकार नवरात्र में एकोत्तरवृद्धि के क्रम से जप करे और नवरात्र में की हुई पूजा देवी को समर्पित करे ॥ ३१ ॥

**ताम्बूलं दक्षिणां दत्त्वा कुमारीस्ता विसर्जयेत् ।**
**एवं नवकुमारीणामर्चनं प्रातवत्सरम् ॥ ३२ ॥**
**यः करोति स पुण्यात्मा देवताप्रीतिमाप्नुयात् ।**
**मनोऽभिलाषं सम्प्राप्य निवसेत्तव सन्निधौ ॥ ३३ ॥**

ताम्बूल एवं द्रव्य दक्षिणा देकर उक्त कुमारियों को विदा करे । इस प्रकार जो प्रति वर्ष नौ कुमारियों का अर्चन करता है, वह पुण्यात्मा देवता की प्रसन्नता को प्राप्त करता है और अपनी मनोकामना को पाकर वह आपके पास निवास करता है ॥ ३२-३३ ॥

**अथवा यौवनारूढाः प्रमदा नव पार्वति ।**
**मनोज्ञाः पूजयेद्भक्त्या नवरात्रिषु मन्त्रवित् ॥ ३४ ॥**

**नौ युवतियों की पूजाविधि**—अथवा हे पार्वति ! यदि सुन्दर युवा स्त्रियाँ सुलभ हों, तो नवरात्रों में मन्त्रज्ञ साधक भक्तिपूर्वक उनकी पूजा करे ॥३४॥

**हल्लेखां गगनां रक्तां महोच्छुष्मां करालिकाम् ।**
**इच्छां ज्ञानां क्रियां दुर्गां बटुकञ्च गणेश्वरम् ।**
**पूर्ववत् पूर्वमद्याद्यैः पदार्थैः परितोषयेत् ॥ ३५ ॥**

पूर्ववत् १. हल्लेखा, २. गगना, ३. रक्ता, ४. महोच्छष्मा, ५. करालिका, ६. इच्छा, ७. ज्ञाना, ८. क्रिया और ९. दुर्गा—इन नामों से और वटुक तथा गणेश रूप में बालकों का पूजन कर उन्हें मद्यादि पदार्थों से सन्तुष्ट करे ॥३५।

**प्रौढान्तोल्लाससंयुक्ताः सन्तुष्टा यदि ताः प्रिये ।**
**साधकस्तुष्टिमासाद्य निवसेत्तव सन्निधौ ॥ ३६ ॥**

हे प्रिये ! 'प्रौढान्त' उल्लास से युक्त होकर यदि वे सन्तुष्ट होते हैं, तो साधक उन देवों को प्रसन्न करने में सफल होता है और आपके समीप निवास करता है ॥ ३६ ॥

**एवं यः पूजयेद्देवि प्रतिवर्षं यतव्रतः ।**
**षण्मासे वा त्रिमासे वा मासे मासेऽथवा प्रिये ॥ ३७ ॥**
**तिस्रो वा पञ्च वा सप्त पूजयेद्देवताधिया ।**
**सर्वैश्वर्यसमृद्धात्मा स भवेदावयोः प्रियः ॥ ३८ ॥**

इस प्रकार जो साधक प्रति वर्ष या छः मास में या तीन मास में या प्रति मास ३, ५ या ७ कन्याओं या युवतियों को देवता समझकर पूजा करता है, हे प्रिये ! वह सभी ऐश्वर्यों से सम्पन्न होकर हम दोनों को प्रिय होता है ।

भृगुवारे कुलेशानि कान्तामारूढयौवनाम् ।
सर्वलक्षणसम्पन्नामनुकूलां मनोरमाम् ॥ ३९ ॥
कुलाकुलाष्टकां देवि निमन्त्र्याहूय पुष्पिणीम् ।
अभ्यङ्गस्नानशुद्धाङ्गीमासने चोपवेशयेत् ॥ ४० ॥

**शुक्रवार में शक्तिपूजा की विधि**—शुक्रवार में हे कुलेशानि! सर्वलक्षण-सम्पन्ना, अनुकूल एवं मनोरमा, मन्दहासा, पुष्पिणी, युवा, कुलाष्टक से युक्त कुलस्त्री को सादर निमन्त्रितकर शुद्धोदक से स्नान द्वारा शुद्धदेह कराकर. आसन पर बैठाये एवं विधि विधान से गन्ध, पुष्प एवं वस्त्रादि से उसे सजाए। तदनन्तर साधक अपने को भी, हे कुलेश्वरि ! गन्धपुष्पादि से अलंकृत करे ॥३९-४०॥

गन्धपुष्पाम्बराकल्पैरलङ्कृत्य विधानवित् ।
आत्मानं गन्धपुष्पाद्यैरलङ्कुर्यात् कुलेश्वरि ॥ ४१ ॥
आवाह्य देवतां तस्यां यजेन्न्यासक्रमेण च ।
कृत्वा क्रमार्चनं धूपदीपाञ्च कुलदीपकान् ॥ ४२ ॥
प्रदर्श्य देवताबुद्ध्या पदार्थैः षड्रसान्वितैः ।
मांसादिभक्ष्यभोज्याद्यैस्तोषयेद्देवि भक्तितः ॥ ४३ ॥

फिर उसमें देवता का आवाहन कर न्यासक्रम से क्रमार्चन कर धूप, कुलदीपकों को दिखाकर हे देवि ! उसे देवता समझते हुये छः रसों से युक्त मांसादि भक्ष्य भोज्यादि पदार्थों से भक्तिपूर्वक सन्तुष्ट करे ॥ ४२-४३ ॥

प्रौढान्तोल्लाससहितां तां प्रपश्यन् जपेन्मनुम् ।
यौवनोल्लाससहितः स्वयं तद्ध्यानतत्परः ॥ ४४ ॥

फिर 'प्रौढान्त' उल्लास से युक्त भक्तिभाव से उन्हें देखता हुआ मन्त्र का जप करे। स्वयं यौवनोल्लास से युक्त रहे और देवी का ध्यान करता रहे ॥४४॥

निर्विकारेण चित्तेन ह्यष्टोत्तरसहस्रकम् ।
जपादिकं समर्प्याथ तया सह निशां नयेत् ॥ ४५ ॥

इस प्रकार निर्विकार रूप से १००८ जप कर जपादि का समर्पण करे और उसके साथ रात्रि व्यतीत करे ॥ ४५ ॥

त्रिपञ्चसप्तनवसु भृगुवारेषु यः प्रिये ।
पूजयेद्विधिनाऽनेन तस्य पुण्यं न गण्यते ॥ ४६ ॥

हे प्रिये ! तीन, पाँच, सात या नौ शुक्रवारों में जो इस विधि से पूजा करता है, उसके पुण्य की गणना नहीं की जा सकती ॥ ४६ ॥

चतुः पीठार्चनफलं स प्राप्नोति कुलेश्वरि ।
यद् यत् स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयम् ॥ ४७ ॥

हे कुलेश्वरि ! चारों पीठों के अर्चन का फल वह पाता है और जो जो उसकी मनोकामना होती है, वह सब निस्सन्देह पूरी होती है ॥ ४७ ॥

नवम्यां वार्चयेदेवं विधानेन विधानवित् ।
स्तोत्रैः संपूजयेत् सर्वैर्महदैश्वर्यमाप्नुयात् ॥ ४८ ॥

अथवा नवमी के दिन इसी विधान से विधिज्ञ साधक पूजा कर स्तोत्रों से पूजन करे, तो सभी महान् ऐश्वर्यों को प्राप्त करता है ॥ ४८ ॥

कुर्यात् कर्कटके वापि मकरे मिथुनार्चनम् ।
तुलायां सिंहमेषे वा सर्वसंक्रान्तिषु प्रिये ॥ ४९ ॥

**नौ मिथुनों का अर्चन**—हे प्रिये ! अथवा कर्क, मकर, तुला, सिंह, मेष या सभी ( सूर्य ) संक्रान्तियों में मिथुनार्चन करे ॥ ४९ ॥

गौरीशिवौ रमाविष्णू वाणीसरसिजासनौ ।
शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ॥ ५० ॥
भद्रकालीवीरभद्रौ भैरवीभैरवावपि ।
मिथुनानि नवाभ्यर्च्य पूर्वोक्तेनैव वर्त्मना ॥ ५१ ॥

१. गौरी-शिव, २. रमा-विष्णु, ३. वाणी-ब्रह्मा, ४. शची-इन्द्र, ५.रोहणी-चन्द्र, ६. स्वाहा-अग्नि, ७. प्रभा-रवि, ८. काली-वीरभद्र और ९. भैरवी-भैरव—इन नौ मिथुनों (युगलों) का पूजन पूर्वोक्त विधि से करे ॥ ५०-५१ ॥

त्रितारादिनमोऽन्तेन तत्तन्नाम्ना विधानवित् ।
गन्धपुष्पादिभिः पूज्य मद्याद्यैः परितोषयेत् ॥ ५२ ॥

प्रत्येक नाम के आदि में तीन 'तार' (ॐ) और अन्त में 'नमः' लगाकर अर्थात् 'ॐ ॐ ॐ गौरीशिवाभ्यां नमः' इत्यादि मन्त्रों से विधानवित् साधक गन्ध पुष्पादि से पूजा कर मद्यादि से सन्तुष्ट करे ॥ ५२ ॥

प्रौढान्तोल्लासयुक्तानि कुर्वीत मिथुनानि च ।
एवं कृते न सन्देहस्तुष्टा मिथुनदेवताः ।
अनुगृहणन्ति तं देवि प्रयच्छन्ति मनोरथम् ॥ ५३ ॥

फिर उन्हें 'प्रौढान्त' उल्लास से युक्त मिथुन रूप में ध्यान करे । ऐसा करने से मिथुन देवता सन्तुष्ट होकर साधक पर अनुग्रह करते हैं और हे देवि ! उसकी मनोकामना पूरी करते हैं, इसमें सन्देह नहीं ॥ ५३ ॥

प्रतिवर्षन्तु यः कुर्यात् सभक्त्या मिथुनार्चनम् ।
तव लोके स निवसेत् सर्वैश्वर्यसमन्वितः ॥ ५४ ॥

प्रतिवर्ष भक्तिपूर्वक जो मिथुनार्चन करता है, वह सब ऐश्वर्यों से युक्त होकर आपके लोक में निवास करता है ॥ ५४ ॥

अथ वैशाखमासस्य शुक्लप्रतिपदीश्वरि ।
ब्राह्मे मुहूर्त्ते उत्थाय स्नानं सन्ध्यामुपास्य च ॥ ५५ ॥
मनोज्ञे रहसि स्थाने पूर्वाशाभिमुखस्थितः ।
आत्मानं गन्धपुष्पाद्यैरलङ्कृत्य विधानवित् ॥ ५६ ॥
कृत्वा पुरोदितन्यासान् देवताभावमास्थितः ।

**वैशाख में इष्टदेवता का अर्चन—**

हे ईश्वरि ! वैशाख मास की शुक्ल प्रतिपदा के दिन ब्राह्म मुहूर्त्त में उठकर स्नान एवं सन्ध्या से निवृत्त हो मनोरम एकान्त स्थान में पूर्व की ओर मुख करके बैठे । फिर विधिपूर्वक अपने आपको गन्ध पुष्पादि से अलंकृत कर पूर्वोक्त न्यासों को कर देवभाव को प्राप्त करे ॥ ५५-५७ ॥

किञ्चिदभ्युदिते सूर्ये मण्डले स्वेष्टदेवताम् ॥ ५७ ॥
ध्यात्वा सावरणां सम्यक् पूजयेद्विधिना प्रिये ।
षोडशैरुपचारैस्तु चक्रपूजापुरःसरम् ॥ ५८ ॥

हे प्रिये ! सूर्यमण्डल के कुछ उदित होने पर इष्टदेवता का आवरणों के सहित ध्यान कर षोडशोपचारों से चक्रपूजायुक्त पूजन करे ॥ ५७-५८ ॥

कुलदीपान् प्रदर्श्याथ शिवाय गुरुरूपिणे ।
मत्स्यमांसादि विधिवद्भक्ष्य भोज्यसमन्वितम् ॥ ५९ ॥
अर्घ्यं निवेद्य तच्छेषं स्वयं भक्त्या पिबेत् प्रिये ।
यौवनोल्लाससहितो निर्विकारेण चेतसा ॥ ६० ॥

उसके बाद कुलदीपों से नीराजन कर गुरुरूप शिव को मत्स्य-मांसादि भक्ष्य-भोज्यादि सहित अर्घ्य निवेदित करे और स्वयं उनके प्रसाद को शक्ति के साथ यौवनोल्लास से युक्त होकर निर्विकार चित्त से भक्तिपूर्वक पान करे ॥ ५९-६० ॥

ध्यायंस्तन्मण्डलं देवीमष्टोत्तरसहस्रकम् ।
जप्त्वा समर्प्य तत्पूजां देवताञ्च समुद्धरेत् ॥ ६१ ॥

देवी के उक्त मण्डल का ध्यान करते हुये १०८ बार जप करे। फिर जप समर्पित कर पूजा और देवता का विसर्जन करे ॥ ६१ ॥

**एवं शुक्लप्रतिपदं समारभ्य दिने दिने।**
**कुर्याज्जपार्चनं कृष्णचतुर्दश्यन्तमम्बिके ॥ ६२ ॥**
**अमावस्यादिने देवि पूजयेच्छक्तिकौलिकान्।**
**त्रिपञ्चसप्त नव वा वित्तलोभविवर्जितः ॥ ६३ ॥**

हे अम्बिके ! इस प्रकार शुक्ल प्रतिपदा के शुभ दिन से प्रारम्भ कर कृष्ण चतुर्दशी के दिन तक जप पूजा करे और हे देवि ! अमावास्या के दिन कृपणता छोड़कर यथाशक्ति तीन, पाँच, सात या नौ शक्तियों तथा कौलिकों का पूजन करे ॥ ६२-६३ ॥

**एवं यो मासमात्रन्तु कुर्यात् सूर्योदयार्चनम्।**
**देवता तस्य सन्तुष्टा ददाति फलमीप्सितम् ॥ ६४ ॥**

इस प्रकार एक मास तक जो साधक सूर्योदय का अर्चन करता है, उससे देवता सन्तुष्ट होकर उसे अभीष्ट फल प्रदान करते हैं ॥ ६४ ॥

**माध्याह्ने चार्चयेद्देवं सायाह्ने चार्चयेत् प्रिये।**
**स तु तत्फलमाप्नोति योगिनीनां प्रियो भवेत् ॥ ६५ ॥**

हे प्रिये ! इसी क्रम से मध्याह्न या सायाह्न में भी ( सूर्य ) पूजा की जा सकती है। यह तीनों सन्ध्याओं की पूजा भी वही फल देती है और साधक योगिनियों का प्रिय हो जाता है ॥ ६५ ॥

**त्रिसन्ध्यां योऽर्चयेदेवं मासमात्रं विधानवित्।**
**काङ्क्षितां लभते सिद्धिं देववद् विचरेद् भुवि ॥ ६६ ॥**

जो साधक तीनों सन्ध्याओं में एक मास तक इस प्रकार विधानानुसार पूजा करता है, वह अभीष्ट सिद्धि को प्राप्त कर पृथ्वी पर देववत् विहार करता है ॥ ६६ ॥

**माघशुक्लप्रतिपदि दिवाहारविवर्जितः।**
**स्नात्वा शुक्लाम्बरधरः सायं सन्ध्यामुपास्य च ॥ ६७ ॥**

**माघ में इष्टदेवता का अर्चन**—माघ शुक्ल की प्रतिपदा के दिन निराहार रह कर स्नानपूर्वक श्वेत वस्त्र पहन कर सायं सन्ध्या करे ॥ ६७ ॥

**सूर्यार्चनोक्तमार्गेण सर्वद्रव्यसमन्वितः।**
**यौवनोल्लाससहितश्चन्द्रस्थां देवतां स्मरन् ॥ ६८ ॥**

चन्द्रास्तमयपर्यन्तं जपेन्मन्त्रनन्यधीः ।
एवं प्रतिदिनं शुक्लचतुर्दश्यन्तमर्चयेत् ॥ ६९ ॥

फिर पूर्वोक्त सूर्यपूजा में कही गई विधि से सभी द्रव्यों से तथा स्वयं यौवन के उल्लास से युक्त होकर चन्द्र में स्थित देवता का ध्यान करते हुये चन्द्रमा के अस्त होने के समय तक एकाग्रचित्त से मन्त्रजप करे । इस प्रकार प्रतिदिन माघ शुक्ल पक्ष की चतुर्दशी पर्यन्त पूजा करनी चाहिए ॥ ६८-६९ ॥

पौर्णमास्यां यथाशक्त्या पूजयेच्छक्तिकौलिकान् ।
एवं यः कुरुते भक्त्या शुक्लपक्षार्चनं प्रिये ॥ ७० ॥
सर्व पापविशुद्धात्मा सर्वैश्वर्यसमन्वितः ।
सर्वलोकैकसंपूज्यः शिववन्निवसेद् भुवि ॥ ७१ ॥

अन्त में पूर्णिमा के दिन यथाशक्ति शक्तियों और कौलिकों की पूजा करे। हे प्रिये ! भक्तिपूर्वक शुक्लपक्ष का यह पूजन जो करता है, वह सभी पापों से मुक्त होकर सभी ऐश्वर्यों से युक्त होकर सब लोगों से पूजित होता है और शिव के समान होकर पृथ्वी पर रहता है ॥ ७०-७१ ॥

शुक्लपक्षेऽर्चनं यद्वत्तद्वत् पक्षे सितेतरे ।
यः करोति विधानेन सर्वान् कामान् समश्नुते ॥ ७२ ॥
इह भुक्त्वाऽखिलान् भोगान् देववत् प्रियदर्शनः ।
योगिनीवीरमेलनं लभते नात्र संशयः ॥ ७३ ॥

शुक्लपक्ष के समान ही कृष्णपक्ष का पूजन भी वैसा ही फलप्रद है। जो विधिपूर्वक इसे करता है, वह सभी कामनाओं को प्राप्त करता है और इस संसार में सभी सुखों का उपभोग कर देवता के समान दर्शनीय होता है तथा योगिनी वीर के सम्मिलन का आनन्द प्राप्त करता है, इसमें सन्देह नहीं ।

अथ कार्त्तिकमासस्य शुक्लप्रतिपदीश्वरि ।
स्नात्वाचम्य विशुद्धात्मा न्यासान् कृत्वा पुरोदितान् ॥ ७४ ॥

**कार्तिक में इष्टदेवता का अर्चन**—हे ईश्वरि ! कार्तिक मास की शुक्ल प्रतिपदा को स्नान एवं आचमन उपासना के द्वारा विशुद्धात्मा हो पूर्वोक्त न्यासों को करे ॥ ७४ ॥

प्रसुप्ते जीवलोके तु मुदितात्मा महानिशि ।
पूर्वार्चनोक्त विधिना सर्वद्रव्यसमन्वितः ॥ ७५ ॥
आज्येनानामिकास्थूलवर्त्तिं प्रज्वाल्य पार्वति ।
पञ्चवर्णरजश्चित्रवसुपत्रसरोरुहे ॥ ७६ ॥

**मधुपूर्णे च कलसे कांस्यपात्रे मनोहरे ।**
**दीपं संस्थाप्य पुरत उत्तराभिमुखस्थितः ॥ ७७ ॥**

फिर जीव लोक के सो जाने पर आनन्दपूर्वक महानिशा में पूर्वोक्त विधि से सभी द्रव्यों से युक्त होकर हे पार्वति ! घृत की एक मोटी बत्ती जलाकर पांच रंगों के चूर्ण से चित्रित अष्टदल कमल बनाये । उस पर कांसे का सुन्दर कलश मधु से भर कर स्थापित करे । कलश पर उत्तराभिमुख घृत का दीपक अपने सामने जला कर स्थापित करे ॥ ७५-७६ ॥

**दीपे सावरणां देवीं ध्यात्वा विधिवदर्चयेत् ।**
**यौवनोल्लाससहितो दीपस्थां देवतां स्मरन् ॥ ७८ ॥**
**अष्टोत्तरसहस्रन्तु जपेन्मन्त्रमनन्यधीः ।**
**एवं समर्चयेत् कृष्णचतुर्दश्यन्तमम्बिके ॥ ७९ ॥**

दीपक की बत्ती अनामिका के समान मोटी हों उत्तर की ओर मुख कर साधक कलश के सामने बैठे एवं उक्त दीपक की ज्योति में आवरण सहित देवी का ध्यानकर विधिवत् उसकी पूजा करे। फिर यौवनोल्लास से युक्त होकर दीपस्थ देवता का स्मरण करते हुए एकाग्र मन से १००८ बार जप करे ॥ ७८-७९॥

**अमावास्यादिने भक्त्या पूजयेच्छक्तिकौलिकान् ।**
**एवं कृते कुलेशानि देवता प्रीतिमाप्नुयात् ॥ ८० ॥**
**सर्वकामसमृद्धात्मा सर्वैश्वर्यसमन्वितः ।**
**सर्वलोकैकसम्मान्यः सञ्चरेत् स यथासुखम् ॥ ८१ ॥**

इस प्रकार कृष्ण चतुर्दशी के दिन तक पूजा करे । अमावास्या के दिन भक्तिपूर्वक कुलशक्तियों का पूजन करे । हे कुलेशानि ! ऐसा करने से साधक देवता की प्रीति प्राप्त करता है और सभी कामनाओं से समृद्ध होकर तथा सब प्रकार के ऐश्वर्यों से युक्त होकर सबसे सम्मानित होता हुआ पृथ्वी पर सुखपूर्वक विचरण करता है ॥ ८०-८१ ॥

**अष्टाष्टकार्चनं कुर्यात् शक्तश्चेदेकवासरे ।**
**अथवाष्टाष्टदिवसेष्वथ द्व्यष्टदिनेषु च ।**
**द्वात्रिंशद्दिवसेष्वेवं चतुःषष्टिदिनेषु च ॥ ८२ ॥**
**गुरुणा कारयेद्देवि क्रमज्ञेनापरेण वा ।**
**क्रमज्ञश्चेत् स्वयं कुर्याद्वित्तशाठ्यविवर्जितः ॥ ८३ ॥**

**अष्टाष्टक की पूजा**—यदि समर्थ हो, आठ अष्टकों की पूजा एक दिन में करे । अथवा हे देवि ! ८, १६, ३२ या ६४ दिनों में पूजाक्रम के ज्ञाता

गुरु द्वारा पूजन कराए । यदि साधक क्रम का ज्ञाता हो, तो स्वयं ही कृपणता को छोड़कर पूजा करे ।। ८२-८३ ।।

**मूलाष्टकन्तु ब्रह्माद्याश्चासिताङ्गादिभैरवाः ।**
**मङ्गलाद्यैश्च मिथुनैरष्टभिः शब्दिताः प्रिये ।। ८४ ।।**

ब्राह्मी आदि आठ मातृकाएँ और असिताङ्ग आदि आठ भैरव अपने मंगलादि मिथुनों सहित मूलाष्टक हैं ।। ८४ ।।

**विमर्श**—ब्राह्मी, नारायणी, माहेश्वरी, चामुण्डा, कौमारी, अपराजिता, वाराही और नारसिंही—ये आठ कुलाष्टक हैं । बृहत्तन्त्रसार, पृ० ५३१ दसवाँ Edition । वामकेश्वर तन्त्रान्तर्गत नित्याषोडशिकार्णव ( १. १६९-१७१ ) में कुछ अन्तर है—ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, ऐन्द्री, चामुण्डा और महालक्ष्मी । अष्टाङ्ग, रुरु, चण्ड, क्रोध, उन्मत्त भैरव, कपाली, भीषण और संहार—ये आठ भैरव हैं—पुरश्चर्यार्णव ।

**मूलाष्टकोद्भवानीति प्रसिद्धानि कुलागमे ।**
**अक्षोभ्यादिचतुःषष्टिमिथुनानि समर्चयेत् ।। ८५ ।।**

मूलाष्टकों से उद्भूत अक्षोभ्य आदि ६४ मिथुन कुलागम में प्रसिद्ध हैं उनकी पूजा करे ।। ८५ ।।

**पूर्वोक्तेन विधानेन यथाविभवविस्तरम् ।**
**क्रमलोपं न कुर्वीत स्वेष्टकार्यार्थसिद्धये ।। ८६ ।।**
**गन्धपुष्पाक्षताद्यैश्च मत्स्यमांसासवादिभिः ।**
**भक्ष्यभोज्यादिभिर्नानापदार्थैः षड्रसान्वितैः ।**
**सम्यक् सन्तोषयेद्देवि मिथुनान्यतिभक्तितः ।। ८७ ।।**
**प्रौढान्तोल्लासपर्यन्तं कुर्यात् श्रीचक्रमम्बिके ।**

पूर्वोक्त विधान से यथाशक्ति उनकी पूजा करे । अपने अभीष्ट कार्य को सिद्ध करने के लिये क्रम का लोप न करे । गन्ध, पुष्पाक्षत, मत्स्य, मांस, मद्य, भक्ष्य, भोज्य आदि छः रसों से युक्त पदार्थों आदि से मिथुनों को हे देवि ! अति भक्ति के साथ अच्छी तरह सन्तुष्ट करे । हे अम्बिके ! प्रौढान्त उल्लास तक श्री चक्रार्चन करे ।। ८७-८८ ।।

**एवं यः कुरुते देवि सकृदष्टाष्टकार्चनम् ।। ८८ ।।**
**ब्रह्मविष्णुमहेशादिदेवताभिः स पूज्यते ।**
**किं पुनर्मानवाद्यैश्च साक्षात् शिव इवापरः ।। ८९ ।।**

इस प्रकार जो एक बार अष्टाष्टक की पूजा करता है, वह ब्रह्मा, विष्णु, महेशादि देवताओं द्वारा पूजित होता है। फिर मनुष्यों की क्या बात। वह साक्षात् शिव ही होता है ॥ ८८-८९ ॥

**यदर्चनाच्चतुःषष्टियोगिनीगणसंस्तुतः।**
**पुनरावृत्तिरहितो निवसेत्तव सन्निधौ ॥ ९० ॥**
**समस्तदेवताप्रीतिकारणं परमेश्वरि।**
**अस्मात् परतरा पूजा नास्ति सत्यं न संशयः ॥ ९१ ॥**

इस पूजन से वह ६४ योगिनियों द्वारा संस्तुत होकर पुनर्जन्म से छूटकर आपके पास रहता है। हे परमेश्वरि ! इससे सभी देवता प्रसन्न होते हैं। अतः इससे श्रेष्ठ अन्य पूजा नहीं है, यह निस्सन्देह सत्य है ॥ ९०-९१ ॥

**पश्यदेवंविधं चक्रं यो भक्त्याष्टाष्टकं प्रिये।**
**यज्ञदानतपस्तीर्थव्रतकोटिफलं लभेत् ॥ ९२ ॥**

हे प्रिये ! इस प्रकार के अष्टाष्टक चक्र का जो भक्तिपूर्वक दर्शन करता है, वह करोड़ों यज्ञ, दान, तप, तीर्थ एवं व्रत का फल पाता है ॥ ९२ ॥

**राजा यः कारयेद्देवि भक्त्याष्टाष्टकपूजनम्।**
**चतुःसागरपर्यन्तां महीं शास्ति न संशयः ॥ ९३ ॥**

हे देवि ! जो राजा भक्तिपूर्वक अष्टाष्टक पूजन कराता है, वह चार सागरों तक व्याप्त पृथ्वी पर शासन करता है, इसमें सन्देह नहीं ॥ ९३ ॥

**श्रीकण्ठादीनि पञ्चाशन्मिथुनानि समर्चयेत्।**
**पूर्वोक्तेन विधानेन कुलेश्वरि विधानवित् ॥ ९४ ॥**
**स्वकार्यफलसिद्ध्यर्थं वित्तशाठ्यविवर्जितः।**
**प्रौढान्तोल्लासयुक्तानि मिथुनानि समर्चयेत् ॥ ९५ ॥**

**श्रीकण्ठादि ५० मिथुनों की पूजा**—हे कुलेश्वरि ! विधिविधान का ज्ञाता साधक अपने अभीष्ट फल को पाने के लिये श्रीकण्ठादि ५० मिथुनों की पूर्वोक्त विधि से प्रौढान्त उल्लास से युक्त रूप में कृपणता से रहित होकर पूजा करे ॥ ९४-९५ ॥

**सन्तुष्टानि प्रयच्छन्ति साधकायेप्सितं फलम्।**
**अव्याहताज्ञः सर्वत्र पूज्यते देववत् प्रिये।**
**तव लोके वसेद्देवि ब्रह्मादिसुरसंस्तुतः ॥ ९६ ॥**

सन्तुष्ट होकर वे साधक को इच्छित फल देते हैं और हे प्रिये ! सर्वत्र देववत् उसकी पूजा होती है । ब्रह्मादि देवताओं से संस्तुत होकर हे देवि ! वह आपके लोक में निवास करता है ॥ ९६ ॥

**केशवादि गणेशादि कामादि मिथुनानि च ।**
**श्रीकण्ठादि समभ्यर्च्य तत्फलं लभते ध्रुवम् ॥ ९७ ॥**

**केशवादि मिथुनों की पूजा**—श्रीकण्ठादि मिथुनों के समान केशवादि, गणेशादि और कामादि मिथुनों की पूजा करने से वैसा ही फल निश्चित रूप से मिलता है ॥ ९७ ॥

**अनुग्रहन्तु यः कुर्यात् डाकिन्यादिसमर्चने ।**
**मासे मासेऽथवा वर्षे स्वजन्मदिवसे प्रिये ॥ ९८ ॥**
**पूर्वोक्तेन विधानेन यथाविभवविस्तरम् ।**
**प्रौढान्तोल्लासपर्यन्तं तोषयेत्तद्विधानवित् ॥ ९९ ॥**
**कुर्वन्त्यनुग्रहं देवि सन्तुष्टाः सर्वदेवताः ।**
**सर्वोपद्रव रहितः सर्वैश्वर्यसमन्वितः ॥ १०० ॥**
**लोकेऽस्मिन् संस्तुतः सर्वैः स जीवेच्छरदां शतम् ।**
**देहान्ते समवाप्नोति तव लोकं न संशयः ॥ १०१ ॥**

**डाकिन्यादि की पूजा**—हे प्रिये ! प्रति मास, प्रति वर्ष या अपने जन्मदिवस पर जो डाकिन्यादि की पूजा पूर्वोक्त विधि से यथाशक्ति करता है और प्रौढान्त उल्लास तक उन्हें सन्तुष्ट करता है, उससे हे देवि ! सभी देवता प्रसन्न होते हैं और वह सभी उपद्रवों से रहित होकर सभी ऐश्वर्यों से युक्त होता है । इस लोक में सभी से वन्दित होकर वह सौ वर्षों तक जीवित रहता है और मृत्यु होने पर आपके लोक को प्राप्त करता है, इसमें सन्देह नहीं ॥ ९८-१०१ ॥

**दूतीयागन्तु यः कुर्यात् पूर्वोक्तविधिना प्रिये ।**
**निर्विकल्पेन चित्तेन नवशक्तिसमन्वितः ॥ १०२ ॥**
**वर्षे वर्षे चतुःषष्टिपीठार्चनफलं लभेत् ।**
**आज्ञासिद्धिर्भवेत्तस्य देवताप्रीतिमाप्नुयात् ॥ १०३ ॥**

**दूतीयाग का फल**—हे प्रिये ! पूर्वोक्त विधि से नव शक्तियों से युक्त हो निर्विकल्प ( शुद्ध ) चित्त से जो 'दूतीयाग' करता है, वह प्रति वर्ष ६४ पीठों के अर्चन का फल पाता है । उसे आज्ञासिद्धि ( वाक्सिद्धि ) मिलती है और देवता उस पर प्रसन्न होते हैं ॥ १०२-१०३ ॥

त्रिकपूजान्तु यः कुर्यादिच्छाज्ञानक्रियात्मिकाम् ।
आगमोक्तेत विधिना पूर्ववेत्तद्विधानवित् ॥ १०४ ॥
पदार्थैस्तोषयेत् सम्यक् यथाविभवविस्तरम् ।
सन्तुष्टा देवतास्तिस्रः सर्वकर्मफलप्रदाः ।
देवेशि साधकाभीष्टं प्रयच्छन्ति न संशयः ॥ १०५ ॥

**त्रिकपूजा का फल**—इच्छा, ज्ञान एवं क्रियात्मिका रूप 'त्रिकपूजा' को जो आगमोक्त विधि से करता है और पूर्ववत् विधान से यथाशक्ति हव्य पदार्थों द्वारा देवताओं को जो यथाविभवविस्तार सहित सन्तुष्ट करता है, इस प्रकार, हे देवेशि ! त्रिक पूजा से सन्तुष्ट देवता साधक को अभीष्ट प्रदान करते हैं और उसकी सभी कामनाएँ पूरी होती हैं, इसमें सन्देह नहीं ॥ १०४-१०५ ॥

इत्यादिदेवतापूजां विशेषदिवसेषु यः ।
करोति शस्त्रविधिना स भवेदावयोः प्रियः ॥ १०६ ॥

**कुलपूजा के बिना चक्र में अधिकार नहीं**—उक्त देवताओं की पूजा विशेष उत्सव दिनों में जो शास्त्रविधि से करता है, वह हम दोनों का प्रिय होता है ॥ १०६ ॥

श्रीचक्रं कौलिको मोहाद्विशेषदिवसेषु यः ।
न करोति समर्थः सन् स भवेद् योगिनीपशुः ॥ १०७ ॥

जो कौलिक समर्थ होकर भी मोहवश विशेष दिनों में श्रीचक्रपूजन को नहीं करता, वह योगिनियों का पशु बनता है ॥ १०७ ॥

कुलपूजां विना चक्रे नाधिकारः कथञ्चन ।
कुलपूजां सुनियतं यः करोति स कौलिकः ॥ १०८ ॥

कुलपूजा के बिना चक्र में किसी को भी अधिकार नहीं होता । क्योंकि जो नियमित रूप से कुलपूजा करता है, वही कौलिक है ॥ १०८ ॥

विना मन्त्रेण पूजा चेद्देवता न प्रसीदति ।
कुलपूजां सुनियतं यः करोति हि कौलिकः ।
कुलेशि सर्वदाप्नोति योगिनीवीरमेलनम् ॥ १०९ ॥

यन्त्र के बिना पूजा करने से देवता प्रसन्न नहीं होते । क्योंकि जो नियमित रूप से कुल पूजा करता है, वह कौलिक है । हे कुलेशि ! इस प्रकार वह योगिनी एवं वीर के सम्मिलन से सब कुछ प्राप्त कर लेता है ॥ १०९ ॥

नीचोऽपि वा सकृद्भक्त्या कारयेद् यः कुलार्चनम् ।
स सद्गतिमवाप्नोति किमुतान्ये द्विजातयः ॥ ११० ॥

**कुलपूजा की प्रशंसा**—इस प्रकार नीच भी यदि एक बार भक्ति से कुलार्चन करता है, तो वह सद्गति को प्राप्त करता है । फिर द्विजाति के लोगों की बात ही क्या है ॥ ११० ॥

तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
कुलपूजारतो भूयादभीष्टफलसिद्धये ॥ १११ ॥

अत: प्रयत्नपूर्वक ( सुख दु:खादि ) सब दशाओं में सदा कुलपूजा करनी चाहिये क्योंकि इससे अभीष्ट फल मिलता है ॥ १११ ॥

कुलपूजाधिको यज्ञः कुलपूजाधिकं व्रतम् ।
कुलपूजाधिकं तीर्थं कुलपूजाधिकं तपः ॥ ११२ ॥

कुलपूजा से अधिक न कोई यज्ञ है, न कोई व्रत है, न तीर्थ है और न तो कुलपूजा से अधिक कोई तप ही है ॥ ११२ ॥

कुलपूजाधिकं दानं कुलपूजाधिका क्रिया ।
कुलपूजाधिकं ज्ञानं कुलपूजाधिकं सुखम् ॥ ११३ ॥
कुलपूजाधिको धर्मः कुलपूजाधिकं फलम् ।
कुलपूजाधिकं ध्यानं कुलपूजाधिकं महः ॥ ११४ ॥

कुलपूजा से अधिक न कोई दान है, न क्रिया है, न ज्ञान है और न सुख है । कुलपूजा से अधिक न कोई धर्म है, न फल है, न ध्यान है औन न तो कुलपूजा से अधिक कोई तेज ही है ॥ ११३-११४ ॥

कुलपूजाधिको योगः कुलपूजाधिका गतिः ।
कुलपूजाधिकं भाग्यं कुलपूजाधिकाऽर्चना ॥ ११५ ॥

कुलपूजा से अधिक न कोई योग है, न गति है, न भाग्य है तथा कुलपूजा से अधिक कोई भी अर्चना नहीं है ॥ ११५ ॥

नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके ।
बहुनात्र किमुक्तेन रहस्यं शृणु पार्वति ॥ ११६ ॥

हे कुलनायिके ! मैं आपसे दृढ़तापूर्वक कहता हूँ कि संसार में कुछ भी कुलपूजा से अधिक नहीं है, कुछ भी नहीं कुछ भी नहीं । अधिक कहने से क्या लाभ, हे पार्वति ! रहस्य की बात सुनिए ॥ ११६ ॥

वेदशास्त्रोक्तमार्गेण कुलपूजां करोति यः ।
तत्समीपे स्थितं मां त्वां विद्धि नान्यत्र भामिनी ।
इदं सत्यमिदं सत्यं सत्यं सत्यं न संशयः ॥ ११७ ॥

वेद एवं शास्त्रोक्त मार्ग से जो कुलपूजा करता है, उसी के समीप आप मुझे स्थित समझिये । हे भामिनि ! अन्य कहीं भी मैं नहीं रहता । यह सत्य है यह सत्य है यह सर्वथा सत्य है, इसमें सन्देह नहीं ॥ ११७ ॥

खभूमिदिग्जलगिरिवनसर्वचराः प्रिये ।
सहस्रकोटियोगिन्यस्तावन्तो भैरवा अपि ।
नियुक्ता हि मया देवि कुलसंरक्षणाय च ॥ ११८ ॥

हे प्रिये ! आकाश, भूमि, दिशाओं, जल, पर्वत, वन आदि सभी स्थानों में विचरण करने वाले सहस्र कोटि योगिनियों और उतने ही भैरवों की नियुक्ति हे देवि ! मैंने कुल के संरक्षण के लिये की है ॥ ११८ ॥

दिवसे दिवसे सर्वे पार्वति मुदिताननाः ।
साधकानेव वीक्षन्ते स्वस्वपूजनलिप्सया ॥ ११९ ॥

हे पार्वति ! ये सब देवता प्रतिदिन प्रसन्नमुख हो अपने अपने पूजन की लिप्सा एवं आकांक्षा से साधकों को ही देखा करते हैं ॥ ११९ ॥

अपूजितास्तु विघ्नन्ति पालयन्ति सुपूजिताः ।
गुरुभक्तान् सदाचारान् गुह्यधर्मान् सदाशिवान् ॥ १२० ॥
भक्तिहीनान् दुराचारान् नाशयन्ति प्रकाशकान् ।
श्रीचक्रे संस्मरेत्तस्माद् योगिनीभैरवान् प्रिये ॥ १२१ ॥

अतः पूजित न होने पर ये विघ्न प्रदान करते हैं और सुपूजित होने पर ये साधक का पालन करते हैं । अपूजित होने पर ये भक्तिहीन, दुराचारी, धर्म को प्रकट करने वाले लोगों का ये नाश करते हैं और पूजित होने पर गुरु भक्त, सदाचारी, धर्म को गुप्त रखने वालों का पालन करते हैं ॥१२०-१२१॥

न स्मरेद् यदि मूढात्मा योगिनीनां भवेत् पशुः ।
तस्मात् श्रीचक्रमध्ये तु संस्मरेत् सर्वदेवताः ॥ १२२ ॥
अनुगृहणन्ति देवेशि साधकान् नात्र संशयः ।
अनुग्रहन्तु वक्ष्यामि श्रृणु देवि यथाक्रमम् ॥ १२३ ॥

अतः हे प्रिये ! जो गूढ़ श्रीचक्र में योगिनियों और भैरवों का स्मरण नहीं करता है, वह योगिनियों का पशु बनता है । अतः श्रीचक्र के मध्य सभी

देवताओं का स्मरण करे । क्योंकि हे देवेशि वे साधकों पर अनुग्रह करती हैं, इसमें सन्देह नहीं ।। १२२-१२३ ।।

**आत्मनोऽनुग्रहार्थं वा परार्थं श्रेष्ठमुत्तमम् ।**
**शुचिद्रव्यसमायुक्तं चक्रपूजासमन्वितम् ॥ १२४ ॥**
**सर्वेषां दक्षिणां दत्त्वा होमपात्रं पृथक पृथक् ।**
**प्रपूजयेच्च वर्णस्थाः सर्वाभरणभूषिताः ॥ १२५ ॥**

**अनुग्रह में छः प्रकार की व्यवस्था**—हे देवि ! 'अनुग्रह' को यथाक्रम बताऊँगा, सुनिए । अपने ऊपर अनुग्रह के लिये या दूसरे पर श्रेष्ठ अनुग्रह के लिये पवित्र द्रव्यों से युक्त चक्रपूजा के सहित सभी को दक्षिणा देकर अलग अलग होमपात्र प्रदान करे और समस्त आभूषणों से सजी हुई वर्ण मातृका स्थित शक्तियों की पूजा करे । स्वयं हर्षानन्द से युक्त रहे और अलग अलग सब प्रसन्न रहें ।। १२४-१२५ ।।

**हर्षानन्दस्वयंयुक्ताः प्रसन्नाश्च पृथक् पृथक् ।**
**पायसाज्यौदनैर्युक्तैर्नैवेद्यैर्भक्तिसंयुतैः ॥ १२६ ॥**
**गन्धपुष्पादिभिः सम्यगर्चयित्वा गणेश्वरम् ।**
**हसख फ्रें हेसौं(ह्सौं) डां डीं डमलवरयूं ततः ॥ १२७ ॥**
**श्रीपादुकां हेसौं(ह्सौं)मिति च हसखफ्रें पुटन्ततः ।**

भक्तिपूर्वक गन्ध पुष्पादि से गणेश्वर का सम्यक् रूप से पूजन कर खीर, घी, चावल से युक्त नैवेद्य प्रदान करे । पूजन का मन्त्र इस प्रकार है—**हसखफ्रें हसौं डां डीं डमलवरयूं श्रीपादुकां हसौं हसखफ्रें** ।। १२६-१२८ ।।

**सङ्कल्प्य मनसोऽभीष्टं मधुरत्रितयः प्रिये ॥ १२८ ॥**
**गन्धपुष्पादिभिः सम्यगर्चयित्वा पृथक् पृथक् ।**
**पूजयित्वेप्सितान् कामान् प्रार्थयेत् कमलानने ॥ १२९ ॥**
**ईप्सितानि च सर्वाणि साधको लभते वरम् ।**

हे प्रिये ! मन में अभीष्ट सङ्कल्प कर गन्ध, पुष्पादि और मधुरत्रय से अलग अलग सम्यक् रूप से अर्चन एवं पूजन कर हे कमलानने ! इच्छित कामनाओं की पूर्ति के लिये प्रार्थना करे । इससे साधक की सभी इच्छाएँ पूरी होती हैं ।। १२८-१३० ।।

**आत्मनश्च परस्यापि रक्षार्थं पूजयेत् प्रिये ॥ १३० ॥**
**रोगाणां नाशनार्थञ्च यथात्र पुत्रसिद्धये ।**

वश्यार्थं मङ्गलार्थञ्च धर्मकर्मार्थसिद्धये ॥ १३१ ॥
सप्ताहं पूजयेद्देवि चतुर्दशदिनानि च ।
एकविंशदिनान्यत्र लभते चेप्सितं फलम् ॥ १३२ ॥

हे प्रिये ! १. अपनी और दूसरे की रक्षा के लिये, २. रोगों के नाश के लिये, ३. पुत्र-प्राप्ति के लिये, ४. वश्य के लिये, ५. मङ्गल ( कल्याण ) के लिये एवं ६. धर्म, काम तथा अर्थ की सिद्धि के लिए हे देवि ! एक सप्ताह या चौदह दिनों तक पूजन करे । अथवा इक्कीस दिनों में अभीष्ट फल की प्राप्ति होती है ॥ १३०-१३२ ॥

दक्षिणाञ्च पृथग् दद्याद्वस्त्रभूषाङ्गुरीयकम् ।
कुलाष्टकसमायुक्तं चतुःषष्टिसमन्वितम् ॥ १३३ ॥
अर्चितञ्च प्रयत्नेन सिद्धिर्भवत्यनेकशः ।
वित्तशाठ्यं न कुर्वीत यदीच्छेत् सिद्धिमात्मनः ॥ १३४ ॥

चौंसठ देवताओं के सहित और कुलाष्टक से युक्त मण्डल में अलग अलग वस्त्रभूषा एवं भूषणादि दक्षिणा देकर प्रयत्नपूर्वक पूजन करने से अनेक प्रकार की इच्छाओं की सिद्धि होती है । अपनी सिद्धि की इच्छा हो, तो धन की कृपणता न करे ॥ १३३-१३४ ॥

एवं षट्कं समाख्यातमनुग्रहं वरानने ।
अर्चितव्यं प्रयत्नेन साधकैः स्वेष्टसिद्धये ॥ १३५ ॥

इस प्रकार हे वरानने ! अनुग्रह षट्क कहा गया है । साधकों को अपनी इष्ट सिद्धि के लिये प्रयत्नपूर्वक अर्चन करना चाहिये ॥ १३५ ॥

ध्यात्वैव पूजयेदेता डाकिन्याद्या वरानने ।
संपूज्य सप्तमीं देवीं पूजयेत् सर्वसिद्धये ॥ १३६ ॥

ध्यान कर इन डाकिनी आदि की पूजा करे । पूजन कर चुकने पर सर्वसिद्धि के लिये सप्तमी देवी की पूजा करे ॥ १३६ ॥

शक्तिदेहसमुत्पन्नं शक्तिनिर्माल्यभोजने ।
स्ववर्गेण समायुक्ता दत्तनिर्माल्यमित्यपि ।
प्रतिगृहणयुगं स्वाहा इति निर्माल्यसर्जनम् ॥ १३७ ॥

शक्तिदेहसमुत्पन्नं शक्तिनिर्माल्यभोजने ।
स्ववर्गेण समायुक्ता दत्तनिर्माल्यं प्रतिगृहण प्रतिगृहण स्वाहा—

इस मन्त्र से निर्माल्य प्रदान करे ॥ १३७ ॥

**डाकिनी सर्पवदना वित्तजा ज्वलनप्रभा ।**
**कमण्डलुं कर्त्तृकाञ्च धारयन्ती वरप्रदा ॥ १३८ ॥**

सर्वमुख वाली, वित्तजा (समृद्धि सम्पन्न) वह्नि की प्रभा वाली, हाथ में कमण्डलु, कर्तरिका (कैंची), वर और अभय मुद्रा धारण करने वाली **डाकिनी देवी** का ध्यान करना चाहिए ॥ १३८ ॥

**उलूकवदना देवी राकिणी नीलसन्निभा ।**
**खड्गखेटकसंयुक्ता सर्वालङ्कारभूषिता ॥ १३९ ॥**

उलूक के मुख वाली नीले वर्ण के सदृश हाथों में खड्ग, तलवार से युक्त तथा समस्त अलङ्कारों से विभूषित **राकिणीदेवी** का ध्यान करना चाहिए ॥ १३९ ॥

**लाकिनी श्रीकपालाढ्या पाशांकुशधरा सती ।**
**पाटलीपुष्पसङ्काशा सर्वाभरणभूषिता ॥ १४० ॥**

श्री कपाल से आढ्य, पाश एवं अंकुश धारण करने वाली, सती, पाटल के पुष्प के सदृश समस्त अलङ्कारों से विभूषित **लाकिनी देवी** का ध्यान करना चाहिए ॥ १४० ॥

**काकिनी हयवक्त्रा च माणिक्यसदृशप्रभा ।**
**त्रिमुखीं मुण्डसंयुक्ता सिद्धिदा सर्वशोभना ॥ १४१ ॥**

घोड़े के मुख वाली, माणिक्य के सदृश प्रभा वाली, तीन मुखों वाली, मुण्डों से संयुक्त सिद्धि प्रदान करने वाली तथा समस्त शोभा से सम्पन्न **काकिनी देवी** का ध्यान करना चाहिए ॥ १४१ ॥

**शाकिनी त्वञ्जनप्रख्या मार्जारास्या सुशोभना ।**
**कुलिशञ्च तथा दण्डं धारयन्ति शुचिस्मिता ॥ १४२ ॥**

अञ्जन के समान वर्ण वाली, मार्जारी (बिल्ली) के मुख वाली, सुशोभन विग्रह वाली, कुलिश (फावड़े) और दण्ड धारण करने वाली तथा मन्द हास से युक्त **शाकिनी देवी** का ध्यान करना चाहिए ॥ १४२ ॥

**हाकिनी ऋक्षवदना नीलनीरदसन्निभा ।**
**कपालशूलहस्ता च खेटकैरुपशोभिता ।**
**एकद्वित्रिचतुःपञ्चषण्मुखा सरभाभया ॥ १४३ ॥**

ऋक्ष के मुख वाली, नीले बादल के सदृश विग्रह वाली, हाथों में कपाल एवं शूल (त्रिशूल) से युक्त और तलवार (एवं अभय मुद्रा) से सुशोभित

हाकिनी का ध्यान करना चाहिए । इस प्रकार एक, दो, तीन, चार, पाँच एवं छः मुखों वाली तथा 'शीघ्र' अभय प्रदान करने वाली **हाकिनी देवी** का ध्यान करना चाहिए ॥ १४३ ॥

**इति ते कथितं किञ्चिद्विशेषदिवसार्चनम् ।**
**समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥ १४४ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे विशेष-दिवसार्चनं नाम दशमोल्लासः ॥ १० ॥**



**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में विशेषदिवसार्चन-कथन नामक दसवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ १० ॥**



# अथैकादशोल्लासः

श्री देव्युवाच

कुलेश श्रोतुमिच्छामि सर्वलोकैकपूजित ।
कुलाचारक्रमं देव वद मे करुणानिधे ॥ १ ॥

**कुलाचार-कथन**—देवी ने कहा—हे कुलेश ! मैं कुलाचारक्रम को सुनना चाहती हूँ । उसे मुझे बताइये ॥ १ ॥

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण पशुपाशैः प्रमुच्यते ॥ २ ॥

**क्रम का ज्ञाता कनिष्ठ होने पर भी अधिकारी**—हे देवि ! सुनिए, जो आपने मुझसे पूछा है, उसे मैं बताऊँगा, जिसके सुनने मात्र से सब पशु पाशों से छुटकारा मिल ज़ाता है ॥ २ ॥

यदि चेद्दीक्षितो ज्येष्ठः कुलपूजादिवर्जितः ।
तत्कनिष्ठः क्रमज्ञश्चेत् कुलपूजां समाचरेत् ॥ ३ ॥

यदि दीक्षाप्राप्त ज्येष्ठ व्यक्ति कुलपूजा से वर्जित हो, तो कनिष्ठ होते हुये भी यदि क्रम का ज्ञाता हो, तो वही कुलपूजा करे ॥ ३ ॥

तत्समीपं ततो गत्वा नमस्कृत्य गुरुं यथा ।
तस्मै निवेद्य तत्सर्वं शेष भुञ्जीत पार्वती ॥ ४ ॥

हे पार्वति ! उसके पास जाकर उसे गुरुवत् नमस्कार करे । उसे सब कुछ निवेदित कर शेष को खाये ॥ ४ ॥

पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि समागते ।
नत्वा ब्रूयात् स्थितं शिष्टमाचरेत्तदनुज्ञया ॥ ५ ॥

पूजा के मध्य में गुरु, ज्येष्ठ या पूज्य के आने पर बैठे ही बैठे उन्हें नमस्कार शिष्टाचार करे और उनकी अनुमति लेकर कार्य करे ॥ ५ ॥

ज्येष्ठस्य च कनिष्ठस्य शिष्यावेकत्र संस्थितौ ।
तत्र पूर्ववदाचारः कथितः कुलनायिके ॥ ६ ॥

एकत्र स्थित होने पर ज्येष्ठ और कनिष्ठ शिष्य का आचार इसी प्रकार कहा गया है । हे कुलनायिके ! अन्य आचार पूर्ववत् ही होंगे ॥ ६ ॥

अज्ञातकौलिके प्राप्ते पौर्वापर्यन्तु चिन्तयेत् ।
स्मृत्वा स्वस्य गुरुं देवि स्वस्य मार्गेण तर्पयेत् ॥ ७ ॥

**अज्ञात कौलिक के आने पर कर्तव्य**—अज्ञात कौलिक के आने पर परम्परा का निर्वाह करे । हे देवि ! अपने गुरुदेव का स्मरण कर अपने अपने मार्ग से तर्पण करे ॥ ७ ॥

नित्यार्चनं दिने कुर्याद्रात्रौ नैमित्तिकार्चनम् ।
उभयोः काम्यकर्माणि चेति शास्त्रस्य निर्णयः ॥ ८ ॥

**अर्चन का समय**—नित्यार्चन दिन में करे और नैमित्तिक अर्चन रात्रि में। दोनों ही काम्य कर्म हैं, यह शास्त्रनिर्णय है ॥ ८ ॥

अस्नात्वाऽनासनस्थो वा भुक्त्वा वा प्रलपन्नपि ।
गन्धपुष्पाक्षता कल्पवस्त्राद्यैरनलंकृतः ।
अविन्यस्तशरीरो वा कुलपूजां न चाचरेत् ॥ ९ ॥

**पूजा में कर्तव्य**—स्नान किये बिना, या आसन पर बैठे बिना, या भोजन करके, या प्रलाप करते हुये, या गन्ध पुष्प, वस्त्रादि से अलंकृत हुये बिना, या शरीर में न्यास किये बिना कुलपूजा नं करनी चाहिये ॥ ९ ॥

विना मन्त्रेण या पूजा विना मांसेन तर्पणम् ।
विना शक्त्या तु यत्पानं निष्फलं कथितं प्रिये ॥ १० ॥

मन्त्र के बिना पूजा, मांस के बिना तर्पण और शक्ति के बिना जो पान किया जाता है, हे प्रिये ! वह निष्फल होता है ॥ १० ॥

श्रीचक्रमेको वा कुयदिकपात्रन्तु नार्चयेत् ।
नार्चयेदेकहस्तेन न पिबेदेकपाणिना ॥ ११ ॥

श्री चक्रपूजा को अकेले न करे और न एक पात्र में पूजन करे । न एक हाथ से पूजा करे और न एक हाथ से पान करे ॥ ११ ॥

मत्स्यमांसासवैर्देवि नार्चयेत् पशुसन्निधौ ।
प्रणम्य प्रविशेच्चक्रं विनिर्गच्छेत्प्रणम्य च ॥ १२ ॥

हे देवि ! पशु के निकट मत्स्य, मांस और आसव के द्वारा पूजन न करे । प्रणाम कर चक्र में प्रवेश करे और प्रणाम करके ही उससे बाहर जाय ॥ १२ ॥

**श्रीचक्रे नासने तिष्ठेन्न च वीरासने प्रिये ।**
**श्रीचक्रदर्शने देवि नेत्रयोः पापनाशनम् ।**
**तन्नास्ति चेद् व्रणद्वन्द्वं कौलिकस्याक्षियुग्मकम् ॥ १३ ॥**

हे प्रिये ! श्रीचक्र में न तो आसन पर खड़ा रहे और न वीरासन से बैठे । हे देवि ! श्रीचक्र का दर्शन करने से नेत्रों के पाप नष्ट होते हैं । दर्शन न होने से कौलिक के दोनों नेत्र नेत्र न रहकर दो घाव से प्रतीत होते हैं ॥ १३ ॥

**अनाचारान् सदाचारान् चक्रस्थान् शक्तिकौलिकान् ।**
**शिवगौरीधिया देवि भावयेन्नावमानयेत् ॥ १४ ॥**

चक्र में बैठी हुई शक्ति और कौलिकों के अनाचार सदाचार होते हैं हे देवि ! पार्वती एवं शिवरूप में उन्हें मानना चाहिये । उनका अपमान न करे ॥ १४ ॥

**कुलाचार्यगृहं गत्वा भक्त्या पापविशुद्धये ।**
**याचेदमृतञ्चान्नञ्च तदभावे जलं पिबेत् ॥ १५ ॥**

**कुलाचार्य के घर में अमृत की याचना**—कुलाचार्य के घर में पहुँचे, तो पापों से मुक्त होने के लिये माँगकर भक्तिपूर्वक अमृत या अन्न अथवा उसके अभाव में जल पिये ॥ १५ ॥

**कुलाचार्येण तच्छक्त्या दत्तं पात्रञ्च भक्तितः ।**
**नमस्कृत्य तु गृह्णीयादन्यथा नरकं व्रजेत् ॥ १६ ॥**

कुलाचार्य की शक्ति के द्वारा दिये गये पात्र को नमस्कार कर भक्ति के साथ ग्रहण करे, अन्यथा नरक जाना पड़ता है ॥ १६ ॥

**अस्नात्वा वाप्यभक्त्या वां लोभाद्वापि कुलेश्वरि ।**
**यः सेवेत कुलद्रव्यं दारिद्र्यं समवाप्नुयात् ॥ १७ ॥**

**कुलद्रव्य के पान में नियम**—हे कुलेश्वरि ! स्नान किए बिना, या बिना भक्ति, या लोभवश जो कुलद्रव्य का सेवन करता है, वह दरिद्रता को प्राप्त करता है ॥ १७ ॥

**उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः ।**
**व्यग्रो रुष्टो विवादी च न सेवेत कुलामृतम् ॥ १८ ॥**

पगड़ीधारी, नग्न, खुले बाल वाला, अन्य जन से आवृत, व्याकुल, क्रुद्ध और झगड़ालू व्यक्ति कुलामृत का सेवन न करे ॥ १८ ॥

**योगामृतेन निष्ठीवान्मद्यभाण्डपरिभ्रमात् ।**
**ऊर्ध्व नालेन पानाच्च देवताशापमाप्नुयात् ॥ १९ ॥**

जो मद्यपात्र अनेक हाथों में घूमता है, जो मद्य उच्छिष्ट है और जिस मद्य को नली द्वारा पिया जाता है, उसका पान करने से देवता का शाप मिलता है ॥ १९ ॥

**एकासने निविष्टस्तु भुञ्जानस्त्वेकभाजने ।**
**एकपात्रे पिबेद्द्रव्यं ते यान्ति नरकं प्रिये ॥ २० ॥**

हे प्रिये ! एक आसन पर बैठने वाले, एक पात्र में भोजन करने वाले और एक पात्र में द्रव्यपान करने वाले नरक में जाते हैं ॥ २० ॥

**यः सेवेत कुलद्रव्यमेकग्रामे स्थिते गुरौ ।**
**तत्कुलज्ञे च तत्पुत्रे स्वजेष्ठे कुलदेशिके ।**
**विनानुज्ञां महेशानि सोऽक्षयं नरकं व्रजेत् ॥ २१ ॥**

यदि गुरुदेव, या उनका पुत्र, या उनके वंशज उसी ग्राम या नगर में निवास करते हैं, जहाँ कि साधक रहता है । हे महेशानि ! जो उनकी अनुमति के बिना कुलद्रव्य का सेवन करता है, वह अक्षय नरक में जाता है ॥ २१ ॥

**उच्छिष्टो न स्पृशेच्चक्रे कुलद्रव्याणि पार्वति ।**
**बहिःप्रक्षाल्य च करौ कुलद्रव्याणि दापयेत् ॥ २२ ॥**
**मद्यभाण्डं समुधृत्च न पात्रं पूरयेत् प्रिये ।**
**भोगपात्रं सुराकुण्डे निक्षिपेन्न कदाचन ॥ २३ ॥**
**चक्रमध्ये शुचिधिया करप्रक्षालनादिकम् ।**
**यः करोति हि मूढात्मा स भवेदापदाम्पदम् ॥ २४ ॥**

**चक्र में निषिद्ध कार्य**—हे पार्वति ! चक्र में जूठे हाथों से कुलद्रव्यों को न छुए । बाहर दोनों हाथ धोकर कुलद्रव्यों को प्रदान करे । हे प्रिये ! मद्यपात्र को उठाकर पात्र को न भरे । भोगपात्र को कभी सुराकुण्ड में न डाले। चक्र के मध्य में शुद्ध होने के विचार से जो हाथ आदि धोता है, वह मूर्ख आपत्ति में पड़ता है ॥ २२-२४ ॥

**निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम् ।**
**श्रीचक्रमध्ये यः कुर्यात् स भवेद् योगिनीपशुः ॥ २५ ॥**

श्री चक्र के मध्य में थूकना या जो मल, मूत्र एवं अधोवायु का विसर्जन करता है, वह योगिनियों का पशु बनता है ॥ २५ ॥

**चक्रमध्ये घटे भग्ने पात्रे च पतिते भुवि ।**
**दीपनाशे च शान्त्यर्थं श्रीचक्रं कारयेत् प्रिये ॥ २६ ॥**

चक्र के बीच में घट के टूटने, या पात्र के पृथ्वी पर गिरने, या दीपक के बुझने से जो दोष होता है, हे प्रिये ! उसकी शान्ति के लिए पुनः श्री चक्रपूजा करानी चाहिए ॥ २६ ॥

**मत्ता जपन्ति ध्यायन्ति स्तुवन्ति प्रणमन्ति च ।**
**बोधयन्ति च पृच्छन्ति नन्दन्ति ज्ञानिनः प्रिये ॥ २७ ॥**

हे प्रिये ! ज्ञानी लोग चक्र में जप करते हैं, ध्यान करते हैं, स्तवन करते हैं, प्रणाम करते हैं, उद्बोधन करते है, जिज्ञासा करते हैं और आनन्दित होते हैं ॥ २७ ॥

**मत्ता भ्रमन्ति गर्जन्ति हसन्ति विवदन्ति च ।**
**रुदन्ति स्त्रियमिच्छन्ति निन्दन्त्यज्ञानिनः प्रिये ॥ २८ ॥**

अज्ञानी लोग चक्कर खाते हैं, चिल्लाते हैं, हँसते हैं, झगड़ा करते हैं, रोते हैं, स्त्रियों की इच्छा करते हैं और हे प्रिये ! निन्दा करते हैं ॥ २८ ॥

**परिहासं प्रलापञ्च वितण्डां बहुभाषितम् ।**
**औदासीन्यं भयं क्रोधं चक्रमध्ये विवर्जयेत् ॥ २९ ॥**

चक्र के मध्य में परिहास, प्रलाप, बहुत बातचीत, उदासी, भय और क्रोध न करे ॥ २९ ॥

**पात्रहस्तो महादेवि न भ्रमेच्चक्रमध्यतः ।**
**पूर्णपात्रं करे कृत्वा न तिष्ठेत्तु चिरं प्रिये ॥ ३० ॥**
**नालपेत् पात्रहस्तः सन् न भिन्द्यात् पात्रमम्बिके ।**
**पादाभ्यां न स्पृशेत् पात्रं न बिन्दुं पातयेदधः ॥ ३१ ॥**

हे महादेवि ! पात्र हाथ में लेकर चक्र के मध्य में भ्रमण न करे । हे प्रिये ! पूर्णपात्र हाथ में देर तक ठहरा भी न रहे । हाथ में पात्र हो, तो बातचीत न करे। पात्र को तोड़े नहीं, पात्र को पैरों से न छुए और नीचे बिन्दु न गिराये ॥३०-३१॥

**नैकहस्तेन दातव्यं न मुद्रावर्जितं प्रिये ।**
**पात्रं न चालयेत स्थानान्न कुर्यात् पात्रसङ्करम् ॥ ३२ ॥**

हे प्रिये ! एक हाथ से और बिना मुद्रा के पात्र न दे । पात्र को अपने स्थान से न हटाए और उसे अन्य पात्रों में न मिलावे ॥ ३२ ॥

**सशब्दं न पिबेन्मद्यं तथैव न च पूरयेत् ।**
**नान्योन्यं ताडयेत्पात्रं तथा न पातयेदधः ॥ ३३ ॥**

शब्द करते हुये द्रव्य का पान न करे और न ही पात्र को भरते समय शब्द करे । एक दूसरे के पात्रों को टकराये नहीं और न पात्र को नीचे गिराये ॥ ३३ ॥

**साधारं नोद्धरेत् पात्रमनाधारे न निक्षिपेत् ।**
**रिक्तपात्रं न कुर्वीत न पात्रं भ्रामयेत् प्रिये ॥ ३४ ॥**

आधार के सहित पात्र को न उठाये और उसे आधार से अलग न रखे। हे प्रिये ! पात्र को खाली न करे और उसे घुमाये नहीं ॥ ३४ ॥

**न पात्रं लंघयेद्धीमान् पात्रं नोत्पातयेत् प्रिये ।**
**प्रक्षाल्य गोपयेत् पात्रमित्याज्ञा परमेश्वरि ॥ ३५ ॥**

हे प्रिये ! बुद्धिमान पात्र को लाँघे नहीं और उसे ऊपर न उठाये । हे परमेश्वरि ! पात्र को धोकर छिपा कर रख दे, यह आज्ञा है ॥ ३५ ॥

**यदा सन्दीपितोल्लासः कौलिकः पशुमीक्षते ।**
**पठेद्वा पशुशास्त्राणि सङ्गच्छेद्वा पशुस्त्रियम् ॥ ३६ ॥**
**कुर्यात् पशुप्रसङ्गं वा पशुकार्याणि वा चरेत् ।**
**धर्मार्थायुर्यशःपुण्यमर्थसौख्यादि नश्यति ॥ ३७ ॥**

**पशुसम्पर्क से हानि**—उल्लासयुक्त होकर कोई कौलिक यदि पशु का साथ करता है, या पशुशास्त्रों को पढ़ता है, या पशुस्त्रियों का सङ्ग करता है, या पशुप्रसङ्ग करता है, या पशुधर्म करता है, तो उसके धर्म, अर्थ, आयु, यश, पुण्य, ज्ञान एवं सुख आदि नष्ट हो जाते हैं ॥ ३६-३७ ॥

**श्रीचक्रस्थं कुलद्रव्यं यः पशुभ्यः प्रयच्छति ।**
**स्नेहाल्लोभाद्भयाद्वापि स भवेद् योगिनीपशुः ॥ ३८ ॥**

श्रीचक्रस्थित कुलद्रव्य को जो अपनी इच्छा से, या लोभ से या भय से पशुओं को देता है, वह योगिनियों के द्वारा मारा जाता है ॥ ३८ ॥

**रिपुणापि न कर्त्तव्यो वाग्वादश्चक्रमध्यतः ।**
**पितृमातृसमं पश्येत्तेनोक्तं परुषं सहेत् ॥ ३९ ॥**

**साधक के कर्तव्य**—चक्र के बीच में शत्रु के भी साथ वाद विवाद न करे । माता पिता के समान उसे देखे तथा उसके कठोर वचनों को भी सह ले ।। ३९ ।।

**यथास्त्रीपुत्रमित्रादि दृष्ट्वा चेतः प्रहृष्यति ।**
**तथा चेत् कौलिकान् दृष्ट्वा स भवेद् योगिनीप्रियः ।। ४० ।।**

अपने कुटुम्बी या प्यारे मित्र को देखकर जैसी प्रसन्नता होती है, वैसी ही प्रसन्नता कौलिकों को देखकर जिसे होती है, वह योगिनियों का प्रिय होता है ।। ४० ।।

**ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसन्ततिः ।**
**यस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ।**
**इति निश्चितबुद्धिर्यः स भवेदावयोः प्रियः ।। ४१ ।।**

'ब्रह्मा से स्तम्ब पर्यन्त सभी मेरे लिए गुरु सन्तुति के समान हैं, मैं सभी का शिष्य हूँ, पृथ्वीतल पर कौन मेरा पूज्य नहीं है?'—इस प्रकार जिसकी निश्चित बुद्धि है, वह हम दोनों का प्रिय होता है ।। ४१ ।।

**अहं गुरुरहं ज्येष्ठस्त्वहं वेद्मीति गर्वितः ।**
**अहमेव गतिर्येषां कौलिका न भवन्ति ते ।। ४२ ।।**

'मैं गुरु हूँ, मैं ज्येष्ठ हूँ, मैं ज्ञानी हूँ'—इस प्रकार गर्व करने वाले कौलिक नहीं होते ।। ४२ ।।

**श्रीगुरुं कुलशास्त्राणि पूजास्थानानि यानि च ।**
**भक्त्या श्रीपूर्वकं देवि प्रणम्य परिकीर्त्तयेत् ।। ४३ ।।**

श्री गुरुदेव, कुलशास्त्रों और पूजास्थानों को भक्तिपूर्वक हे देवि ! 'श्री' से उनके नामों को युक्त कर प्रणाम करे और तब उनकी महिमा का वर्णन करे ।। ४३ ।।

**गुरुं नाम्ना न भावेत जपकालादृते प्रिये ।**
**श्रीनाथ देव स्वामीति विवादे साधने वदेत् ।। ४४ ।।**

हे प्रिये ! जपकाल को छोड़कर गुरुदेव के नाम का उच्चारण न करे । 'श्रीनाथ, देव, स्वामी'—इन शब्दों से बातचीत में उनका उल्लेख करे ।। ४४।।

**श्रीगुरोः पादुकां मुद्रां मूलमन्त्रं स्वपादुकाम् ।**
**शिष्यादन्यस्य देवेशि न वदेद् यस्य कस्यचित् ।। ४५ ।।**

श्रीगुरुपादुका, मुद्रा, मूलमन्त्र और अपनी पादुका शिष्य को छोड़कर हे देवेशि ! अन्य किसी को न बताए ॥ ४५ ॥

**पारम्पर्यागमाम्नायं मन्त्राचारादिकं प्रिये ।**
**सर्वं गुरुमुखाल्लब्धं सफलं स्यान्न चान्यथा ॥ ४६ ॥**

हे प्रिये ! परम्परा, आगम, आम्नाय, मन्त्राचार आदि सभी गुरुमुख से प्राप्त होने पर ही सफल होते हैं, अन्यथा नहीं ॥ ४६ ॥

**श्रीशास्त्राश्रयमूलञ्च पुस्तकं न वदेत् प्रिये ।**
**नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ॥ ४७ ॥**

हे प्रिये ! आश्रयभूत शास्त्र की मूल पुस्तक को न बताये, नित्य भक्ति से उसकी पूजा करे और पशु के हाथ में उसे कभी न दे ॥ ४७ ॥

**स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति ।**
**पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ॥ ४८ ॥**

हे पार्वति ! अपनी पत्नी के समान कुलशास्त्रों का सेवन करे और पशुशास्त्रों से पराई स्त्री के समान दूर रहे ॥ ४८ ॥

**स्वचर्मस्थं यथा क्षीरमपेयं स्याद् द्विजोत्तमैः ।**
**तथा पशुमुखाद्धर्मो न श्रोतव्यो हि कौलिकैः ॥ ४९ ॥**

जिस प्रकार चमड़े में स्थित दूध उत्तम द्विजों के लिये अपेय है, उसी प्रकार कौलिकों को पशुमुख से धर्मोपदेश नहीं सुनना चाहिये ॥ ४९ ॥

**यः शृणोति कुलाचारं यथाशास्त्रञ्च यो वदेत् ।**
**तावुभौ गच्छतः साक्षाद् योगिनीवीरमेलनम् ॥ ५० ॥**

जो कुलाचार को सुनते हैं और जो शास्त्रानुसार कहते हैं, वे दोनों ही साक्षात् योगिनी-वीर के सम्मिलन को प्राप्त करते हैं ॥ ५० ॥

**अश्रद्दधाना ये चात्र कुलधर्मे कुलेश्वरि ।**
**नरकान्नो निवर्त्तन्ते यावदाहूत संप्लवम् ॥ ५१ ॥**

हे कुलेश्वरि ! जो इस कुलधर्म में श्रद्धा नहीं रखते, वे प्रलय पर्यन्त नरक से छुटकारा नहीं पाते ॥ ५१ ॥

**ऊढा धृता तथा क्रीता मूल्येन च समाहृता ।**
**सकृत् कामरता वापि पञ्चधा गुरुयोषितः ।**
**अलंघ्याः पूजनीयाः स्युर्गुरुवद्गुरुयोषितः ॥ ५२ ॥**

**पाँच प्रकार की गुरु-स्त्रियाँ**—१. विवाहिता, २. रखी हुई, ३. मूल्य से खरीदी, ४. प्रेमबद्ध एवं ५. कामरता—ये पांच प्रकार की गुरुस्त्रियाँ हैं । गुरु के समान ही ये अलंघ्या और पूज्या हैं ॥ ५२ ॥

**गुरुशक्तिं वीरभार्यां कुमारीं व्रतधारिणीम् ।**
**व्यङ्गाङ्गी विकृताङ्गीञ्च कुब्जामपि न कामयेत् ॥ ५३ ॥**

**वर्जित स्त्रियाँ**—गुरुशक्ति ( गुरुपत्नी ), वीरपत्नी ( वीर की पत्नी ), कुमारी, व्रतधारिणी, व्यङ्गाङ्गी ( विकलाङ्गी ), विकृताङ्गी ( विकृत अङ्गों वाली ) और कुब्जिका ( कुबड़ी ) स्त्री की भी कामना न करे ॥ ५३ ॥

**सुताञ्च भगिनीं पौत्रीं स्नुषां वापि प्रियामपि ।**
**न कामयेद् गुरोरग्रे कुर्यान्नान्योन्यसंग्रहम् ॥ ५४ ॥**

पुत्री, बहन, पौत्री, पुत्रवधू और अपनी प्रिया स्त्री को गुरु के सामने न करे और एक दूसरे का संग्रह भी न करे ॥ ५४ ॥

**कृष्णांशुकां कृष्णवर्णां कुमारीञ्च कृशोदरीम् ।**
**मनोहरां यौवनस्थामर्चयेद्देवताधिया ॥ ५५ ॥**
**एकदापि न सेवेत बलेन कुलयोगिनीम् ।**
**चक्रमध्ये स्वयं क्षुब्धां कामयेत् कुलसुन्दरि ॥ ५६ ॥**

**पूजनीया स्त्रियाँ**—कृष्णांशुका, कृष्णवर्णा, कुमारी, मनोहरा, कृशोदरी युवती की देवतारूप में पूजा करनी चाहिए । बलपूर्वक कभी कुलयोगिनी का एक बार भी सेवन न करे । हे कुलसुन्दरि ! चक्र में स्वयंक्षुब्धा की ही कामना करे ॥ ५५-५६ ॥

**आममांसं सुराकुम्भं मत्तेभं सिद्धिलिङ्गिनम् ।**
**सहकारमशोकञ्च क्रीडालोलाः कुमारिकाः ॥ ५७ ॥**
**एकवृक्षं श्मशानञ्च समूहं योषतामपि ।**
**नारीञ्च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ॥ ५८ ॥**

**दर्शन होने पर वन्दनीय**—कच्चा मांस, सुरा, कुम्भ, मत्त हाथी, सिद्धि चिह्न वाला आम और अशोक वृक्ष, क्रीडारत कुमारियाँ, ( एक वृक्ष ? ) श्मशान, स्त्रियों का समूह, रक्त वस्त्र नारी यदि दिखाई पड़ें, तो भक्तिपूर्वक उनकी वन्दना करे ॥ ५७-५८ ॥

**गुरुशक्तिसुतज्येष्ठकनिष्ठान् कुलदेशिकान् ।**
**कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥ ५९ ॥**

प्रेरकान् सूचकांश्चापि वाचकान् दर्शकांस्तथा ।
शिक्षकान् बोधकान् योगी योगिनीसिद्धिरूपकान् ॥ ६० ॥
कन्यां कुमारिकां नग्नामुन्मत्तां वापि योषितम् ।
न निन्देन्न जुगुप्सेत न हसेन्नावमानयेत् ॥ ६१ ॥
नाप्रियं नानृतं ब्रूयात् कस्यापि कुलयोगिनः ।
कुरूपा चेति कृष्णेति न वदेत् कुलयोषितम् ॥ ६२ ॥

**निषिद्ध कार्य**—गुरु की शक्ति, गुरुपुत्र, ज्येष्ठ या कनिष्ठ कौल साधक, कुलदर्शन के शास्त्र, कुलद्रव्य, कौलों के प्रेरक, सूचक, वाचक, दर्शक, शिक्षक, बोधक, योगी, योगिनी, सिद्ध पुरुष, कन्या, कुमारी, नग्न या पागल स्त्री—इनमें से किसी की न कभी निन्दा करे, न हँसी उड़ाए, न अपमान करे, न अप्रिय कहे और असत्य बात न कहे । कुल साधक कुलस्त्री को कभी 'काली' या 'कुरूपा' न कहे ॥ ५९-६२ ॥

परीक्षयेन्न भक्तानां वीराणाञ्च कृताकृतम् ।
न पश्येद्वनितां नग्नामुन्मत्तां प्रकटस्तनीम् ॥ ६३ ॥
दिवसे न रमेन्नारीं तद्योनिं नैव वीक्षयेत् ।

भक्त वीरों के किये और न किये की कभी जाँच पड़ताल न करे । नग्न, पागल, प्रकटस्तनी स्त्री को न देखे । दिन में स्त्रीसङ्ग न करे, उसकी योनि को कभी न देखे ॥ ६३-६४ ॥

या काचिदङ्गना लोके सा मातृ कुलसम्भवा ॥ ६४ ॥
कुप्यन्ति कुलयोगिन्यो वनितानां व्यतिक्रमात् ।
स्त्रियं शतापराधाञ्चेत् पुष्पेणापि न ताडयेत् ।
दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत् ॥ ६५ ॥

**सभी स्त्रियाँ माता के समान**—संसार में जो भी स्त्री है, वह माता के समान है । स्त्रियों पर व्यतिक्रम (अत्याचार) करने से कुलयोगिनियाँ रुष्ट होती हैं। सौ अपराध करने पर भी स्त्रियों को पुष्प तक से न मारे । स्त्रियों के दोषों का कभी वर्णन न करे, अपितु उनके गुणों को ही प्रकाशित करे ॥ ६४-६५॥

तिष्ठन्ति कुलयोगिन्यः कुलवृक्षेषु सर्वदा ।
तत्पत्रेषु न भोक्तव्यमर्चयेत्तु विशेषतः ॥ ६६ ॥

**कुलवृक्षों के सम्बन्ध में**—कुल योगिनियाँ सदा कुलवृक्षों में रहती हैं । अतः उनके पत्तों में, भोजन नहीं करना चाहिए, अपितु विशेष रूप से उनकी पूजा करनी चाहिए ॥ ६६ ॥

**न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ।**
**दृष्ट्वा भक्त्या नमस्कुर्याच्छेदयेन्न कदाचन ॥ ६७ ॥**

कुलवृक्ष के नीचे न तो सोये और न कोई उपद्रव करे । उसे देख या सुनकर भक्ति से नमस्कार करे । कभी उसे काटे नहीं ॥ ६७ ॥

**श्लेष्मातकं करञ्जाख्यं निम्बाश्वत्थकदम्बकाः ।**
**बिल्ववटोडुम्बराश्च तिन्तिडी नवमी स्मृता ॥ ६८ ॥**

१. श्लेष्मान्तक, २. करञ्ज, ३. निम्ब, ४. अश्वत्य, ५. कदम्ब, ६. बिल्व, ७. वट, ८. उडुम्बर और ९. तिन्तिडी—ये नौ कुलवृक्ष हैं ॥ ६८ ॥

**प्रायश्चित्तं भृगोः पातं संन्यासं व्रतधारणम् ।**
**तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत् ॥ ६९ ॥**

कौलिकों केलिये वर्जित पञ्चकार्य एवं पञ्चपातक—१. प्रायश्चित, २. भृगुपात ( पर्वत से गिर कर आत्महत्या ), ३. संन्यास, ४. व्रतधारण, ५. तीर्थयात्रा—इन पाँच को कौल न करे ॥ ६९ ॥

**वीरहत्या वृथापानं वीरपत्नीनिषेवणम् ।**
**वीरद्रव्यापहरणम् तत्संयोगश्च पञ्चमः ।**
**महापातकमित्युक्तं कौलिकानां कुलान्वये ॥ ७० ॥**

१. वीरहत्या, २. वृथा पान, ३. वीरपत्नी सेवन, ४. वीरद्रव्य का हरण और ५. वीरद्रव्य का संयोग कौलिकों के लिय ये पाँच पाप हैं ॥ ७० ॥

**शैवे तत्त्वपरिज्ञानं गारुडे विषभक्षणम् ।**
**ज्योतिषे ग्रहणं सारं कौलेऽनुग्रहनिग्रहौ ॥ ७१ ॥**

**कौल की विशेषता—निग्रह, एवं अनुग्रह—**शैव मत में तत्त्व का परिज्ञान, गारुडविद्या में विषभक्षण, ज्योतिष में ग्रहण के विषय में पहले से भविष्यवाणी और कौल में अनुग्रह, प्राणिमात्र पर दया एवं (इन्द्रिय) निग्रह सार स्वरूप हैं ॥ ७१ ॥

**देवतागुरुशास्त्राणां सिद्धाचारविडम्बकाः ।**
**विद्याचौरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ॥ ७२ ॥**

**पापजनक कार्य—**देवता, गुरु और शास्त्रों के सिद्धाचार की विडम्बना तथा विद्या की चोरी करने वाला, गुरुद्रोही ब्रह्मराक्षस होता है ॥ ७२ ॥

**गुरुवाक्यं हतं कृत्वा वीरान् निर्भर्त्स्य च प्रिये ।**

**गुरुं हुङ्कृत्य तुङ्कृत्य वीरं निर्जित्य वादतः ।**
**विकल्प्य कुलशास्त्राणि भवन्ति ब्रह्मराक्षसाः ॥ ७३ ॥**

गुरुवाक्य को तोड़कर, वीरों का अपमान कर, गुरु को डाट फटकार कर, वीर को तर्क के द्वारा हराकर और कुलशास्त्रों की उपेक्षा कर ब्रह्मराक्षस होता है ॥ ७३ ॥

**एकाक्षरप्रदातारं यो गुरुञ्चावमानयेत् ।**
**श्वानं योनिशतं गत्वा चण्डालत्वमवाप्नुयात् ॥ ७४ ॥**

हे प्रिये ! एकाक्षर के देने वाले गुरुदेव की जो अवज्ञा करता है, वह कुत्ते आदि सौ योनियों में घूमता फिरता हुआ चाण्डाल होता है ॥ ७४ ॥

**मातरं पितरं भार्यां भ्रातरं बान्धवं सुतम् ।**
**कुलनिन्दाकरं देवि हन्यादेवाविचारयन् ॥ ७५ ॥**

**कुलनिन्दक के वध में दोष नहीं**—माता, पिता, पत्नी, भाई, बन्धु, पुत्र और कुल की निन्दा करने वाले को बिना सोंचे विचारे ही मारे ॥ ७५ ॥

**गुर्वर्थं देवतार्थं वा कौलिकार्थं कुलेश्वरि ।**
**कुलागमार्थमथवा कुलधर्मार्थमेव वा ॥ ७६ ॥**
**देवि निन्दाकरं हत्वा बाधितः स्वयमेव वा ।**
**यस्त्यजेद्दुस्त्यजप्राणान् स परे लीयते शिवे ॥ ७७ ॥**

हे कुलेश्वरि ! गुरु, देवता, कौलिक, कुलागम अथवा कुलधर्म की रक्षा के लिए, हे देवि ! जो निन्दक को मारकर स्वयं अपने प्राणों को छोड़ता है, वह परम शिव में लीन होता है ॥ ७६-७७ ॥

**एकस्मिन्निधनं यत्र प्रापिते दुष्टचारिणि ।**
**बहूनां भवति क्षेमं पुण्यं तस्य वधे भवेत् ॥ ७८ ॥**

जहाँ एक दुराचारी के निधन से बहुतों का कल्याण होता हो, वहाँ उसका वध करने से पुण्य ही होता है ॥ ७८ ॥

**श्रीचक्रकृतवृत्तान्तं शुभं वा यदि वाऽशुभम् ।**
**कदाचिन्नैव वक्तव्यमित्याज्ञा परमेश्वरि ॥ ७९ ॥**

**श्रीचक्र का वृत्तान्तादि का गोपन**—श्री चक्र के शुभ अशुभ वृत्तान्त को कभी नहीं कहना चाहिए, हे परमेश्वरि यह आज्ञा है ॥ ७९ ॥

**कुलधर्मप्रसङ्गञ्च पशूनां पुरतः प्रिये ।**
**कदाचिन्नैव कुर्वीत शूद्राग्रे देवपाठवत् ॥ ८० ॥**

हे प्रिये ! कुलधर्म के प्रसङ्ग को पशुओं के सामने कभी न छेड़े, जिस प्रकार शूद्र के आगे वेद का पाठ करना मना है ॥ ८० ॥

**पीठक्षेत्रागमाम्नायं तद्विद्याचारकौलिकान् ।**
**कुलद्रव्यादिकं देवि न वदेत् पशुसन्निधौ ॥ ८१ ॥**

हे देवि ! पीठक्षेत्र आगम, आम्नाय, उसकी विद्याओं, आचार, कौलिकों और कुलद्रव्यादि का वर्णन पशु के समीप न करे ॥ ८१ ॥

**यथा रक्षति चौरेभ्यो धनधान्यादिकं प्रिये ।**
**कुलधर्मं तथा देवि पशुभ्यः परिरक्षयेत् ॥ ८२ ॥**

हे प्रिये! जिस प्रकार चोरों से धन धान्यादि की रक्षा की जाती है, उसी प्रकार पशुओं से कुलधर्म की रक्षा करे ॥ ८२ ॥

**अन्तः कौलो बहिः शैवो जनमध्ये तु वैष्णवः ।**
**कौलं सुगोपयेद्देवि नारिकेलफलाम्बुवत् ॥ ८३ ॥**

अन्दर से कौल, बाहर से शैव और लोगों के बीच वैष्णव—इस प्रकार हे देवि ! नारियल के जल की भांति कौल को गुप्त रखे ॥ ८३ ॥

**कुलधर्मादिकं सर्वं सर्वावस्थासु सर्वदा ।**
**गोपयेच्च प्रयत्नेन जननीजारगर्भवत् ॥ ८४ ॥**

कुलधर्म आदि सबको सभी दशाओं में सदा प्रयत्नपूर्वक व्यभिचारिणी के गर्भ के समान गुप्त रखे ॥ ८४ ॥

**वेदशास्त्रपुराणानि स्पष्टानि गणिका इव ।**
**इयन्तु शाम्भवी विद्या गुप्ता कुलवधूरिव ॥ ८५ ॥**

वेदशास्त्र पुराण तो गणिका के समान स्पष्ट हैं किन्तु यह शाम्भवी विद्या कुलवधू के समान गुप्त है ॥ ८५ ॥

**सुगुप्तकौलिकाचारमनुगृह्णन्ति देवताः ।**
**वाञ्छासिद्धिं प्रयच्छन्ति नाशयन्ति प्रकाशकान् ॥ ८६ ॥**

सुगुप्त कौलिकाचार योगी पर देवता अनुग्रह करते हैं, वाञ्छा सिद्धि प्रदान करते हैं किन्तु उस सिद्धि को प्रकट करने वाले योगी का नाश करते हैं ॥ ८६ ॥

**कुलेशि कुलशास्त्रज्ञाः कुलपूजापरायणाः ।**
**ये त्वां रहसि सेवन्ते ते तिष्ठन्ति तवान्तिके ॥ ८७ ॥**

हे कुलेशि ! कुलशास्त्र के जो ज्ञाता कुलपूजा में परायण होकर एकान्त में आपकी सेवा करते हैं, वे आपके समीप रहते हैं ॥ ८७ ॥

**गुरुं प्रकाशयेद्धीमान् मन्त्रं यत्नेन गोपयेत् ।**
**अप्रकाशप्रकाशाभ्यां नश्यतः सम्पदायुषी ॥ ८८ ॥**

बुद्धिमान गुरु को प्रकट करे, मन्त्र को यत्नपूर्वक गुप्त रखे । अप्रकाश्य को प्रकाशित करने से सम्पत्ति और आयु का नाश होता है ॥ ८८ ॥

**सर्वाचारपरिभ्रष्टः कुलाचारं समाश्रयेत् ।**
**कुलाचारपरिभ्रष्टौ रौरवं नरकं व्रजेत् ॥ ८९ ॥**

सभी आचारों से भ्रष्ट कुलाचार का आश्रय ले सकता है किन्तु कुलाचार से भ्रष्ट रौरव नरक में जाता है ॥ ८९ ॥

**शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।**
**कुलभ्रष्टस्य देवेशि न दृष्टा निष्कृतिः क्वचित् ॥ ९० ॥**

महापापियों के उद्धार का उपाय शास्त्रों में मिलता है किन्तु कुल से भ्रष्ट होने वाले के उद्धार का उपाय कहीं नहीं दिखाई देता ॥ ९० ॥

**कुलधर्म समाश्रित्य आचारं यो न पालयेत् ।**
**यथेच्छचारिणस्तस्य महापातकिनः प्रिये ॥ ९१ ॥**
**आपदो दुरितं रोगा दारिद्र्यं कलहो भयम् ।**
**योगिनीनां प्रकोपश्च स्खलितानि पदे पदे ॥ ९२ ॥**

कुलधर्म का आश्रय लेकर जो कुलाचार का पालन नहीं करता, उस स्वेच्छाचारी महापापी को आपत्ति, पाप, रोग, दरिद्रता, कलह, भय, योगिनियों का कोप, पग-पग पर गिरता रहता है ॥ ९१-९२ ॥

**भ्रंशमानः प्रनष्टश्च तेजोहीनोऽतिदुर्मतिः ।**
**निन्दितः सर्वविद्विष्टो विह्वलः सङ्गवर्जितः ।**
**देशाद्देशान्तरं याति कार्यहानिश्च सर्वदा ॥ ९३ ॥**

( जब वह गिरता है तब ) चोट खाकर वह नाश को प्राप्त होता है । अति दुर्मति एवं तेजो रहित वह सर्वनिन्दित, व्याकुल और सबसे त्यक्त होकर एक देश से दूसरे देश को जाता है ॥ ९३ ॥

**तत्रापि कुलमार्गस्थाः शाकिन्यः कुलपालिकाः ।**
**भक्षयन्ति पुरा तासां वरो दत्तो मयेव तु ॥ ९४ ॥**

उसके कार्य की सदा हानि होती है क्योंकि वहाँ भी कुलमार्गस्था शाकिनियाँ जो कुलपालिका हैं, उन्हें खा जाती हैं क्योंकि पहले मैंने ही उन्हें वर दे रखा है ॥ ९४ ॥

**तस्मादाचारवान् देवि योगिनीनां प्रियो भवेत् ।**
**नाशयन्ति चतुर्वेदाननाचाराः कुलेश्वरि ॥ ९५ ॥**

अतः हे देवि ! आचारवान् ही योगिनियों का प्रिय होता है । हे कुलेश्वरि ! चतुर्वेदों के आचारों का जो पालन नहीं करते, उनका वे नाश करती हैं ॥ ९५ ॥

**पादुकामात्रसारज्ञः सदाचारेषु यन्त्रितः ।**
**सदाचारेण देवत्वं योगिनीवीरमेलनम् ।**
**सम्प्राप्नुवन्ति तिर्यक्त्वं कौलिकास्तद्विपर्ययात् ॥ ९६ ॥**

**कौलिक का पतन करने वाले दुष्कर्म**—पादुका मात्र को ही सारतत्त्व समझने वाला सदाचारों से नियन्त्रित रहता है । सदाचार से ही देवत्व और योगिनी-वीर का सम्मिलन मिलता है । उसका उलटा करने से कौलिकों को तिर्यक योनि मिलती है ॥ ९६ ॥

**आज्ञासिद्धमिदं कौलमनाचाराद्विनश्यति ।**
**आचारपालनात् सत्यमाज्ञासिद्धिर्भविष्यति ॥ ९७ ॥**

यह आज्ञा द्वारा प्रमाणित है कि अनाचार से कौल नष्ट होता है और आचार पालन करने से आज्ञा सिद्धि मिलेगी, यह सत्य है ॥ ९७ ॥

**नाभिषेको न मन्त्रो वा न शास्त्रपठनादिकम् ।**
**कारणं कुलधर्मस्य सदाचारः कुलेश्वरि ॥ ९८ ॥**

**सदाचार की प्रधानता**—न अभिषेक, न मन्त्र और न शास्त्र का पढ़ना आदि कुलधर्म का कारण है किन्तु हे कुलेश्वरि ! सदाचार ही कुलधर्म का कारण है ॥ ९८ ॥

**परा श्रीपादुकातत्त्वत्रयाचारादिवासनाः ।**
**यो वेत्ति समयी स स्यात् कौलिकश्चापि शाम्भवि ॥ ९९ ॥**

परा श्री पादुका, तत्त्वत्रय और आचारादि की भावना को जो जानता है हे शाम्भवि ! वही 'समयाचार' से युक्त तथा कौलिक है ॥ ९९ ॥

**तावन्न कौलिको देवि यावन्न समयीकृतः ।**
**देहपाते विमोक्षः स्यात् समयाचारपालनात् ॥ १०० ॥**

जब तक 'समयाचार' का पालन नहीं करता, तब तक साधक कौलिक नहीं होता। समयाचार का पालन करने से देहावसान होने पर मोक्ष मिलता है।

**संस्कारेण विहीनत्वाद् गुरुवाक्यस्य लङ्घनात्।**
**आचारवर्जनाद्देवि कौलिकः पतितो भवेत् ॥ १०१ ॥**

**कौलिक के पतन के कारण**—संस्कार की हीनता, गुरुवाक्य की उपेक्षा और आचार की अवमानना करने से हे देवि ! कौलिक का पतन होता है ॥ १०१ ॥

**नित्यं नैमित्तिकं द्रव्यं मन्त्रयन्त्रादिलोपनम्।**
**अनर्हपशुदुःसङ्गमन्त्रसाङ्कर्यसम्भवम् ॥ १०२ ॥**
**गुप्तप्रकटसम्भूतं ज्ञानाज्ञानकृतं प्रिये।**
**एवमादिषु दोषेषु पापस्य गुरुलाघवम् ॥ १०३ ॥**

नित्य, नैमित्तिक, द्रव्य, मन्त्र, यन्त्रादि का न होना, अयोग्य पशुओं का कुसङ्ग, मन्त्र की सङ्करता, जान अनजान में गोपनीय का प्रकट होना आदि छोटे बड़े दोषों के पापों से हे प्रिये ! पतन होता है ॥ १०२-१०३ ॥

**देशं कालं वयो वित्तं सम्यग् ज्ञात्वा यथाविधि।**
**प्रायश्चित्तं गुरुर्दद्यात् सर्वपापविशुद्धये ॥ १०४ ॥**

**दोषी साधकों के लिये प्रायश्चित्त**—गुरुदेव इस प्रकार के दोषी शिष्य को सभी पाप की शुद्धि के लिए देश, काल, आयु, धन सामर्थ्य का सम्यक् रूप से विचार कर विधि के अनुसार प्रायश्चित्त बताएँ ॥ १०४ ॥

**शिष्योऽपि गुरुणाऽऽज्ञप्तं प्रायश्चित्तं समाचरेत्।**
**अथवा सर्वपापानां गुरुनामजपः स्मृतः ॥ १०५ ॥**

शिष्य भी गरु द्वारा निर्दिष्ट प्रायश्चित्त को करे। अथवा गुरुदेव के नाम का जप करने से सभी पापों का प्रायश्चित्त हो जाता है ॥ १०५ ॥

**जाम्बूनदस्य कलुषं परिशुद्धं यथाग्निना।**
**अनाचारस्य मालिन्यं प्रायश्चित्ताग्निना दहेत् ॥ १०६ ॥**

जिस प्रकार अग्नि द्वारा सोने के कालुष्य की शुद्धि होती है, उसी प्रकार अनाचार की मलीनता को प्रायश्चित्त की अग्नि से जला डालना चाहिए ॥ १०६ ॥

**बहुनात्र किमुक्तेन रहस्यं शृणु पार्वती।**
**वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ॥ १०७ ॥**

हे पार्वति ! यहाँ अधिक कहने से क्या लाभ ? सभी वर्णाश्रमों के लिए आचार ही सद्गतिदायक है ॥ १०७ ॥

**गुरुस्त्रिवारमाचारं कथयेच्च कुलेश्वरि ।**
**न गृह्णाति हि शिष्यश्चेत्तदा पापं गुरोर्न हि ॥ १०८ ॥**

**गुरु द्वारा आचार का तीन बार उपदेश**—हे कुलेश्वरि ! गुरुदेव को तीन बार आचार का वर्णन करना चाहिए । उस पर भी यदि शिष्य उसका पालन नहीं करता, तो गुरु को पाप नहीं होता ॥ १०८ ॥

**मन्त्रिदोषश्च राजानं जायादोषः पतिं यथा ।**
**तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरुं प्रिये ॥ १०९ ॥**

**शिष्य का पाप गुरु को**—जिस प्रकार मन्त्री का दोष राजा को और पत्नी का दोष पति को लगता है, हे प्रिये ! उसी प्रकार शिष्य का पाप गुरु को लगता है, इसमें सन्देह नहीं है ॥ १०९ ॥

**इति ते कथितं किञ्चित् समासेन कुलेश्वरि ।**
**कुलाचारविधिं देवि किम्भूयः श्रोतुमिच्छसि ॥ ११० ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे कुलाचार-कथनं नाम एकादशोल्लासः ॥ ११ ॥**



हे कुलेश्वरि ! इस प्रकार संक्षेप में मैंने कुलाचारी की विधि कही । अब हे देवि ! आप क्या सुनना चाहती हैं ॥ ११० ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में कुलाचारकथन नामक ग्यारहवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ ११ ॥**



# अथ द्वादशोल्लासः

**श्री देव्युवाच**

**कुलेश श्रोतुमिच्छामि पादुका भक्तिलक्षणम् ।**
**आचारमपि देवेश वद मे करुणानिधे ॥ १ ॥**

**श्रीपादुकाकथन**—श्री देवी ने कहा—हे कुलेश ! मैं पादुका की भक्ति के लक्षण और उससे सम्बन्धित आचार के विषय में सुनना चाहती हूँ, हे देवेश, हे करुणनिधे उसे बताइये ॥ १ ॥

**ईश्वर उवाच**

**शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।**
**तस्य श्रवणमात्रेण भक्तिराशु प्रजापते ॥ २ ॥**

ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने मुझसे पूछा है, उसे बताऊँगा, जिसके सुनने से भक्ति तुरन्त उत्पन्न होती है ॥ २ ॥

**वाग्भवा मूलवलये सूत्राद्याः कवलीकृताः ।**
**एवं कुलार्णवे ज्ञानं पादुकायां प्रतिष्ठितम् ॥ ३ ॥**

**श्री पादुका की महिमा**—कुलार्णव में पादुका का ज्ञान उसी प्रकार प्रतिष्ठित है, जिस प्रकार वाक् से उत्पन्न सूत्रादि मूलाधार में सन्निविष्ट हैं ॥३॥

**कोटिकोटिमहादानात् कोटिकोटिमहाव्रतात् ।**
**कोटिकोटिमहायज्ञात् परा श्रीपादुकास्मृतिः ॥ ४ ॥**

कोटि कोटि महादानों, कोटि कोटि महाव्रतों और कोटि कोटि महायज्ञों से भी श्रेष्ठ श्रीपादुका की स्मृति है ॥ ४ ॥

**कोटिकोटिमन्त्रजापात् कोटितीर्थावगाहनात् ।**
**कोटिदेवार्चनाद्देवि परा श्रीपादुकास्मृतिः ॥ ५ ॥**

कोटि कोटि मन्त्र जप से, कोटि तीर्थों के स्नान से और हे देवि ! कोटि देवपूजन से बढ़कर श्री पादुका की स्मृति है ॥ ५ ॥

महारोगे महोत्पाते महादोषे महाभये ।
महापदि महापापे स्मृता रक्षति पादुका ॥ ६ ॥

महारोग, महाउपद्रव, महादोष, महाभय, महाआपत्ति और महापाप में स्मरण करने से पादुका रक्षा करती है ॥ ६ ॥

दुराचारे दुरालापे दुःसङ्गे दुष्प्रतिग्रहे ।
दुराचारे च दुर्बुद्धौ स्मृता रक्षति पादुका ॥ ७ ॥

दुराचार, दुरालाप, दुःसङ्ग, दुष्प्रतिग्रह, दुराहार और दुर्बुद्धि में फँसने पर स्मरण करने से पादुका रक्षा करती है ॥ ७ ॥

तेनाधीतं स्मृतं ज्ञातम् इष्टं दत्तञ्च पूजितम् ।
जिह्वाग्रे वर्त्तते यस्य सदा श्रीपादुकास्मृतिः ॥ ८ ॥
सकृत् श्रीपादुकां देवि यो वा जपति भक्तितः ।
स सर्वपापरहितः प्राप्नोति परमां गतिम् ॥ ९ ॥

अतः पादुका का पाठ किया जाता है, उसे याद रखा जाता है, उसे, जाना जाता है, इष्टरूप से माना जाता है, गुरु द्वारा दी जाती है और उसकी पूजा की जाती है । जिसकी जिह्वा के अग्र भाग में श्रीपादुका की स्मृति सदा रहती है । अथवा हे देवि ! जो एक बार भी भक्ति से श्रीपादुका मन्त्र का जप करता है, वह सब पापों से छूटकर परम गति को पाता है ॥ ८-९ ॥

शुचिर्वाप्यशुचिर्वापि भक्त्या स्मरति पादुकाम् ।
अनायासेन धर्मार्थकाममोक्षान् लभते सः ॥ १० ॥

पवित्र हो या अपवित्र, जो भक्ति से पादुकास्मरण करता है, वह सहज ही धर्मार्थ, काम एवं मोक्ष को प्राप्त करता है ॥ १० ॥

श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते ।
तस्यां दिशि नमस्कुर्यात् भक्त्या प्रतिदिनं प्रिये ॥ ११ ॥

**गुरु और ईश्वर का सारूप्य**—हे प्रिये ! श्री नाथ के चरणकमल जिस दिशा में विराजते हों, उस दिशा को प्रतिदिन भक्ति से नमस्कार करे ॥ ११ ॥

न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः ।
न हि शाक्तात् परा दीक्षा न पुण्यं कुलपूजनात् ॥ १२ ॥

हे प्रिये ! पादुका से श्रेष्ठ मन्त्र नहीं है, श्रीगुरु से श्रेष्ठ देव नहीं है, शाक्त से श्रेष्ठ दीक्षा नहीं है और कुल पूजा से श्रेष्ठ पुण्य नहीं है ॥ १२ ॥

**ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ।**
**मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ १३ ॥**

ध्यान का मूल श्री गुरु का स्वरूप, पूजा का मूल गुरुचरण, मन्त्र का मूल गुरु वाक्य और मोक्ष का मूल गुरुकृपा है ॥ १३ ॥

**गुरुमूलाः क्रियाः सर्वा लोकेऽस्मिन् कुलनायिके ।**
**तस्मात् सेव्यो गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुतैः ॥ १४ ॥**

हे कुलनायिके ! इस संसार में सभी क्रियाओं के मूल श्रीगुरु हैं । अतः सिद्धि के लिये भक्तिपूर्वक नित्य गुरु की सेवा करे ॥ १४ ॥

**तावदार्त्तिर्भयं शोको लोभमोहभ्रमादयः ।**
**यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम् ॥ १५ ॥**

**गुरुभक्ति से हीन व्यक्ति की निन्दा**—जब तक भक्तवत्सल श्री गुरु की शरण नहीं मिलती, तभी तक व्याकुलता, भय, शोक, लोभ, मोह, भ्रम आदि का कष्ट रहता है ॥ १५ ॥

**तावद् भ्रमन्ति संसारे सर्वदुःखमलीमसाः ।**
**न भवेत् सद्गुरौ भक्तिर्यावद्देवेशि देहिनाम् ॥ १६ ॥**

हे देवेशि ! जब तक प्राणियों की भक्ति सद्गुरु में नहीं होती, तभी तक वे सब प्रकार के दुःखों से पीड़ित होकर संसार में भटकते फिरते हैं ॥ १६ ॥

**सर्वसिद्धिफलोपेतो मन्त्रः शुध्यति शोभनः ।**
**गुरुप्रसादमूलोऽयं परतत्त्वमहाक्रमः ॥ १७ ॥**

सर्व सिद्धियों के फल से युक्त मन्त्र तब तक सिद्ध नहीं होता, जब तक गुरु में भक्ति नहीं होती । परम तत्त्व से युक्त इस महान् क्रम का मूल गुरु की प्रसन्नता है ॥ १७ ॥

**यथा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम् ।**
**तथा भक्त्या धनैः प्राणैर्गुरुं यत्नेन तोषयेत् ॥ १८ ॥**

**गुरुभक्ति और उसका फल**—जिस प्रकार सन्तुष्ट और प्रसन्न होकर वरदायक मन्त्र को प्रदान करे, उसी प्रकार भक्तिपूर्वक धन और प्राणों से गुरु को यत्न करके प्रसन्न करे ॥ १८ ॥

**यदा दद्यात् स्वशिष्याय स्वात्मानं देशिकोत्तमः ।**
**तदा मुक्तो भवेच्छिष्यस्ततो नास्ति पुनर्भवः ॥ १९ ॥**

जब उत्तम देशिक (आचार्य) अपने शिष्य को अपनी आत्मा प्रदान करते हैं, तब वह शिष्य मुक्त हो जाता है और इसके बाद उसका पुनर्जन्म नहीं होता ॥ १९ ॥

**तावदाराधयेच्छिष्यः प्रसन्नोऽसौ यदा भवेत् ।**
**गुरौ प्रसन्ने शिष्यस्य सद्यः पापक्षयो भवेत् ॥ २० ॥**

शिष्य गुरु की तब तक आराधना करे, जब तक वे प्रसन्न न हो जायँ । क्योंकि गुरु के प्रसन्न होते ही शिष्य के सब पाप नष्ट हो जाते हैं ॥ २० ॥

**मनसापि न काङ्क्षन्ते यान् कामाननुजीविनः ।**
**सम्पादयन्ति तान् सर्वान् स्वामिनो भक्तवत्सलाः ॥ २१ ॥**

लोग जिन कामनाओं की मन से आकांक्षा भी नहीं करते, वे सब भक्त वत्सल स्वामी की कृपा से पूरी हो जाती हैं ॥ २१ ॥

**ब्रह्मविष्णुमहेशादिदेवतामुनियोगिनः ।**
**कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ २२ ॥**

गुरु के प्रसन्न होने पर ब्रह्मा, विष्णु, महेशादि देवता, मुनि और योगी प्रसन्न होकर अनुग्रह करते हैं, इसमें सन्देह नहीं ॥ २२ ॥

**भक्त्या तुष्टेन गुरुणा यः प्रदिष्टः कृपालुना ।**
**कर्ममुक्तो भवेच्छिष्योः भुक्तिमुक्त्योः स भाजनम् ॥ २३ ॥**

भक्ति से प्रसन्न कृपालु गुरु द्वारा जिसे उपदेश मिलता है, वह शिष्य कर्मों से मुक्त होकर भोग और मोक्ष का अधिकारी बन जाता है ॥ २३ ॥

**शिष्येणापि तथा कार्यं तथा सन्तोषितो गुरुः ।**
**प्रियं कुर्याच्च देवेशि मनोवाक्कायकर्मभिः ॥ २४ ॥**
**यदि तुष्टेन गुरुणात्मशिष्यो यत्र कुत्रचित् ।**
**मुक्तोऽसीति समादिष्टः सोऽपि मुक्तिं व्रजेत् प्रिये ॥ २५ ॥**

हे देवेशि ! शिष्य वैसा ही कार्य करे, जिससे गुरु सन्तुष्ट हों । वह मन, वचन, शरीर और कर्मों से उनका प्रिय करे । सन्तुष्ट गुरु द्वारा अपने शिष्य से कहीं पर यदि यह कहा जाता है कि 'आप मुक्त हो' तो हे प्रिये ! वह मुक्ति को प्राप्त करता है ॥ २४-२५ ॥

**अथवा निष्प्रपञ्चेन धाम्ना केनचिदीश्वरः ।**
**करोति गुरुरूपेण पशुपाशविमोचनम् ॥ २६ ॥**

न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि वा ।
तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं तथा ॥ २७ ॥

अथवा ईश्वर गुरु रूप से निष्प्रपञ्च तेज द्वारा पशु पाशों से छुड़ा देता है । चतुर्वेदी मुझे प्रिय नहीं है । यदि मेरा भक्त श्वपच ( चाण्डाल ) भी है, तो वह मुझे प्रिय है । उसे देना चाहिये, उससे लेना चाहिये क्योंकि वह मेरे समान ही पूज्य है ॥ २६-२७ ॥

विप्रः षड्गुणयुक्तश्चेदभक्तो न प्रशस्यते ।
म्लेच्छोऽपि गुणहीनोऽपि भक्तिमान् शिष्य उच्यते ॥ २८ ॥

विप्र चाहे छः गुणों से युक्त हो किन्तु अभक्त होने से प्रशस्त नहीं है । गुणहीन म्लेच्छ भी भक्तिमान् होने से शिष्य कहा जाता है ॥ २८ ॥

गुरुभक्तिविहीनस्य तपो विद्या कुलं व्रतम् ।
सर्वं नश्यति तत्रैव भूषणं लोकरञ्जनम् ॥ २९ ॥

गुरुभक्ति से विहीन व्यक्ति का तप, ज्ञान, कुल और व्रत सभी लोक दृष्टि में वहीं नष्ट हो जाते हैं । ये सजावट ही रहते हैं ( और उसे स्वर्ग नहीं मिलता ) ॥ २९ ॥

गुरुभक्त्यग्निना सम्यग्दग्धदुर्मतिकल्मषः ।
श्वपचोऽपि परैः पूज्यो विद्वानपि न नास्तिकः ॥ ३० ॥

गुरुभक्तिरूपी अग्नि से जिस चाण्डाल की दुर्बुद्धि आदि पाप जल चुके हैं, वह श्रेष्ठों द्वारा पूजनीय है, किन्तु नास्तिक विद्वान् होकर भी पूज्य नहीं है ।

धर्मार्थकामैः किन्तस्य मोक्ष एव करे स्थितः ।
सर्वार्थैः श्रीगुरौ देवि यस्य भक्तिः सदा स्थिरा ॥ ३१ ॥

श्रीगुरु में सब भावों में जिसकी भक्ति सदा स्थिर रहती है, हे देवि ! उसके हाथ में धर्म, अर्थ, काम क्या मोक्ष तक विद्यमान रहता है ॥ ३१ ॥

स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम ।
इति भक्त्या स्मरेद् यस्तु तस्य सिद्धिरदूरतः ॥ ३२ ॥

'वे शिव ही गुरुरूप से मुझे भुक्ति, मुक्ति प्रदान करने वाले हैं'- इस प्रकार भक्ति से जो स्मरण करता है, उसे उत्तम सिद्धि शीघ्र मिलती है ॥ ३२॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्य ते कथिता ह्यर्थाः प्रकाशन्ते कुलेश्वरि ॥ ३३ ॥

हे कुलेश्वरि ! जिसे गुरु में वैसी ही परम भक्ति होती है, जैसी देवता में, उसे उन अर्थों का ज्ञान हो जाता है, जो मैंने आपको बताये हैं ॥ ३३ ॥

**नारायणे महादेवे मातापित्रोश्च राजनि ।**
**भक्तिर्यथा महादेवि तथा कार्या निजे गुरौ ॥ ३४ ॥**

नारायण, महादेव, माता पिता और राजा के प्रति जैसी भक्ति होती है, हे महादेवि ! वैसी ही भक्ति अपने गुरु के प्रति करे ॥ ३४ ॥

**लक्ष्मीनारायणौ वाणीधातारौ गिरिजाशिवौ ।**
**श्रीगुरुं गुरुपत्नीञ्च पितराविति चिन्तयेत् ॥ ३५ ॥**

श्रीगुरु और गुरुपत्नी को लक्ष्मी, नारायण, सरस्वती, ब्रह्मा, गिरिजा, शिव तथा माता, पिता के रूप में ध्यान करे ॥ ३५ ॥

**गुरुभक्त्या यथा देवि प्राप्यन्ते सर्वसिद्धयः ।**
**यज्ञः दानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ॥ ३६ ॥**

हे देवि ! गुरु की भक्ति से जिस प्रकार सब सिद्धियाँ मिलती हैं हे प्रिये ! उस प्रकार की सिद्धि यज्ञ, दानों, तपों, तीर्थों तथा व्रतों आदि से नहीं प्राप्त की जा सकती ॥ ३६ ॥

**श्रीगुरौ निश्चला भक्तिर्वर्द्धते हि यथा यथा ।**
**तथा तथास्य विज्ञानं वर्द्धते कुलनायिके ॥ ३७ ॥**

हे कुलनायिके ! श्रीगुरु में निश्चला भक्ति जैसे जैसे बढ़ती है, वैसे ही वैसे उसे विशेष ज्ञान की प्राप्ति होती है ॥ ३७ ॥

**कि तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः ।**
**निर्व्याजसेवा देवेशि भक्तिरेषा हि सद्गुरोः ॥ ३८ ॥**

तीर्थादि में महान् श्रम से क्या लाभ और व्रतों से शरीर सुखाने से क्या लाभ ? हे देवेशि ! सद्गुरु की यह भक्ति तो निर्व्याज सेवा है ॥ ३८ ॥

**कायाक्लेशेन महता तपसा वापि यत् फलम् ।**
**तत् फलं लभते देवि सुखेन गुरुसेवया ॥ ३९ ॥**

शरीर को कष्ट देकर, महान् तप से जो फल मिलता है, हे देवि ! वह गुरु सेवा द्वारा सरलता से मिल जाता है ॥ ३९ ॥

**भोगमोक्षार्थिनां ब्रह्मविष्णवीशपदकाङ्क्षिणाम् ।**
**भक्तिरेव गुरौ देवि नान्यः पन्था इति श्रुतिः ॥ ४० ॥**

भोग, मोक्ष और ब्रह्मा, विष्णु एवं महेश के पद की आकांक्षा करनेवालों के लिये गुरुभक्ति ही एक मार्ग है, अन्य नहीं, ऐसा श्रुति कहती है ॥ ४० ॥

**विमर्श**—'नान्यः पन्था विद्यतेऽयनाय'—कठ. उप. ॥ ४० ॥

**अशुभानि च कर्माणि महापातकजानि च ।**
**भक्तिः क्षणेन दहति तूलराशिमिवानलः ॥ ४१ ॥**

महापापों से उत्पन्न अशुभ कर्मों को भक्ति वैसे ही क्षण भर में जला डालती है, जैसे अग्नि रुई के ढेर को क्षण भर में भस्म कर देती है ॥ ४१ ॥

**विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने ।**
**येन मृद्दारुदृषदः फलन्त्यविफलं फलम् ॥ ४२ ॥**

सब सिद्धियों के देने वाले गुरु पर किए गए उस विश्वास को नमस्कार है, जिससे कीचड़, लकड़ी और पत्थर भी तत्काल ही पूर्ण फल को प्रदान करते हैं ॥ ४२ ॥

**न योगो न तपो नार्चाक्रमः कोऽपि प्रलीयते ।**
**अमाये कुलमार्गेऽस्मिन् भक्तिरेव विशिष्यते ॥ ४३ ॥**

**योग, तप अथवा पूजा क्रम**—किसी से भी माया दूर नहीं होती । मायारहित इस कुलमार्ग में भक्ति की ही विशेषता है ॥ ४३ ॥

**साक्षाद् गुरुमये देवि सर्वस्मिन् भुवनान्तरे ।**
**किन्नु भक्तिमतां क्षेत्रे मन्त्रः केषां न सिध्यति ॥ ४४ ॥**

हे देवि ! गुरु द्वारा व्याप्त समस्त भुवन में सभी भक्तों को कौन सा मन्त्र सिद्ध नहीं होता है ॥ ४४ ॥

**गुरौ मनुष्यबुद्धिञ्च मन्त्रे चाक्षरबुद्धिकम् ।**
**प्रतिमासु शिलाबुद्धि कुर्वाणो नरकं व्रजेत् ॥ ४५ ॥**

**गुरु को दिव्य गुणों से युक्त समझे**—गुरु को मनुष्य, मन्त्र को अक्षर और प्रतिमा को पत्थर समझने वाला नरक में जाता है ॥ ४५ ॥

**गुरुं न मर्त्यं बुध्येत यदि बुध्येत तस्य हि ।**
**न कदाचिद्भवेत् सिद्धिर्मन्त्रैर्वा देवतार्चनैः ॥ ४६ ॥**

गुरु को मरणशील न माने क्योंकि वैसा मानने से मन्त्रों या देवपूजाओं से कभी सिद्धि नहीं मिलती ॥ ४६ ॥

**श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति च ।**
**तेषां हि सुकृतं सर्वं पातकं भवति प्रिये ॥ ४७ ॥**

हे प्रिये ! श्री गुरु को साधारण मनुष्यों के साथ जो स्मरण करते हैं या उनकी चर्चा करते हैं, उनके सभी पुण्य पाप बन जाते हैं ॥ ४७ ॥

**जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।**
**गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ४८ ॥**

जन्म देने के कारण माता पिता की पूजा प्रयत्नपूर्वक करनी चाहिये । धर्म, अधर्म का ज्ञान कराने वाले गुरु विशेष रूप से पूजनीय हैं ॥ ४८ ॥

**गुरुः पिता गुरुर्माता गुरुर्देवो महेश्वरः ।**
**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ४९ ॥**

गुरु पिता हैं, गुरु माता हैं और स्वयं देव महेश्वर भी गुरु ही हैं । शिव भगवान् के रुष्ट होने पर गुरु रक्षा करते हैं किन्तु स्वयं गुरु के रुष्ट होने पर कोई नहीं बचा सकता ॥ ४९ ॥

**गुरोर्हितं हि कर्त्तव्यं मनोवाक्कायकर्मभिः ।**
**अहिताचरणाद्देवि विष्ठायां जायते क्रिमिः ॥ ५० ॥**

गुरु को जो प्रिय हो, वही मन, वचन, शरीर एवं कर्म द्वारा करे । हे देवि ! उनका अप्रिय करने से विष्ठा में कीड़े का जन्म मिलता है ॥ ५० ॥

**शरीरवित्तप्राणैश्च श्रीगुरुं वञ्चयन्ति ये ।**
**क्रिमिकीटपतङ्गत्वं प्राप्नुवन्ति न संशयः ॥ ५१ ॥**

जो शरीर, धन और प्राणों से श्री गुरु को धोखा देते हैं, वे निस्सन्देह कीड़े और पतङ्गों का जन्म पाते हैं ॥ ५१ ॥

**मन्त्र त्यागाद्भवेन्मृत्युर्गुरुत्यागाद्दरिद्रता ।**
**गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ ५२ ॥**

**गुरु और मन्त्र के छोड़ने में दोष**—मन्त्र का त्याग करने से मृत्यु, गुरु का त्याग करने से दरिद्रता और गुरु एवं मन्त्र का त्याग करने से रौरव नरक की प्राप्ति होती है ॥ ५२ ॥

**गुर्वर्थं धारयेद्देहं तदर्थं धनमर्जयेत् ।**
**निजप्राणान् परित्यज्य गुरुकार्यं समाचरेत् ॥ ५३ ॥**

**गुरु के प्रति क्या करे, क्या न करे**—गुरु के लिए शरीर रखे, उन्हीं

के लिए धन कमाए एवं अपने प्राणों को छोड़कर भी गुरु का कार्य सम्पन्न करे।

**गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत् ।**
**तेन सन्ताडितो वापि प्रसादमिति संस्मरेत् ॥ ५४ ॥**

गुरु के कठोर वचन को आशीर्वाद समझे । उनकी ताड़ना को भी उनका प्रसाद माने ॥ ५४ ॥

**भोग्य भोज्यानि वस्तूनि गुरुवे च समर्पयेत् ।**
**तच्छेषमिति सञ्चिन्त्य चानुभूयात् कुलेश्वरि ॥ ५५ ॥**

हे कुलेश्वरि ! भोग्य-भोज्य वस्तुएँ गुरु को अर्पित करे और उनसे बचा हुआ मानकर उन्हें प्रसाद रूप में ग्रहण करे ॥ ५५ ॥

**गुर्वग्रे न तपः कुर्यान्नोपवासव्रतादिकम् ।**
**तीर्थयात्रां न कुर्याच्च न स्नायादात्मशुद्धये ॥ ५६ ॥**

गुरु के सामने न तप करे, न उपवास करे, न व्रत करे, न तीर्थ अथवा यात्रा आदि भी न करे, और न अपनी शुद्धि के लिए स्नान ही करे ॥ ५६ ॥

**न वियोगं गुरोः कुर्यात् युष्मदो नैव भाषयेत् ।**
**ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम् ।**
**न कुर्याद् गुरुभिः सार्द्धं शिष्यो भूत्वा कथञ्चन ॥ ५७ ॥**

गुरु की अवज्ञा न करे, आप कहकर न बोले; शिष्य होकर ऋण देना लेना या वस्तुओं को खरीदना बेचना गुरु के साथ कभी न करे ॥ ५७ ॥

**न कुर्यान्नास्तिकैर्वादं सम्भाषणमपीश्वरि ।**
**विलोक्य दूरतो गच्छेन्नासीत सह तैः क्वचित् ॥ ५८ ॥**

हे ईश्वरि ! नास्तिकों से दूर रहे । नास्तिकों के साथ वाद-विवाद क्या, बात भी न करे । उन्हें देख कर दूर चला जाय और कभी उनके साथ न रहे ॥ ५८ ॥

**गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ।**
**स याति नरकं घोरं सा पूजा निष्फला भवेत् ॥ ५९ ॥**

हे अम्बिके ! गुरु के निकट होने पर जो अन्य की पूजा करता है, उसकी वह पूजा निष्फल होती है और वह घोर नरक में पड़ता है ॥ ५९ ॥

**शिरसा न वहेद्भारं गुरुपादाब्जधारिणा ।**
**तदाज्ञया तु कर्त्तव्यमाज्ञारूपो गुरुः स्मृतः ॥ ६० ॥**

गुरु के चरणकमलों को धारण करने वाले शिर पर कभी बोझ न ले जाय । उनकी आज्ञा से ही कार्य करे क्योंकि निःसन्देह गुरु ही आज्ञास्वरूप हैं ॥ ६० ॥

**मन्त्रागमाद्यमन्यत्र श्रुतं यस्मै निवेदयेत् ।**
**गुर्वाज्ञया तु गृहणीयात्तन्निषिद्धं विवर्जयेत् ॥ ६१ ॥**

अन्य स्थान पर सुने हुए मन्त्र, आगम आदि को गुरु को बताए और उनकी आज्ञा से ग्रहण करे । उनके द्वारा मना किए गए मन्त्रादि से दूर रहे ॥ ६१ ॥

**स्वशास्त्रोक्तं रहस्यार्थं न वदेद् यस्य कस्यचित् ।**
**यदि ब्रूयात् स समयाच्च्युत एव न संशयः ॥ ६२ ॥**

अपने शास्त्र में कहे गये रहस्यार्थ को जिस किसी को न बताए, जो बताता है, वह 'समय' ( आचार ) से च्युत होता है, इसमें सन्देह नहीं ॥६२॥

**अद्वैतं भावयेन्नित्यं न द्वैतं गुरुणा सह ।**
**आत्मवत् सर्वभूतेभ्यो हितं कुर्यात् कुलेश्वरि ॥ ६३ ॥**

हे कुलेश्वरि ! नित्य अद्वैत भाव रखे, गुरु से कभी द्वैतभाव न रखे । अपने समान ही सभी प्राणियों का हित करे ॥ ६३ ॥

**आत्मार्थमानसद्भावैः शुश्रूषा स्याच्चतुर्विधा ।**
**शुश्रूषया धिया देवि शिष्यः सन्तोषयेद् गुरुम् ॥ ६४ ॥**

सेवा ( शुश्रूषा ) चार प्रकार से होती है—१. आत्मा से, २. धन से, ३. सम्मान से और ४. सद्भाव से । हे देवि ! सेवाबुद्धि से गुरु को सन्तुष्ट करे ॥ ६४ ॥

**पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यसंशयः ।**
**शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम् ॥ ६५ ॥**

गुरु, देवता और महात्माओं की सेवा में लगा हुआ शिष्य निश्चय ही पग-पग पर अश्वमेध का फल पाता है ॥ ६५ ॥

**केवलं गुरुशुश्रूषा त्वत्कृपाकारिणी प्रिये ।**
**सद्भक्तिसहिता चेत् सा सर्वकामफलप्रदा ॥ ६६ ॥**

हे प्रिये ! केवल गुरुसेवा से ही आपकी कृपा मिल जाती है । सद्भक्ति के साथ यदि सेवा करे, तो सभी कामनाओं की पूर्ति होती है ॥ ६६ ॥

क्षीयन्ते सर्वपापानि वर्द्धन्ते पुण्यराशयः ।
सिध्यन्ति सर्वकार्याणि गुरुशुश्रूषया प्रिये ॥ ६७ ॥

गुरु की सेवा से सभी पाप नष्ट होते हैं, पुण्यराशि बढ़ती है और हे प्रिये ! गुरु शुश्रुषा से सभी कार्य सिद्ध होते हैं ॥ ६७ ॥

यद् यदात्महितं वस्तु तत्तद्धितमुपाचरेत् ।
गुरुदेवार्चको यस्तु तस्य पुण्यं न गण्यते ॥ ६८ ॥

जो जो वस्तु अपने को प्रिय हो, वह गुरु को अर्पित करे । जो गुरुदेव की अर्चना करता है, उसके पुण्य की गणना नहीं हो सकती ॥ ६८ ॥

भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् कृतम् ।
अल्पे महति वा तुल्यं पुण्यमाढ्यदरिद्रयोः ॥ ६९ ॥

भक्ति से यथाशक्ति गुरु के लिये जो किया जाता है, वह थोड़ा या बहुत निर्धन या धनी का पुण्य एक समान होता है ॥ ६९ ॥

सर्वस्वमपि यो दद्याद् गुरौ भक्तिविवर्जितः ।
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम् ॥ ७० ॥

गुरु को सर्वस्व भी जो बिना भक्ति के देता है, वह शिष्य उसका फल नहीं पाता क्योंकि भक्ति ही मूल है ॥ ७० ॥

यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेत्तु तत् ।
अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया ॥ ७१ ॥

जिस द्रव्य में गुरु की इच्छा हो, उसे स्वयं न ग्रहण करे । यदि बहुत इच्छा हो, तो उनकी अनुमति से उसे ग्रहण करे ॥ ७१ ॥

यस्तिलार्द्धं तदर्द्धं वा गुरुस्वमुपजीवति ।
लोभान्मोहात् स पच्येत नरके च त्रिसप्तके ॥ ७२ ॥

जो लोभ या मोह से गुरु के धन का तिलार्ध या उसके आधे बराबर भी अंश का उपयोग करता है । वह २१ वर्ष पर्यन्त नरक में रहता है ॥ ७२ ॥

अत्यल्पं हि गुरोर्द्रव्यमदत्तं स्वीकरोति यः ।
स तिर्यग् योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये ॥ ७३ ॥

हे प्रिये ! बिना दिये हुये गुरु के अत्यल्प द्रव्य को भी जो स्वीकार करता है, वह तिर्यग् योनि को पाता है और उसे क्रव्याद खाते हैं ॥ ७३ ॥

गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ।

**पतितस्य क्षुल्लकस्य प्रायश्चित्तं न विद्यते ॥ ७४ ॥**

गुरुद्रव्य की इच्छा करने वाले, गुरु स्त्री गमन में उत्सुक होने वाले पतित तथा नीच के लिये कोई प्रायश्चित्त नहीं है ॥ ७४ ॥

**आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियवर्त्तनम् ।**
**गुरुद्रोहमिदं प्राहुर्यः करोति स पातकी ॥ ७५ ॥**

आज्ञा न मानना, धन चुराना और गुरु का अप्रिय करना—इन्हें 'गुरुद्रोह' कहा गया है । जो ऐसा करता है, वह पापी है ॥ ७५ ॥

**स्वद्रव्यविनियोगश्च नानिवेद्य गुरौ चरेत् ।**
**अनिवेद्य तु यः कुर्यात् स भवेद् ब्रह्मघातकः ॥ ७६ ॥**

गुरु को निवेदन किये बिना द्रव्य का उपभोग न करे । बिना निवेदन किए जो उपभोग करता है, वह ब्रह्मघाती होता है ॥ ७६ ॥

**गुरोः स्थानं सम्प्रदायं तद्धर्मं यो विनाशयेत् ।**
**गुरुभिः स बहिष्कार्यो दण्ड्यो वध्यः स घातकैः ॥ ७७ ॥**

गुरु के स्थान, सम्प्रदाय और धर्म को जो नष्ट करता है, वह गुरुओं द्वारा त्याज्य, दण्डनीय होकर घातकों द्वारा वध्य होता है ॥ ७७ ॥

**गुरुकोपाद्विनाशः स्याद् गुरुद्रोहात्तु पातकम् ।**
**विमृत्युगुरुनिन्दायां गुर्वनिष्टान्महापदः ॥ ७८ ॥**

गुरु क्रोध से विनाश, गुरु द्रोह से पाप, गुरु निन्दा से अपमृत्यु और गुरु का अनिष्ट करने से मंहान् विपत्ति होती है ॥ ७८ ॥

**जीवेदग्निप्रविष्टो वा नरः पीतविषोऽपि वा ।**
**मृत्युहस्तगतो वापि नापराधकरो गुरोः ॥ ७९ ॥**

जीवित अग्नि में प्रवेश करे या विष पी ले या मृत्यु के हाथ में पड़ जाय किन्तु गुरु का अपराध न करे ॥ ७९ ॥

**यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणेऽम्बिके ।**
**सद्यस्तस्माद्विनिष्क्रामेत् पुनर्न श्रवणं यथा ।**
**गुरोर्नाम स्मरेत् पश्चात् श्रवणे सा प्रतिक्रिया ॥ ८० ॥**

जहाँ श्री गुरु की निन्दा हो, हे अम्बिके ! वहाँ से दोनों कान बन्द कर तुरन्त चला आये, जिससे पुनः वह शब्द न सुनाई पड़े । बाद में प्रायश्चित्त रूप से गुरुनाम का स्मरण करे ॥ ८० ॥

**गुरुमित्रसुहृद्दासीदासाद्यान् नावमानयेत् ।**
**न निन्देदस्य समयान् वेदशास्त्रागमादिकान् ॥ ८१ ॥**

गुरु के मित्र, सुहृद्, दासी, दास की अवज्ञा न करे और न उनके समय, वेद, शास्त्रागम आदि की निन्दा करे ॥ ८१ ॥

**गुरोः श्रीपादुकाभूषा गुरुनामस्मृतिर्जपः ।**
**गुर्वाज्ञाकरणं कृत्यं शुश्रूषा भजनं गुरोः ॥ ८२ ॥**

गुरु की श्रीपादुका पूजा, गुरु नाम स्मरण एवं जप, गुरु की आज्ञा पालन कर्तव्य है, और गुरुसेवा ही भजन है ॥ ८२ ॥

**विविक्षुर्देशिकावासं शान्तचित्तोऽतिभक्तिमान् ।**
**वाहनं पादुकां छत्रं चामरं व्यजनादिकम् ।**
**ताम्बूलं कज्जलं वेशमुत्सृज्य प्रविशेच्छनैः ॥ ८३ ॥**

जिज्ञासु देशिक (गुरु) के निवास स्थान में शान्त चित्त, अतिभक्तिपूर्ण होकर वाहन, पादुका, छत्र, चामर, व्यञ्जन और ताम्बूल, काजलादि आडम्बर छोड़कर धीरे से प्रवेश करे ॥ ८३ ॥

**पादुकामासनं वस्त्रं वाहनं छत्रचामरे ।**
**दृष्ट्वा गुरोर्नमस्कुर्यान्नात्मभोगाय कामयेत् ॥ ८४ ॥**

गुरु की पादुका, आसन, वस्त्र, वाहन, छत्र और चामर को देखकर उन्हें नमस्कार करे और अपने उपयोग में उन्हें लाने की इच्छा न करे ॥ ८४॥

**पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम् ।**
**मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवनम् ॥ ८५ ॥**
**वीरासनं सुदुर्वाक्यं शासनं हास्यरोदनम् ।**
**केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा ॥ ८६ ॥**
**पादप्रसारणं वादं कलहं दूषणं प्रिये ।**
**अङ्गभङ्गाङ्गवाद्यादिकरास्फालनधूननम् ॥ ८७ ॥**
**द्यूतकौतुकमल्लादियुद्धनृत्यादि चाम्बिके ।**
**गुरुयोगिमहासिद्धिपीठक्षेत्राश्रमेषु च ।**
**ना चरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥ ८८ ॥**

हे प्रिये ! गुरु, योगी एवं महासिद्ध के पीठ, क्षेत्र, आश्रमों में पैर धोना, स्नान करना, तेल लगाना, दातून करना, मल, मूत्र त्याग करना, थूकना, बाल कटाना, सोना, स्त्रीसङ्ग करना, वीरासन से बैठना, कठोर बात करना, आज्ञा

चलाना, हँसना, रोना, बाल खोलना, नंगे होना, पैर फैलाना, झगड़ा करना, अङ्ग भङ्ग करना, चिढ़ाना, मटकाना, ताली बजाना, ताल ठोकना, सिर पीटना, जुआ खेलना, कुश्ती लड़ना, नाचना बजाना आदि नहीं करना चाहिए । हे अम्बिके ! मोहवश यदि कोई करता है, तो उसे देवता का शाप मिलता है ॥ ८५-८८ ॥

**उपचारेण सन्तिष्ठेद् गुर्वग्रे नेच्छया विशेत् ।**
**मुखावलोकी सेवेत तदुक्तञ्च समाचरेत् ॥ ८९ ॥**

गुरु के सम्मुख आचारानुसार बैठे, मनमाने ढँग से नहीं । उनके मुख का दर्शन करते हुए उनकी सेवा करे और उनके कथन का पालन करे ॥८९॥

**गुरूक्तानुक्त कार्येषु नोपेक्षां कारयेत् प्रिये ।**
**शिरसा यद्गुरुर्ब्रूयात्तत् कार्यमविशङ्कया ॥ ९० ॥**

हे प्रिये ! गुरु के कहे और न कहे कार्यों की उपेक्षा न करे । हृदय से उनका सम्मान करे, गुरु जो कहें, उसे निःशङ्क होकर (बिना तर्क के) करे ॥ ९० ॥

**निग्रहेऽनुग्रहे वापि गुरुः सर्वस्य कारणम् ।**
**निर्गतं यद्गुरोर्वक्त्रात् सर्वं शास्त्रं तदुच्यते ॥ ९१ ॥**

निग्रह और अनुग्रह-सबके कारण गुरु हैं । गुरुमुख से जो निकले, वह सब शास्त्र कहा गया है ॥ ९१ ॥

**गुरुकार्ये स्वयं शक्तो नापरं प्रेषयेत् प्रिये ।**
**बहुभृत्यपरैर्भृत्यैः सहितोऽप्यतिभक्तिमान् ॥ ९२ ॥**

हे प्रिये ! गुरु के कार्य में स्वयं समर्थ हो, तो बहुत से नौकरों के होते हुए भी भक्तिमान् शिष्य दूसरे को न भेजे ॥ ९२ ॥

**गच्छंस्तिष्ठन् स्वपन् जाग्रज्जपन् जुहवात् प्रपूजयेत् ।**
**गुर्वाज्ञामेव कुर्वीत तदगतेनान्तरात्मना ॥ ९३ ॥**

चलते, बैठते, सोते-जागते, जपते, हवन-पूजन करते गुरु-आज्ञा का ही अन्तरात्मा से पालन करे ॥ ९३ ॥

**अभिमानो न कर्त्तव्यो जातिविद्याधनादिभिः ।**
**सर्वदा सेवयेत् नित्यं शिष्यः श्रीगुरुसन्निधौ ॥ ९४ ॥**

जाति, विद्या, धन आदि से अभिमान न करे, सदा शिष्य श्री गुरु के निकंट रहकर उनकी नित्य सेवा करे ॥ ९४ ॥

**कामक्रोधपरित्यागी विनीतः स्तुतिभक्तिमान् ।**
**देवि भूम्यासने तिष्ठेद् गुरुकार्यं समाचरेत् ॥ ९५ ॥**

काम, क्रोध छोड़कर, विनम्र हो, स्तुति एवं भक्ति के साथ हे देवि ! श्रद्धारूप आसन पर बैठकर गुरु का कार्य करे ॥ ९५ ॥

**स्वकार्यमन्यकार्यं वा शिष्यः स्वगुरुचित्तवित् ।**
**गुरुपार्श्वगतो नम्रः प्रसन्नवदनो भवेत् ॥ ९६ ॥**

अपना कार्य हो या दूसरे का, शिष्य गुरु का ध्यान करते हुए, गुरु के निकट नम्रतापूर्वक प्रसन्नमुख होकर रहे ॥ ९६ ॥

**सामान्यतो निषिद्धञ्च तद्गुरोर्यदि सन्निधौ ।**
**आचरेत्तस्य सर्वस्य दोषः कोटिगुणो भवेत् ॥ ९७ ॥**

गुरु द्वारा निषिद्ध सामान्य बात को भी यदि गुरु के पास कोई करता है, तो उसका दोष कोटि गुना अधिक होता है ॥ ९७ ॥

**अनादृत्य गुरोर्वाक्यं शृणुयाद् यः पराङ्मुखः ।**
**अहितं वा हितं वापि रौरवं नरकं व्रजेत् ॥ ९८ ॥**

जो अच्छे या बुरे गुरुवाक्य का अनादर कर उसे मुंह फिरा कर सुनता है, वह रौरव नरक में जाता है ॥ ९८ ॥

**गोब्राह्मणवधं कृत्वा यत् पापं समवाप्नुयात् ।**
**तत् पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ॥ ९९ ॥**

गुरु के आगे झूठ बोलने से शिष्य को वही पाप होता है, जो गो एवं ब्राह्मण के वध से लगता है ॥ ९९ ॥

**स्थानान्तरगताचार्ये व्यसने विषमे स्थिते ।**
**श्रीगुरुं न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये ॥ १०० ॥**

हे प्रिये ! गुरु के अन्यत्र जाने पर कठिन परिस्थिति में स्थित होने पर कहीं भी उनका साथ न छोड़े, उनके आदेशानुसार ही अनुवर्तन करे ॥ १००॥

**अधः स्थिते गुरावूर्ध्वे न तिष्ठेत कदाचन ।**
**न गच्छेदग्रतस्तस्य न तिष्ठेदुत्थिते गुरौ ॥ १०१ ॥**

अधः आसन पर गुरु के बैठने पर कभी ऊपर न बैठे । गुरु के आगे न चले और उनके उठने पर बैठा न रहे ॥ १०१ ॥

शक्तिच्छायां सुरच्छायां गुरुच्छायां न लङ्घयेत् ।
न तेषु कुर्यात् स्वच्छायां न स्वपेद् गुरुसन्निधौ ॥ १०२ ॥

शक्ति, देवता और गुरु की छाया को लांघे नहीं । उन पर अपनी छाया न डाले और गुरु के सन्निकट सोए नहीं ॥ १०२ ॥

भाषणं पाठनं गानं भोजनं शयनादिकम् ।
अनादिष्टो न कुर्वीत न चावन्दनपूर्वकम् ॥ १०३ ॥

बिना गुरु की आज्ञा पाये और बिना गुरु की वन्दना किए भाषण, पाठन, गायन, भोजन, शयन आदि न करे ॥ १०३ ॥

ब्रह्महत्याशतं कुर्यात् गुर्वाज्ञापरिपालनात् ।
विना गुर्वाज्ञया शिष्यौ विश्वसेन्नान्यशासनात् ॥ १०४ ॥

गुरुआज्ञा का पालन करने में सौ ब्रह्महत्या तक कर सकता है । गुरुकी आज्ञा बिना अन्य किसी का विश्वास न करे ॥ १०४ ॥

सर्वं गुर्वाज्ञया कुर्यान्न निन्देत्तत्स्त्रियं प्रिये ।
भक्त्या प्रणम्य चोत्तिष्ठेत् कृताञ्जलिपुटः प्रिये ॥ १०५ ॥

गुरु की आज्ञा से सब करे किन्तु हे प्रिये ! उनकी स्त्रियों की निन्दा न करे और भक्ति से हाथ जोड़कर उन्हें प्रणाम कर खड़ा रहे ॥ १०५ ॥

पश्चात्पदेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात् ।
एकासने नोपविशेद् गुरुणा तत्समैः सह ॥ १०६ ॥

गुरु के गृह से प्रणाम कर पीछे को पैर रखता हुआ बाहर निकले । गुरु के बराबर एक ही आसन पर न बैठे जिस पर गुरु अपने समकक्ष जनों के साथ बैठे हों ॥ १०६ ॥

न विशेदासने देवि देवतागुरुसन्निधौ ।
गुरोः सिंहासनं देयं ज्येष्ठानामुत्तमासनम् ।
देश्यासनं कनिष्ठानामितरेषां समासनम् ॥ १०७ ॥

हे देवि ! देवता और गुरु के समीप आसन पर न बैठे । गुरु को श्रेष्ठ आसन और ज्येष्ठ लोगों को उत्तम आसन प्रदान करे । छोटों को देश्यासन ( पहले से नियत आसन ) और दूसरों को अपने समकक्ष समासन दे ॥१०७॥

जाति विद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं मुदा ।
दण्डप्रणामं कृत्वैकं त्रिः प्रदक्षिणमाचरेत् ॥ १०८ ॥

जाति, विद्या एवं धन से सम्पन्न व्यक्ति गुरु को दूर से ही देखकर प्रसन्न हो और उन्हें दण्डप्रणाम करे और तीन बार उनकी प्रदक्षिणा करे ॥ १०८ ॥

**ततस्त्रिः षड् द्वादश वा ज्येष्ठादिष्वेकमेव वा ।**
**गुरुप्रगुरुयोगेन वन्देत प्रगुरु प्रिये ॥ १०९ ॥**

हे प्रिये ! तब गुरु, परम गुरु के क्रम से अपने गुरु की तीन, छः, बारह या एक बार वन्दना करे ॥ १०९ ॥

**ततो नमेद् गुरुं वापि गुर्वाज्ञां न विचारयेत् ।**
**प्रगुरोः सन्निधौ शिष्यः स्वगुरुं मनसा नमेत् ॥ ११० ॥**

फिर गुरु को नमस्कार करे । श्री गुरु के समीप होने पर उन्हें मन से नमस्कार न करे ॥ ११० ॥

**गुरुबुद्ध्या नमेत् सर्वं दैवतं तृणमेव वा ।**
**न नमेद्देवबुद्ध्या तु प्रतिमां लौहमृण्मयीम् ॥ १११ ॥**

गुरुबुद्धि से देवता या तृण तक सबको नमस्कार करे । देवबुद्धि से लोहे और मिट्टी की प्रतिमा को नमस्कार न करे ॥ १११ ॥

**गुरोः प्रणामत्रितयं ज्येष्ठानामेक एव च ।**
**पूज्यानामञ्जलिस्तद्वदन्येषां वाक्यवन्दनम् ॥ ११२ ॥**

गुरु को तीन बार, ज्येष्ठों को एक बार प्रणाम करे और पूज्यों को हाथ जोड़कर तथा अन्यों की वाणी से वन्दना करे ॥ ११२ ॥

**देवान् गुरून् कुलाचार्यान् ज्ञानवृद्धान् तपोधनान् ।**
**विद्याधिकान् स्वधर्मस्थान् प्रणमेत् कुलनायिके ॥ ११३ ॥**

हे कुलनायिके ! देवों, गुरुओं, कुलाचार्यों, ज्ञानियों, तपस्वियों, विद्वानों और स्वधर्मियों को प्रणाम करे ॥ ११३ ॥

**स्त्रीद्विष्टं गुरुभिः शप्तं पाषण्डं पण्डितं शठम् ।**
**विकर्माणं कृतघ्नञ्चानाश्रमिणञ्च नो नमेत् ॥ ११४ ॥**

स्त्रीद्वेषी, गुरुओं से शापित, पाखण्डी पण्डित, ठग, दुष्कर्मी, कृतघ्न, और अनाश्रमी को नमस्कार न करे ॥ ११४ ॥

**अनिवेद्य गुरोर्भुङ्क्ते यस्त्वेकग्रामसंस्थितः ।**
**अमेध्यं तद्भवेदन्नं शूकरो जायते मृतः ॥ ११५ ॥**

एक ही स्थान में रहते हुये जो गुरु को निवेदित किये बिना भोजन करता है, उसका अन्न अमेध्य ( अपवित्र ) हो जाता है और उसे खाने वाला मरने पर शूकर होता है ॥ ११५ ॥

**एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ।**
**क्रोशामात्रस्थितः शिष्यो गुरुं प्रतिदिनं नमेत् ॥ ११६ ॥**

**गुरु को प्रणाम करने के नियम**—गुरु-शिष्य एक ही स्थान में रहते हों तो शिष्य गुरु को ( प्रातः, मध्यान्ह एवं सायं ) तीनों सन्ध्याओं में प्रणाम करे । एक क्रोश ( दो मील ) की दूरी पर रहने वाला शिष्य गुरु को प्रतिदिन नमन करे ॥ ११६ ॥

**अर्द्धयोजनगः शिष्यः प्रणमेत् पञ्चपर्वसु ।**
**एकयोजनमारम्य योजनद्वादशावधि ॥ ११७ ॥**
**तत्संख्यादिवसैर्मासैः श्रीगुरुं प्रणमेत् प्रिये ।**

अर्ध योजन ( चार मील ) की दूरी पर रहने वाला शिष्य पञ्च पर्वों में प्रणाम करे । एक योजन से बारह योजन की दूर पर रहने वाला शिष्य हे प्रिये! उनकी संख्या के दिनों या महीनों में श्री गुरु को प्रणाम करे ॥ ११७-११८ ॥

**दूरदेशस्थितः शिष्यो भक्त्या तत्सन्निधिं गतः ॥ ११८ ॥**
**तत्र योजनसंख्योक्तमासेन प्रणमेद् गुरुम् ।**
**अतिदूरगतः शिष्यो यदिच्छा स्यात्तदा व्रजेत् ॥ ११९ ॥**

दूर देश में स्थित शिष्य उतने योजन की संख्या के महीनों में गुरु के पास आकर भक्तिपूर्वक प्रणाम करे । किन्तु बहुत दूर गया हुआ शिष्य जब इच्छा हो, तब आये ॥ ११८-११९ ॥

**रिक्तहस्तश्च नोपेयाद्राजानं देवतां गुरुम् ।**
**फलपुष्पाम्बरादीनि यथाशक्त्या समर्पयेत् ॥ १२० ॥**
**एवं यो न चरेद्देवि ब्रह्मराक्षसतां व्रजेत् ।**

राजा, देवता और गुरु के पास खाली हाथ न जाय । यथा-शक्ति फल, पुष्प, वस्त्रादि अर्पित करे । हे देवि ! ऐसा जो नहीं करता, वह ब्रह्म-राक्षस होता है ॥ १२०-१२१ ॥

**गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरुः स्मृतः ॥ १२१ ॥**

गुरुशक्ति, गुरुपुत्र और गुरु का ज्येष्ठ भ्राता ये गुरु के समान माने गये हैं ॥ १२१ ॥

**आत्मविच्च कनीयांसं पुत्रवत् परिपालयेत् ।**
**कुलाचार्यस्य देवेशि गुरुज्येष्ठकनिष्ठयोः ।**
**गुरुकल्पस्य कुर्वीत प्रणामं स्वरगुरोर्यथा ॥ १२२ ॥**
**यागज्येष्ठः क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकः ।**

छोटे को आत्मवत् समझकर पुत्र के समान उसका पालन करे । हे देवेशि ! कुलाचार्य के ज्येष्ठ और कनिष्ठ दोनों सम्बन्धियों को गुरुतुल्य ही प्रणाम करे ॥ १२२ ॥

**गुरुज्येष्ठसुतो देवि इति ज्येष्ठचतुष्टयम् ॥ १२३ ॥**
**यागज्येष्ठाभिवादेन क्रमिकाष्टाङ्गयोगतः ।**
**गुरुश्च कुलवृक्षश्च वन्दनीयौ विधानतः ॥ १२४ ॥**

हे देवि ! १. याग (योग) में ज्येष्ठ, २. क्रम में ज्येष्ठ, ३. कुल में ज्येष्ठ और ४. गुरु का ज्येष्ठ पुत्र—ये चार ज्येष्ठ माने गये हैं । याग-ज्येष्ठ को अभिवादन से और क्रम ज्येष्ठादि को अष्टाङ्ग योग से तथा गुरु एवं कुलवृक्ष ( कुलशक्ति ) इन दोनों को यथाविधि वन्दन करे ॥ १२३-१२४ ॥

**पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु ।**
**अभ्युत्थानप्रणामाद्यैरव्यक्तो दोषभाग्बहिः ॥ १२५ ॥**
**यदा त्वाचार्यरूपेण चात्मानं सम्प्रकाशयेत् ।**
**अभ्युत्थानप्रणामाद्यैर्दोषभाक् स भवेत्तदा ॥ १२६ ॥**

पिता आदि सभी कोटि पूज्य बन्धुओं के प्रति उठकर प्रणाम आदि स्पष्ट रूप से करे क्योंकि प्रणामादि न करने से दोष होता है। जब अपने को आचार्य रूप में प्रकट करे, तब उठकर प्रणामादि करने से दोष होता है ॥१२५-१२६।

**पतिर्भूत्वा पशुभ्यश्च प्रणामं यः करिष्यति ।**
**स महापशुरित्युक्तो देवताशापमाप्नुयात् ॥ १२७ ॥**

पशुपति होकर जो पशुओं को प्रणाम करता है, वह महापशु कहा जाता है और उसे देवता का शाप मिलता है ॥ १२७ ॥

**यो गुरुस्थानकं प्राप्तः पादुकापरिसंख्यया ।**
**गुरुवत् स तु मन्तव्यो ज्येष्ठैर्वन्द्यो न च प्रिये ॥ १२८ ॥**

जो पादुका परिसंख्या ( = ध्यान ) से गुरुस्थान को प्राप्त करता है, हे प्रिये! वह ज्येष्ठों और पुत्रों में गुरुवत् माननीय है ॥ १२८ ॥

इति ते कथितं किञ्चित् पादुकाभक्तिलक्षणम् ।
समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ १२९ ॥

॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे पादुका-कथनं नाम द्वादशोल्लासः ॥ १२ ॥



इस प्रकार संक्षेप में मैंने आपसे पादुकाभक्ति के लक्षण बताये । अब आप क्या सुनना चाहती हैं ? ॥ १२९ ॥

॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में पादुकाकथन नामक बारहवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ १२ ॥



# अथ त्रयोदशोल्लासः

**श्री देव्युवाच**

**कुलेश श्रोतुमिच्छामि करुणामृतवारिधे ।**
**वक्तुमर्हसि देवेश लक्षणं गुरुशिष्ययोः ॥ १ ॥**

**गुरुशिष्य लक्षण**—श्री देवी ने कहा—हे कुलेश ! हे करुण रूप अमृत के समुद्र ! हे देवेश ! कृपा करके गुरु एवं शिष्य दोनों के लक्षणों को मैं सुनना चाहिए अतः उन्हें कहिए ॥ १ ॥

**ईश्वर उवाच**

**शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।**
**तस्य श्रवणमात्रेण गुरुभावः प्रजायते ॥ २ ॥**

**ईश्वर ने कहा**—हे देवि ! सुनिए, जो आपने मुझसे पूछा है, उसे कहूँगा, जिसके सुनने मात्र से गुरुभक्ति उत्पन्न होती है ॥ २ ॥

**दुष्टवंशोद्भवं दुष्टं गुणहीनं विरूपिणम् ।**
**परशिष्यञ्च पाषण्डं षण्डं पण्डितमानिनम् ॥ ३ ॥**
**हीनाधिकविकाराङ्गं विकलाक्षयवान्वितम् ।**
**पङ्गुमन्धञ्च बधिरं मलिनं व्याधिपीडितम् ॥ ४ ॥**
**उत्सृष्टं दुर्मुखञ्चापि स्वेच्छावेशधरं प्रिये ।**
**दुर्विकाराङ्गचेष्टादिगतिभाषणवीक्षणम् ॥ ५ ॥**
**निद्रातन्द्राजडालस्यद्यूतादिव्यसनान्वितम् ।**
**कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा ।**
**अन्तर्भक्तिकरं क्षुद्रं बाह्यभक्तिविवर्जितम् ॥ ६ ॥**
**व्यलीकवादिनं स्तब्धं प्रोषितं प्रेषकं शठम् ।**
**धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ॥ ७ ॥**

**वर्जित शिष्य के लक्षय**—हे प्रिये ! दुष्ट वंश में उत्पन्न, गुणहीन, कुरूप, परशिष्य, पाखण्डी, नपुंसक, घमण्डी, अधिकाङ्ग, विकृताङ्ग, पंगु, अन्ध बधिर, मलिन, रोगी, उत्सृष्ट, दुर्मुख, मनमाने वस्त्र पहनने वाले, अङ्ग, चेष्टा,

गति, भाषण एवं वीक्षण से विचार प्रकट करने वाले, निद्रा, तन्द्रा एवं जड़तादि से युक्त, आलसी, द्यूतादि व्यसनी, सदैव द्वार, स्तम्भादि या दिवाल के पीछे छिपने वाले, अन्तर्भक्ति से युक्त किन्तु चन्दनादि बाह्य चिन्हों को न करने वाले, क्षुद्र, बाह्य भक्ति से हीन, मिथ्यावादी, स्तब्ध, शठ ( चतुर ), धन, स्त्री की शुद्धि से रहित, विधि निषेध को न मानने वाले व्यक्ति को शिष्य न बनाए ॥ ३-७ ॥

रहस्यभेदकं वापि देवि कार्यविनाशकम् ।
मार्जारबकवृत्तिञ्च रन्ध्रान्वेषणतत्परम् ॥ ८ ॥
मायाविनं कृतघ्नञ्च प्रच्छन्नान्तरदायकम् ।
विश्वासघातकं स्वामिद्रोहिणं पापकारिणम् ॥ ९ ॥
अविश्वासकरं संशयात्मकं सिद्ध्यकाङ्क्षिणम् ।
आततायिनमादित्सु कोपितं कूटसाक्षिणम् ॥ १० ॥

हे देवि ! रहस्य को ढूँढ़ने वाले, कार्य बिगाड़ने वाले, बिल्ली व बगुले के स्वभाव वाले, छिद्रान्वेषी, मायावी, कृतघ्न, गुप्त बात को प्रकट करने वाले, विश्वासघाती, स्वामिद्रोही, पापी, अविश्वासी, संशयालु, सिद्धिकांक्षी, आततायी, क्रोधी एवं झूठी गवाही देने वाले व्यक्ति को शिष्य न बनाए ॥ ८-१० ॥

सर्वप्रतारकं देवि सर्वोत्कृष्टाभिमानिनम् ।
असत्यं निष्ठुरासक्तं ग्राम्यादिबहुभाषिणम् ॥ ११ ॥
दुर्विचारकुतर्कादिकारकं कलहप्रियम् ।
वृथाक्षेपकरं मूर्खं चपलं वाग्विडम्बकम् ॥ १२ ॥
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ।
वाग्ब्रह्मवादिनं विद्या चौरमात्मप्रशंसकम् ॥ १३ ॥
गुणासहिष्णुमहितमार्त्तक्रोधनमम्बिके ।
वाचालं दुर्जनसखं सर्वलोकविगर्हितम् ॥ १४ ॥
पिशुनं परसन्ताप्यं सम्विदप्रणयं प्रिये ।
स्वक्लेशवादिनं स्वामिद्रोहिणं स्वात्मवञ्चकम् ॥ १५ ॥
जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहासक्लेशक्रोधादिकारिणम् ॥ १६ ॥
अतिहासमकर्माणं मर्मान्तपरिहासकम् ।
कामुकञ्चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥ १७ ॥
असूयामदमात्सर्यदम्भाहङ्कारसंयुतम् ।
ईर्ष्यापारुष्यपैशुन्यकार्पण्यक्रोधमानसम् ॥ १८ ॥
अधीरं दुःखिनं भीरुमशक्तस्तवमातुरम् ।

अप्रबुद्धमतिं मन्दं मूढं चिन्ताकुलं विटम् ॥ १९ ॥
तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम् ।
बह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥ २० ॥
भक्तिश्रद्धादयाशान्तिधर्माचारविवर्जितम् ।
मातापितृगुरुप्राज्ञसद्वचोहास्यकारकम् ॥ २१ ॥
कुलद्रव्यादिबीभत्सं गुरुसेवाभिमानिनम् ।
स्त्रीद्विष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि ।
इत्यादिदुर्गुणोपेतं गुरुः शिष्यं विवर्जयेत् ॥ २२ ॥

हे देवि ! ठगने वाले, सर्वश्रेष्ठ होने का अभिमान करने वाले, निष्ठुर, आसक्त, गँवार, बहुभाषी, दुष्टविचार वाले, कुतर्की, झगड़ालू, व्यर्थ आक्षेप करने वाले, मूर्ख, चञ्चल, बात बनाने वाले, सामने प्रिय और पीठ पीछे दोष कहने वाले, ( अज्ञानी होकर भी ) ब्राह्मण के समान बोलने वाले, विद्या ( साहित्य ) चुराने वाले, आत्म प्रशंसक, गुणों को न सहने वाले ( जरतुहा ), अपकार करने वाले, कष्ट में व्याकुल होने वाले, क्रोधपूर्ण, अत्यधिक बोलने वाले, दुर्जनों के साथ रहने वाले, सर्वलोकनिन्दित, चुगुलखोर, परसन्तापी, प्रणयभङ्ग करने वाले, अपने कष्ट को कहने वाले, अपने स्वामी से विश्वासघात करने वाले, आत्मवञ्चक, जिह्वोपस्थ में आसक्त, चोर, पशु चेष्टा वाले, अकारण द्वेष, हास, क्लेश एवं क्रोध करने वाले, दुस्साहसी, मार्मिक परिहास करने वाले, कामुक, निर्लज्ज, झूठे एवं पापपूर्ण कार्यों के लिए उत्तेजित करने वाले, असूया, मद, मात्सर्य, दम्भ, अहङ्कार से युक्त, ईर्ष्या, पारुष्य, पैशुन्य, कृपणता एवं क्रोध से युक्त मनवाले, अधीर, दुखी, भीरु, अशक्त, व्याकुल, अविकसित बुद्धि, मन्दबुद्धि, मूढ़, चिन्ताकुल, तृष्णा, लोभ से युक्त, दीन, असन्तोषी, सबसे माँगने वाले, बहुभोजी, कपटी, भ्रम फैलाने वाले, कुटिल, भक्ति, श्रद्धा, दया, शान्ति और धर्माचार से हीन, माता, पिता गुरुप्राज्ञ के सद्वचनों की हँसी उड़ाने वाले, कुलद्रव्यों के प्रति वीभत्स, गुरुसेवा का अभिमान करने वाले, स्त्रीद्वेषी, समयाचार से भ्रष्ट, गुरु से शापित आदि—इस प्रकार के दुर्गुणयुक्त व्यक्ति को हे कुलेश्वरि ! गुरु शिष्य न बनाये ॥ ११-२२ ॥

सच्छिष्यन्तु कुलेशानि शुभलक्षणसंयुतम् ।
समाधि साधनोपेतं गुणशीलसमन्वितम् ॥ २३ ॥
स्वच्छदेहाम्बरं प्राज्ञं धार्मिकं शुद्धमानसम् ।
दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥ २४ ॥
दक्षमल्पाशिनं गूढचित्तं निर्व्याजसेवकम् ।
विमृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ॥ २५ ॥

सर्वकार्यातिकुशलं स्वच्छं सर्वोपकारिणम् ।
कृतज्ञं पापभीतञ्च साधुसज्जनसम्मतम् ॥ २६ ॥
आस्तिकं दानशीलञ्च सर्वभूतहिते रतम् ।
विश्वासविनयोपेतं धनदेहाद्यवञ्चकम् ॥ २७ ॥
असाध्यसाधकं शूरमुत्साहबलसंयुतम् ।
अनुकूलं क्रियायुक्तमप्रमत्तं विचक्षणम् ॥ २८ ॥
हितसत्यमितस्मेरभाषणं मुक्तदूषणम् ।
सकृदुक्तगृहातार्थं चतुरं बुद्धिविस्तरम् ॥ २९ ॥
स्वस्तुतौ परनिन्दायां विमुखं सुमुखं प्रिये ।
जितेन्द्रियं सुसन्तुष्टं धीमन्तं ब्रह्मचारिणम् ॥ ३० ॥
त्यक्ताधिव्याधिचापल्यदुःखभ्रान्तिमसंशयम् ।

**ग्राह्य शिष्य के लक्षण**—हे कुलेशानि ! सच्छिष्य शुभ लक्षणों से युक्त होता है । समाधि साधनों से युक्त, गुणशील वाले, शुद्ध शरीर एवं वस्त्र वाले, प्राज्ञ, धार्मिक, शुद्धमन, दृढ़व्रती, सदाचारी, श्रद्धा भक्ति से युक्त, समर्थ अल्पभोजी, गूढ़चित्त, निःस्वार्थ सेवा करने वाले, विवेकी, वीर, दरिद्रता से रहित, मन वाले, सब कार्यों में कुशल, स्वच्छ, सर्वोपकारी, कृतज्ञ, पाप से डरने वाले, साधु सज्जन से सम्मत, आस्तिक, दानी, सब प्राणियों की भलाई करने वाले, विश्वास और नम्रता से युक्त, धन एवं देह के अवञ्चक, असाध्य को सिद्ध करने वाले, शूर, उत्साह, बल से युक्त, अनुकूल कार्य करने वाले, अप्रमादी, बुद्धिमान्, प्रिय, सत्य, अल्प और सहर्ष बोलने वाले, दोषमुक्त, एक बार कहे को समझने वाले, चतुर, अपनी प्रशंसा और दूसरी की निन्दा से विमुख, सुमुख, जितेन्द्रिय, सन्तुष्ट, धीमान्, ब्रह्मचारी, आदि से रहित, आधि, व्याधि, चापल्य, दुःख, भ्रान्ति व सन्देह से रहित शिष्य ग्राह्य हैं ॥ २३-३१ ॥

गुरुध्यानस्तुतिकथादेवार्चावन्दनोत्सुकम् ॥ ३१ ॥
गुरुदैवतसम्भक्तं कामिनीपूजकं परम् ।
नित्यं गुरुसमीपस्थं गुरुसन्तोषकारकम् ॥ ३२ ॥
मनोवाक्तनुभिर्नित्यं परिचर्या समुद्यतम् ।
गुर्वाज्ञापालकं देवि गुरुकीर्त्तिप्रकाशकम् ॥ ३३ ॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्त्तिनं प्रेष्यकारिणं कुलनायिके ॥ ३४ ॥
जातिमानधने गर्ववर्जितं गुरुसन्निधौ ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥ ३५ ॥

कुलधर्मकथायोगियोगिनीकौलिकप्रियम् ।
कुलार्चनादिनिरतं कुलद्रव्याजुगुप्सकम् ॥ ३६ ॥
जपध्यानादिनिरतं मोक्षमार्गाभिकाङ्क्षिणम् ।
कुलशास्त्रप्रियं देवि पशुशास्त्रपराङ्मुखम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥ ३७ ॥

गुरु के ध्यान, स्तुति, कथा और देवता की पूजा वन्दना में उत्सुक, गुरु दैवत में समान भक्ति रखने वाले, कुल स्त्री पूजक, नित्य गुरु के समीप रहने वाले, गुरु को सन्तुष्ट करने वाले, मन, वचन, शरीर से नित्य सेवा में तत्पर, गुरु आज्ञा का पालन करने वाले, गुरु कीर्ति को फैलाने वाले, गुरु वाक्य को प्रमाण मानने वाले, गुरुसेवा में तत्पर, मनोनुकूल, सेवक के सामान गुरु का कार्य करने वाले, गुरु के समक्ष जाति, मान एवं धन में गर्व न करने वाले, गुरुद्रव्य से निरपेक्ष, गुरु प्रसाद के अभिलाषी, कुल धर्म कथा और योग-योगिनी कौलिकों को चाहने वाले, कुलपूजा में लगे हुए और कुल द्रव्य का गोपन करने वाले, जप व ध्यानादि में तत्पर, मोक्षमार्ग के अभिलाषी, कुलशास्त्र को मानने वाले और पशुशास्त्र से विमुख आदि—इस प्रकार के लक्षणों से युक्त व्यक्ति को शिष्य बनाए ॥ ३१-३७ ॥

श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः ।
सर्वलक्षणसम्पन्नः सर्वावयवशोभितः ॥ ३८ ॥
सर्वागमार्थतत्त्वज्ञः सर्वमन्त विधानवित् ।
लोकसम्मोहनकरो देववत् प्रियदर्शनः ॥ ३९ ॥
सुमुखः सुलभः स्वच्छो भ्रमसंशयनाशकः ।
इङ्गिताकारवित् प्राज्ञ ऊहापोहविदुज्ज्वलः ॥ ४० ॥
अन्तर्लक्ष्यो बहिर्दृष्टिः सर्वज्ञो देशकालवित् ।
आज्ञासिद्धिस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥ ४१ ॥
वेधको बोधकः शान्तः सर्वजीवदयापरः ।
स्वाधीनेन्द्रियसञ्चारषड्वर्गविजयक्षमाः ॥ ४२ ॥

**गुरु के लक्षण**—हे परमेशानि ! शुद्धवेषधारी, मनोहर, सर्वलक्षण, सम्पन्न, सर्वाङ्गपूर्ण, सभी आगमों के तत्त्वार्थ के ज्ञाता, सभी मन्त्रों के विधान के ज्ञाता, लोक को सम्मोहित करने वाले, देवस्वरूप, प्रियदर्शन, सुमुख, सुलभ, स्वच्छ, भ्रम, संशयनाशक, इङ्गित और आकार के प्राज्ञ, ऊहापोह के विशेषज्ञ, अन्तर्मुखी होते हुये भी बहिदृष्टि रखने वाले सर्वज्ञ, देश-काल के ज्ञाता, आज्ञासिद्ध, त्रिकालज्ञ, निग्रह-अनुग्रह में समर्थ, बेधड़क, बोधक, शान्त, सभी

जीवों पर दया करने वाले, जितेन्द्रिय, षड् वर्गों को जय करने में समर्थ, व्यक्ति को गुरु बनाना चाहिए ॥ ३८-४२ ॥

**अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ।**
**शिवविष्णुसमः साधुर्मन्ददर्शनदूषकः ॥ ४३ ॥**
**निर्मलो नित्यसन्तुष्टः स्वतन्त्रो मन्त्रशक्तिमान् ।**
**सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्णवाक् ॥ ४४ ॥**
**भक्तप्रियः सदोदारो गम्भीरः शिष्टसाधकः ।**
**स्वेष्टदेवगुरुज्येष्ठ वनितापूजनोत्सुकः ॥ ४५ ॥**

अग्रगण्य, गम्भीर, पात्र-अपात्र के विशेषज्ञ, शिव एवं विष्णु के समान, साधु, पशुदर्शन के दोष बताने वाले, निर्मल, नित्यसन्तुष्ट, स्वतन्त्र, मन्त्रशक्तिमान्, भक्तवत्सल, धीर, कृपालु, प्रसन्नमुख, भक्तप्रिय, सब शास्त्रों के ज्ञाता, शुभ, शिष्ट, अपने इष्टदेव और गुरुओं, ज्येष्ठों, वनिताओं के पूजन में उत्सुक रहने वाले व्यक्ति को गुरु बनाना चाहिए ॥ ४३-४५ ॥

**नित्ये नैमित्तिके काम्ये रतः कर्मण्यनिन्दिते ।**
**रागद्वेषभयक्लेशदम्भाहङ्कारवर्जितः ॥ ४६ ॥**
**स्वविद्यानुष्ठानरतो धर्मादीनामुपार्जकः ।**
**यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ॥ ४७ ॥**
**स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनादिषु ।**
**सर्वाहम्भावसंयुक्तो निर्द्वन्द्वो नियतव्रतः ॥ ४८ ॥**
**अलोलुपो ह्यसङ्कल्पपक्षपाती विचक्षणः ।**
**वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी ॥ ४९ ॥**
**निःसङ्गो निर्विकल्पश्च निर्णीतार्थोऽतिधार्मिकः ।**
**तुल्यनिन्दास्तुतिर्मौनो निरपेक्षो निरामयः ।**
**इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ॥ ५० ॥**

नित्य, नैमित्तिक, काम्य कर्मों में तत्पर रहने वाले, राग, द्वेष, भय, क्लेश, दम्भ, अहङ्कार से रहित, अपनी विद्या के अनुष्ठान में लगे हुये, तपोधर्म का प्रकाश करने वाले, यथाप्राप्त से सन्तुष्ट, गुण, दोष के विवेचक, स्त्री-धनादि में अनासक्त, दुःसङ्ग, व्यसनादि से रहित, सर्वाहंभाव से युक्त, निर्द्वन्द्व, व्रतपरायण, अलोलुप, अहिंसक, विद्वान्, धन विद्यादि द्वारा मन्त्र-यन्त्र तन्त्रादि को न बेचने वाले, निःसङ्ग, निर्विकल्प, अर्थ निर्णायक, अति धार्मिक, निन्दास्तुति मे समभाव रखने वाले, निरपेक्ष, नियम निर्देश करने वाले इत्यादि— हे प्रिये ! इस प्रकार के लक्षण से युक्त श्रीगुरु कहे गये हैं ॥ ४६-५० ॥

यः शिवः सर्वगः सूक्ष्मश्चोन्मना निष्कलोऽव्ययः ।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये ॥ ५१ ॥
अत एव शिवः साक्षाद्गुरुरूपं समाश्रितः ।
भक्त्या सम्पूजितो देवि भुक्तिं मुक्तिं प्रयच्छति ॥ ५२ ॥

निराकार होते हुये भी 'शिव' का गुरुरूपत्व—हे प्रिये ! जो शिव सर्वव्यापी, सूक्ष्म, उन्मना, निष्कल, अव्यय, व्योमाकार, अजन्मा और अनन्त हैं, उनकी पूजा करना कैसे सम्भव है ? हे देवि ! इसी से शिव साक्षाद् गुरु रूप का आश्रय लेते हैं और भक्ति से सम्पूजित होकर भुक्ति एवं मुक्ति को प्रदान करते हैं ॥ ५१-५२ ॥

शिवोऽहं नाकृतिर्देवि नरदृग्गोचरो नहि ।
तस्मात् श्रीगुरुरूपेण शिष्यान् रक्षति धार्मिकान् ॥ ५३ ॥
मनुष्यचर्मणा बद्धः साक्षात् परशिवः स्वयम् ।
सच्छिष्यानुग्रहार्थाय गूढं पर्यटति क्षितौ ॥ ५४ ॥
सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते ॥ ५५ ॥

हे देवि ! मैं शिव हूँ । मेरी कोई आकृति नहीं है । मनुष्यों की दृष्टि में आने वाला मैं नहीं हूँ । इसलिये श्रीगुरुरूप से शिव धार्मिक शिष्यों की सदा रक्षा करते हैं । मनुष्य चर्म में साक्षात् परशिव स्वयं आबद्ध होते हैं और पृथ्वी पर गुप्त रूप से सच्छिष्यों पर अनुग्रह करने के लिये भ्रमण करते हैं । सद्भक्तों की रक्षा के लिए ही निराकार भी आकृतियुक्त होता है । दयासागर शिव इस लोक में संसारी के समान चेष्टा करते हैं ॥ ५३-५५ ॥

ललाटलोचनं चान्द्रीं कलामपि च दोर्द्वयम् ।
अन्तर्धाय च वर्त्तेयं गुरुरूपो महीतले ॥ ५६ ॥

ललाट के लोचन, चन्द्रकला और दो भुजाओं को अन्तर्हित कर वे पृथ्वी पर गुरु रूप से विद्यमान रहते हैं ॥ ५६ ॥

अत्रिनेत्रः शिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितं प्रिये ॥ ५७ ॥
नरवद्दृश्यते लोके श्रीगुरुः पापकर्मणा ।
शिववद् दृश्यते लोके भवानि पुण्यकर्मणा ॥ ५८ ॥
श्रीगुरुं परमं तत्त्वं तिष्ठन्तं चक्षुरग्रतः ।
मन्दभाग्या न पश्यन्ति ह्यन्धाः सूर्यमिवोदितम् ॥ ५९ ॥

**श्री गुरुदेव का ब्रह्मा, विष्णु, शिवत्त्वरूप**—हे प्रिये ! शिव त्रिनेत्रहीन होकर, विष्णु चतुर्भुजाओं से हीन होकर और ब्रह्मा चतुर्मुखों से हीन होकर साक्षात् 'श्रीगुरु' कहलाते हैं । पाप कर्मों के कारण पापियों को श्रीगुरु मनुष्य के समान और पुण्य कर्मों के कारण पुण्यात्माओं को श्रीगुरु शिव के समान संसार में दिखाई देते हैं । आँखों के सामने श्रीगुरु परम तत्त्व स्वरूप विद्यमान हैं, किन्तु भाग्यहीन लोग उन्हें देख नहीं पाते, जैसे अन्धे उदय हुये सूर्य को नहीं देखते ।। ५७-५९।।

**गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः ।**
**शिव एव गुरुर्नो चेद्भुक्ति मुक्ति ददाति कः ।। ६० ।।**
**सदाशिवस्य देवस्य श्रीगुरोरपि पार्वती ।**
**उभयोरन्तरं नास्ति यः करोति स पातकी ।। ६१ ।।**
**देशिकाकृतिमास्थाय पशोः पाशानशेषतः ।**
**छित्त्वा परं पदं देवि नयत्येनमतो गुरुः ।। ६२ ।।**
**सर्वानुग्रहकर्तृत्वादीश्वरः करुणानधिः ।**
**आचार्यरूपमास्थाय दीक्षया मोक्षयेत् पशून् ।। ६३ ।।**

गुरु साक्षात् सदाशिव हैं, यह सत्य है, इसमें सन्देह नहीं। गुरु शिव ही न हो तो, तो भुक्ति और मुक्ति को कौन देता ? भगवान् सदाशिव और श्री गुरु—इन दोनों में कोई अन्तर नहीं है। जो उनमें अन्तर समझता है, वह पापी है। देशिक की आकृति को धारण कर पशु के समस्त पाशों को काट कर वे उसे परम पद को पहुँचाते हैं, अतः 'गुरु' कहलाते हैं। दयानिधि ईश्वर सबपर अनुग्रह करने के लिये 'आचार्य' का रूप धारण कर दीक्षा द्वारा पशुओं का मोक्ष करते हैं ।। ५७-६३ ।।

**यथा घटश्च कलसः कुम्भश्चैकार्थवाचकः ।**
**तथा देवश्च मन्त्रश्च गुरुश्चैकार्थ उच्यते ।। ६४ ।।**

**देवता, मन्त्र और गुरु में अभेद**—जिस प्रकार घट, कलश और कुम्भ इन तीनों शब्दों का एक ही अर्थ है, उसी प्रकार देवता, मन्त्र और गुरु एक ही अर्थ के वाचक बताए गये हैं ।। ६४ ।।

**यथा देवस्तथा मन्त्रो यथा मन्त्रस्तथा गुरुः ।**
**देवमन्त्रगुरूणाञ्च पूजया सदृशं फलम् ।। ६५ ।।**

जो देव है, वही मन्त्र है और जो मन्त्र है, वही गुरु है । अतः देवता, मन्त्र और गुरु की पूजा का समान फल होता है ।। ६५ ।।

**शिवरूपं समास्थाय पूजां गृह्णामि पार्वती ।**
**गुरुरूपं समादाय भवपाशान्निकृन्तये ॥ ६६ ॥**

हे पार्वति ! शिवरूप धारण कर मैं पूजा को स्वीकार करता हूँ, और गुरु रूप में होकर जीव को बन्धनों से मुक्त करता हूँ ॥ ६६ ॥

**सिद्धान्तशारवेत्ताहं बीजोऽहमिति बोधकृत् ।**
**अविच्छिन्नः सदा हृष्टहृदयो गुरुरुच्यते ॥ ६७ ॥**

**श्रेष्ठ गुरु के लक्षण**—'सिद्धान्त का सार जानने वाला मैं बीज हूँ', इस प्रकार का बोध देने वाला सदा आनन्दित रहने वाला 'गुरु' कहलाता है ॥६७॥

**यो विलंघ्याश्रमान् वर्णानात्मन्येव स्थितः सदा ।**
**ज्योतिवर्णाश्रमी योगी स गुरुः कथितः प्रिये ॥ ६८ ॥**

आश्रमों और वर्णों का लंघन कर जो सदा आत्मा में स्थित रहता है और ज्योतिरूप वर्णाश्रम वाला योगी है, हे प्रिये! वह 'गुरु' कहा गया है ;

**षडध्वानं षडाधारं षोडशाधारनिर्णयम् ।**
**यो जानाति विधानेन स गुरुः कथितः प्रिये ॥ ६९ ॥**
**दृश्यं विना स्थिरा दृष्टिर्मनश्चालम्बनं विना ।**
**विनायासं स्थिरो वायुर्यस्य स्यात् स गुरुः प्रिये ॥ ७० ॥**
**यत्तु संवित्तिजननं परानन्दसमुद्भवम् ।**
**तत्तत्त्वं विदितं येन स गुरुः कुलनायिके ॥ ७१ ॥**
**भूतभव्यौ तन्त्रमन्त्रौ वेत्ति यः शाक्तशाम्भवम् ।**
**वेधञ्च षड्विधं देवि स हि वेधकरो गुरुः ॥ ७२ ॥**

हे प्रिये ! छः आधारों और छः अध्वानों को जो विधिपूर्वक जानता है; दृश्य के बिना जिसकी दृष्टि स्थिर रहती है, आलम्बन के बिना जिसका मन स्थिर रहता है और श्रम किए बिना जिसका मन स्थिर रहता है तथा श्रम किए बिना जिसका प्राण (वायु) स्थिर रहता है; हे कुलनायिके ! सम्वित्ति को प्रकट करने वाले और परानन्द के उद्भव करने वाले तत्त्व को जो जानता है; भूत, भविष्य, तन्त्र, मन्त्र, शाक्त, शाम्भव और छः प्रकार के वेधों को जो जानता है, हे देवि ! वही 'वेध करने वाला गुरु' है ॥ ६९-७२ ॥

**पदमन्त्रकलायन्त्रसतत्त्वतभुवनाश्रयम् ।**
**शोधयेद् यः षडध्वानं स गुरुः कथितः प्रिये ॥ ७३ ॥**

**श्रेष्ठ गुरु के ज्ञान की सीमाएँ**—१. पद, २. वर्ण (मन्त्र), ३. कला,

४. यन्त्र, ५. मण्डल (तत्त्व), ६. भुवन ( गुण )—इन छः अध्वानों को जो शुद्ध करता है, हे प्रिये ! वह गुरु कहा गया है ॥ ७३ ॥

**वेधं पदं विरोधञ्च ग्रहणं मोक्षणं तथा ।**
**यो वा सम्यग्विजानाति स गुरुः कथितः प्रिये ॥ ७४ ॥**

१. वेध, २. घट (पद), ३. निरोध (विरोध), ४. ग्रहण, ५. मोक्षण—इन्हें जो भले प्रकार जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ७४ ॥

**जाग्रत् स्वप्नः सुषुप्तिश्च तुरीयं तदतीतकम् ।**
**यो वेत्ति पञ्चकं देवि स गुरुः कथितः प्रिये ॥ ७५ ॥**

१. जाग्रत्, २. स्वप्न, ३. सुषुप्ति, ४. तुरीय, ५. तुरीयातीत—इन पाँचों को हे देवि ! जो जानता है, वह गुरु कहा गया है ॥ ७५ ॥

**पिण्डं पदं तथा रूपं रूपातीतं चतुष्टयम् ।**
**यो वा सम्यग्विजानाति स गुरुः कथितः प्रिये ॥ ७६ ॥**

१. पिण्ड, २. पद, ३. रूप, ४. रूपातीत—इन चारों को जो भले प्रकार से जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ७६ ॥

**यो वा पराञ्च पश्यन्तीं मध्यमां वैखरीमपि ।**
**चतुष्टयं विजानाति स गुरुः कथितः प्रिये ॥ ७७ ॥**

१. परा, २. पश्यन्ती, ३. मध्यमा, ४. वैखरी—इन चारों को जो जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ७७ ॥

**आत्मविद्याशिवसर्वमिति तत्त्वचतुष्टयम् ।**
**यो वेत्ति परमेशानि स गुरुर्नापरः प्रिये ॥ ७८ ॥**

१. आत्म, २. विद्या, ३. शिव, ४. सर्व—इन चारों तत्त्वों को जो जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ७८ ॥

**पाशच्छेदं वेधदीक्षां पशुग्रहणमेव च ।**
**त्रिविधं यो विजानाति स गुरुः परमो मतः ॥ ७९ ॥**

१. पाशच्छेद (पशु स्तम्भ), २. वेध दीक्षा, ३. पशुग्रहण (पशुत्वहन)—इन तीन को जो जानता है वह श्रेष्ठ गुरु है ॥ ७९ ॥

**पदं पाशं पशुनाञ्च रहस्यार्थं विधानतः ।**
**यो जानाति वरारोहे स गुरुः कथितः प्रिये ॥ ८० ॥**

पद और पशुओं के पाशों का रहस्यार्थ जो विधानतः जानता है, हे वरारोहे ! हे प्रिये ! वह गुरु कहा गया है ॥ ८० ॥

**चक्रसङ्केतकं मन्त्रं पूजासङ्केतकं तथा ।**
**त्रितयं यो विजानाति स गुरुः कथितः प्रिये ॥ ८१ ॥**

१. चक्रसङ्केत, २. मन्त्र (यन्त्र) संकेत और ३. पूजासंकेत—इन तीनों को जो जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ८१ ॥

**वाणेतरस्वयम्भ्वाख्यलिङ्गत्रितयसंस्थितिम् ।**
**तत्त्वतो यो विजानाति स गुरुः कथितः प्रिये ॥ ८२ ॥**

१. वाण, २. इतर, ३. स्वयम्भू नामक तीन लिङ्गों की संस्थिति को वस्तुतः जो जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ८२ ॥

**आणवं कार्मणञ्चैव मायीयञ्च मलत्रयम् ।**
**यो विशोधयितुं शक्तः स गुरुः परमो मतः ॥ ८३ ॥**

१. आणव (आत्मज) २. कार्मण (कर्मज) और ३. मायीय (मायिक)—इन तीन मलों को शुद्ध करने में जो समर्थ हैं, वह श्रेष्ठ गुरु है ॥ ८३ ॥

**आरक्तशुक्लमिश्रा(कृष्णा)ख्यचरणत्रयवासनाम् ।**
**यो जानाति महादेवि स गुरुः परमो मतः ॥ ८४ ॥**

१. रक्त, २. शुक्ल एवं ३. मिश्र (कृष्ण) नामक तीन चरणों की वासना (भावना) को जो जानता है, हे महादेवि ! वह गुरु श्रेष्ठ है ॥ ८४ ॥

**महामुद्रां नभोमुद्राम् उड्डीयानं जलन्धरम् ।**
**मूलबन्धञ्च यो वेत्ति स गुरुः परमो मतः ॥ ८५ ॥**

१. महामुद्रा, २. नभोमुद्रा, ३. उड्डीयान, ४. जलन्धर और ५. मूलबन्ध को जो जानता है, वह श्रेष्ठ गुरु है ॥ ८५ ॥

**शिवादिक्षितिपर्यन्तं षट्त्रिंशत्तत्त्वनिर्णयम् ।**
**यो विजानाति तत्त्वेन स गुरुः परमो मतः ॥ ८६ ॥**

शिव से क्षितिपर्यन्त ३६ तत्त्वों का निर्णय है, उसे जो वस्तुतः जानता है, वह श्रेष्ठ गुरु है ॥ ८६ ॥

**विमर्श**—शिव तत्त्व, शक्ति तत्त्व, सदाशिव तत्त्व, ईश्वर तत्त्व, सुधा विद्या तत्त्व और माया, पञ्चकञ्चुक, पुरुष, प्रकृति, बुद्धि, अहंकार, मन, पञ्चकर्मेन्द्रिय, पञ्चज्ञानेन्द्रिय, पञ्चतन्मात्रा और पञ्चमहाभूत = ३६ तत्त्व ॥ ८६॥

**अन्तर्यागं बहिर्यागं कलाज्ञानस्थितिं प्रिये ।**
**चारुयन्त्रविधानञ्च यो वेत्ति स गुरुः प्रिये ॥ ८७ ॥**

हे प्रिये ! अन्तर्याग, बहिर्याग, कला, ज्ञान, स्थिति और सुन्दरयन्त्र विधान को जो जानता है, हे प्रिये ! वह गुरु कहा गया है ॥ ८७ ॥

**पिण्डब्रह्माण्डयोरैक्यं स्थितिं यो वेत्ति तत्त्वतः ।**
**शिरास्थिरोमसंख्यादि स गुरुर्नापरः प्रिये ॥ ८८ ॥**

पिण्ड और ब्रह्माण्ड के ऐक्य को तथा शिरा, अस्थि, रोम की संख्यादि को जो वस्तुतः जानता है; हे प्रिये ! वह गुरु है अन्य नहीं ॥ ८८ ॥

**पद्मादिचतुरशीतिनानासनविचक्षणः ।**
**यमाद्यष्टाङ्गयोगज्ञः स गुरुः परमो मतः ॥ ८९ ॥**

पद्मादि ८४ आसनों और यमादि अष्टाङ्गयोग का जो ज्ञाता है, वही श्रेष्ठ 'गुरु' है ॥ ८९ ॥

**घृणा सङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ।**
**कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्त्तिताः ॥ ९० ॥**

१. घृणा (या तृष्णा), २. शङ्का (या शोक), ३. भय, ४. लज्जा, ५. जुगुप्सा, ६. कुल, ७. शील तथा ८. जाति—ये आठ पाश कहे गये हैं ।

**पाशबद्धः पाशुर्ज्ञेयः पाशमुक्तो महेश्वरः ।**
**तस्मात् पाशहरो यस्तु स गुरुः परमो मतः ॥ ९१ ॥**

पाश से बँधा हुआ 'पशु' और पाश से छूटा हुआ 'शिव' माना गया है। अतः जो पाशों को दूर करता है; वही श्रेष्ठ 'गुरु' है ॥ ९१ ॥

**बन्धनं योनिमुद्रााया मन्त्रचैतन्यदर्शनम् ।**
**यन्त्रमन्त्रस्वरूपञ्च यो वेत्ति स गुरुः प्रिये ॥ ९२ ॥**

योनिमुद्रा का बाँधना, मन्त्रचैतन्य विधि और यन्त्र-मन्त्र का स्वरूप जो जानता है, हे प्रिये ! वह श्रेष्ठ गुरु है ॥ ९२ ॥

**विनिक्षिप्तां गतायातां संक्लिष्टां संविनीतकाम् ।**
**चतुर्विधां मनोऽवस्थां यो वेत्ति स गुरुः प्रिये ॥ ९३ ॥**

१. विनिक्षिप्त, २. गत आयात, ३. संक्लिष्ट और ४. विनीतक—मन की इन चार अवस्थाओं को जो जानता है, हे प्रिये ! वह श्रेष्ठ गुरु है ॥ ९३॥

**मूलादिब्रह्मरन्ध्रान्तसप्ताम्भोजदलेषु यः ।**
**जीवाचारफलं वेत्ति स गुरुर्नापरः प्रिये ॥ ९४ ॥**

मूलाधार से ब्रह्मरन्ध्र तक सात पद्मदलों में जीव की गति का फल जो जानता है, हे प्रिये ! वह गुरु है अन्य नहीं है ॥ ९४ ॥

**शिवादिगुरुपर्यन्तं पारम्पर्यक्रमेण यः ।**
**अवाप्ततत्त्वसम्भारः स गुरुर्नापरः प्रिये ॥ ९५ ॥**

शिव से गुरु तक की परम्परा के क्रम से तत्त्वसम्भार का जो ज्ञाता है, हे प्रिये ! वही श्रेष्ठ गुरु है ॥ ९५ ॥

**येन वा दर्शिते तत्त्वे तत्क्षणात्तन्मयो भवेत् ।**
**मन्यते मुक्तमात्मानं स गुरुर्नापरः प्रिये ॥ ९६ ॥**

जिसके द्वारा तत्त्वज्ञान कराने पर साधक उसमें तुरन्त तन्मय होकर अपने को मुक्त अनुभव करने लगे, हे प्रिये ! वही श्रेष्ठ गुरु है ॥ ९६ ॥

**ये दत्त्वा सहजानन्दं दरन्तीन्द्रियजं सुखम् ।**
**सेव्यास्ते गुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः ॥ ९७ ॥**

जो सहजानन्द देकर इन्द्रियजन्य सुख की आसक्ति को दूर करते हैं, वही गुरु सेवनीय हैं, अन्यों को ठग समझकर शिष्य त्याग दें ॥ ९७ ॥

**संसारभयभीतस्य शिष्यस्य गुरुरादरात् ।**
**व्रतोपवासनियमैर्नियन्ता स गुरुर्मतः ॥ ९८ ॥**

संसार के भय से डरे हुये शिष्य को व्रतोपवास नियमों से नियन्त्रित करने वाला ही 'गुरु' है ॥ ९८ ॥

**यः प्रसन्नः क्षणार्द्धेन मोक्षलक्ष्मीं प्रयच्छति ।**
**दुर्लभं तं विजानीयाद् गुरुं संसारतारकम् ॥ ९९ ॥**

जो क्षण भर में प्रसन्न होकर मोक्षरूपी रत्न प्रदान करता है, उसे संसार से उद्धार करने वाला देव दुर्लभ गुरु समझे ॥ ९९ ॥

**यः क्षणेनात्मसामर्थ्यं स्वशिष्याय ददाति हि ।**
**क्रियायासादिरहितं स गुरुर्देवदुर्लभः ॥ १०० ॥**

जो क्षण भर में किसी क्रिया या परिश्रम के बिना अपनी शक्ति शिष्य को देता है वह गुरु देवताओं को भी दुर्लभ है ॥ १०० ॥

**य सद्यः प्रत्ययकरं सुलभञ्चात्मसौख्यदम् ।**
**ज्ञानोपदेशं कुरुते स गुरुर्देवदुर्लभः ॥ १०१ ॥**

जो तुरन्त आश्वस्त करता है और आत्मसुखदायक ज्ञानोपदेश देता है, वह 'गुरु' देवताओं को भी दुर्लभ है ॥ १०१ ॥

**द्वीपाद् द्वीपान्तरं देवि सञ्चरेद्यथा तथा ।**
**यो दद्यात् स गुरुर्ज्ञानमभ्यासादिविवर्जितम् ॥ १०२ ॥**

हे देवि ! जैसे एक द्वीप से दूसरे द्वीप में सहज ही जाना होता है, वैसे ही अभ्यासादि के बिना जो ज्ञान प्रदान करता है, वही श्रेष्ठ 'गुरु' है ।।१०२।।

**क्षुधितस्य यथा तृप्तिराहारादाशु जायते ।**
**तथोपदेशमात्रेण ज्ञानदो दुर्लभो गुरुः ॥ १०३ ॥**

जैसे भूखे को भोजन मिलने से तुरन्त तृप्ति होती है, वैसे ही उपदेश मात्र से ज्ञान देने वाला 'गुरु' दुर्लभ है ॥ १०३ ॥

**गुरवो बहवः सन्ति दीपवच्च गृहे गृहे ।**
**दुर्लभोऽयं गुरुर्देवि सूर्यवत् सर्वदीपकः ॥ १०४ ॥**

घर-घर में दीपक के समान गुरु बहुत हैं, किन्तु हे देवि ! सूर्य के समान समस्त ज्ञान का दाता गुरु दुर्लभ है ॥ १०४ ॥

**गुरवो बहवः सन्ति वेदशास्त्रादिपारगाः ।**
**दुर्लभोऽयं गुरुर्देवि परतत्त्वार्थपारगः ॥ १०५ ॥**

वेद-शास्त्रादि के मर्मज्ञ गुरु बहुत हैं, किन्तु हे देवि ! परतत्त्व के अर्थ को जानने वाला गुरु दुर्लभ है ॥ १०५ ॥

**गुरवो बहवः सन्ति आत्मनोऽन्यप्रदा भुवि ।**
**दुर्लभोऽयं गुरुर्देवि लोकेष्वात्मप्रकाशकः ॥ १०६ ॥**

पृथ्वी पर ऐसे गुरु बहुत हैं, जो अपना ज्ञान दूसरे को देते हैं किन्तु हे देवि ! संसार में आत्मज्ञान को प्रकाशित करने वाला गुरु दुर्लभ है ॥ १०६ ॥

**गुरवो बहवः सन्ति कुमन्त्रौषधिवेदिनः ।**
**निगमागमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥ १०७ ॥**

निन्द्य मन्त्र और औषधि को जानने वाले गुरु बहुत हैं किन्तु निगमागम शास्त्र में कथित मन्त्रों का ज्ञाता गुरु पृथ्वी दुर्लभ है ॥ १०७ ॥

**गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।**
**दुर्लभोऽयं गुरुर्देवि शिष्यदुःखापहारकः ॥ १०८ ॥**

शिष्य के धन को लेने वाले गुरु बहुत है किन्तु हे देवि ! उस शिष्य के दुःख को दूर करने वाला गुरु दुर्लभ है ॥ १०८ ॥

**वर्णाश्रमकुलाचारनिरता बहवो भुवि ।**
**सर्वसङ्कल्पहीनो यः स गुरुर्देवि दुर्लभः ॥ १०९ ॥**

वर्णाश्रम और कुलाचार में तत्पर गुरु पृथ्वी पर बहुत हैं किन्तु सभी सङ्कल्पों से रहित गुरु दुर्लभ है ॥ १०९ ॥

**गुरोर्यस्यैव सम्पर्कात् परानन्दोऽभिजायते ।**
**गुरुं तमेव वृणुयान्नापरं मतिमान्नरः ॥ ११० ॥**

जिस गुरु के सम्पर्क मात्र से परमानन्द का अनुभव हो, उसी को बुद्धिमान् व्यक्ति गुरु बनाए, अन्यों को नहीं ॥ ११० ॥

**यस्यानुभवपर्यन्तं बुद्धिस्तत्र प्रवर्त्तते ।**
**यस्यालोकनमात्रेण मुच्यते नात्र संशयः ॥ १११ ॥**

जिसकी बुद्धि अनुभव तक पहुँची हुई है, उसके दर्शन मात्र से मुक्ति मिलती है, इसमें सन्देह नहीं ॥ १११ ॥

**शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।**
**सा शङ्का भक्षिता येन स गुरुर्देवि दुर्लभः ॥ ११२ ॥**

शङ्का के द्वारा चराचर तीनों लोक नष्ट हो जाते हैं, हे देवि ! उस शङ्का को जो नष्ट करता है, वह गुरु दुर्लभ है ॥ ११२ ॥

**यथा वह्निसमीपस्थं नवनीतं विलीयते ।**
**तथा पापं विलीयते सदाचार्य समीपतः ॥ ११३ ॥**

जैसे अग्नि के पास रखा मक्खन पिघल कर विलीन हो जाता है, वैसे ही सद्गुरु के पास पाप विलीन हो जाता है ॥ ११३ ॥

**यथा दीप्तानलः काष्ठं शुष्कमार्द्रञ्च निर्दहेत् ।**
**तथा गुरुकटाक्षस्तु शिष्यपापं दहेत् क्षणात् ॥ ११४ ॥**

जैसे प्रज्वलित अग्नि सूखी और गीली लकड़ी को क्षण भर में भस्म कर देती है, वैसे ही गुरु ( कृपा ) का कटाक्ष शिष्य के पाप को क्षण भर में नष्ट कर देता है ॥ ११४ ॥

**यथा महानिलोद्धूतं तूलं दशदिशो व्रजेत् ।**
**तथैव गुरुकारुण्यात् पापराशिः पलायते ॥ ११५ ॥**

जैसे तेज हवा से उड़ाई हुई रुई दस दिशाओं में फैल जाती है, वैसे ही गुरु की करुणा से पाप राशि उड़ा दी जाती है ॥ ११५ ॥

**दीपदर्शनमात्रेण प्रणश्यति तमो यथा ।**
**सद्गुरोर्दर्शनाद्देवि तथाऽज्ञानं विनश्यति ॥ ११६ ॥**

दीप के दर्शनमात्र से जैसे अन्धकार का नाश हो जाता है, हे देवि ! वैसे ही सद्गुरु के दर्शन मात्र से अज्ञान नष्ट हो जाता है ॥ ११६ ॥

**सर्वलक्षणसम्पन्नो वेदशास्त्रविधानवित् ।**
**सर्वोपायविधानज्ञस्तत्त्वज्ञानी गुरुः स हि ॥ ११७ ॥**

सर्वलक्षणसम्पन्न, वेदशास्त्रविधि एवं विधान को जानने वाले और सभी उपायों के ज्ञाता, तत्त्वज्ञानी ही गुरु है ॥ ११७ ॥

**पूजाहोमाश्रमाचारतपस्तीर्थव्रतादिकम् ।**
**मन्त्रागमादिविज्ञानं तत्त्वहीनस्य निष्फलम् ॥ ११८ ॥**

जो तत्त्व को नहीं जानता, उसकी पूजा, होम, आश्रमाचार, तप, तीर्थ, व्रतादि और मन्त्रागमादि का विज्ञान निष्फल होता है ॥ ११८ ॥

**स्वयं वेद्ये परे तत्त्वे स्वात्मानं वेत्ति निश्चलः ।**
**आत्मनोऽनुग्रहो नास्ति परस्यानुग्रहः कथम् ॥ ११९ ॥**

परम तत्त्व को स्वयं जानने पर ही निश्चल आत्म ज्ञान होता है । जिसकी आत्मा पर अनुग्रह नहीं हुआ है, वह दूसरे पर अनुग्रह कैसे कर सकता है ? ॥ ११९॥

**ब्रह्माकारं मनोरूपं प्रप्यक्षं स्वतनुस्थितम् ।**
**यो न जानाति चान्यस्य कथं मोक्षं ददात्यसौ ॥ १२० ॥**

अपने शरीर में स्थित मन के प्रत्यक्ष ब्रह्मात्मक स्वरूप को जो नहीं जानता, वह दूसरे को मोक्ष कैसे दे सकता है ? ॥ १२० ॥

**सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृतः ।**
**तस्मात्तत्त्वविदेवेह मुक्तो मोचक एव च ॥ १२१ ॥**

**तत्त्वज्ञानी ही वास्तविक गुरु**—सर्व लक्षणों से हीन होता हुआ भी तत्त्व ज्ञानी ही 'गुरु' माना गया है क्योंकि तत्त्व ज्ञाता ही इस संसार में मुक्ति दाता है।

**यस्तत्त्वविन्महेशानि स पशुं बोधयत्यपि ।**
**तत्त्वहीनात् कुतोऽध्यात्मतत्त्वज्ञानपरिग्रहः ॥ १२२ ॥**

हे महेशानि ! जो तत्त्वज्ञ है, वही साधुजनों को प्रबुद्ध करता है । तत्त्वहीन को अध्यात्म का तत्त्वज्ञान कैसे होगा ॥ १२२ ॥

**तत्त्वज्ञैरुपदिष्टा ये तत्त्वाज्ञस्ते न संशयः ।**
**पशुभिश्चोपदिष्टा ये देवि ते पशवः स्मृताः ॥ १२३ ॥**

तत्त्वज्ञ से उपदेश पाने वाले तत्त्वज्ञ होते हैं, इसमें सन्देह नहीं । हे देवि ! पशुओं से उपदेश पाने वाले पशु कहे जाते हैं ॥ १२३ ॥

**विद्धस्तु वेधयेद्देवि नाविद्धो वेधको भवेत् ।**
**मुक्तस्तु मोचयेद् बद्धं न मुक्तो मोचकः कथम् ॥ १२४ ॥**

हे देवि ! विद्ध ही वेधन करता है, अविद्ध वेधक नहीं होता । मुक्त ही बद्ध को छुड़ाता है । जो मुक्त नहीं है, वह मोचक कैसे होगा ? ॥ १२४॥

**अभिज्ञश्चोद्धरेन्मूर्ख न मूर्खो मूर्खमुद्धरेत् ।**
**शिलां सन्तारयेन्नौर्हि किं शिला तारयेच्छिलाम् ॥ १२५ ॥**

विज्ञ ही मूर्ख का उद्धार करता है; मूर्ख मूर्ख का उद्धार नहीं करता । नौका ही शिला को पार लगाती है; शिला शिला को पार नहीं लगाती ।

**तत्त्वहीनं गुरुं लब्ध्वा केवलं भव तत्परः ।**
**इहामुत्र फलं किञ्चित् स नरो नाप्नुयात् प्रिये ॥ १२६ ॥**

केवल संसार में लवलीन तत्त्वहीन गुरु को पाकर, हे प्रिये ! मनुष्य इस लोक में या परलोक में कुछ भी फल नहीं पाता ॥ १२६ ॥

**शैवे गुरुत्रयं प्रोक्तं वैष्णवे गुरुपञ्चकम् ।**
**वेदशास्त्रेषु शतशो गुरुरेकः कुलान्वये ॥ १२७ ॥**

शैव मत में तीन प्रकार के गुरु कहे जाते हैं । वैष्णव मत में पाँच और वेदशास्त्रों में सैकड़ों गुरु कहे गये हैं । किन्तु कुलशास्त्र में एक ही गुरु बताया गया है ॥ १२७ ॥

**प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ।**
**शिक्षको बोधकश्चैव षडेते गुरुवः स्मृताः ॥ १२८ ॥**

१. प्रेरक, २. सूचक, ३. वाचक, ४. दर्शक, ५. शिक्षक और ६. बोधक—ये छः गुरु माने गये हैं ॥ १२८ ॥

**पञ्चैते कार्यभूताः स्युः कारणं बोधको भवेत् ।**
**पूर्णाभिषेककर्त्ता यो गुरुस्तस्यैव पादुका ।**
**पूजनीया महेशानि बहुत्वेऽपि न संशयः ॥ १२९ ॥**

इनमें से पाँच तो मात्र कार्यभूत गुरु हैं, छठा 'बोधक' गुरु कारण होता है। बहुत गुरुओं के होने पर भी जो गुरु पूर्णाभिषेक करता है, उसी की पादुका, हे महेशानि ! पूजनीया है, इसमें सन्देह नहीं ॥ १२९ ॥

**श्रीगुरु लक्षणोपेतं संशयच्छेदकारकम् ।**
**लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥ १३० ॥**

गुरु के लक्षणों से समन्वित एवं संशय को दूर करने वाले ज्ञानदायक गुरु को पाकर हे देवि ! दूसरे गुरु का आश्रय नहीं लेना चाहिये ॥ १३० ॥

**अनभिज्ञं गुरुं प्राप्य सदा संशयकारकम् ।**
**गुर्वन्तरन्तु गत्वा स नैतद्दोषेण लिप्यते ॥ १३१ ॥**

यदि गुरु अनभिज्ञ हो, उसके द्वारा संशय का निराकरण न होता हो, तो दूसरे गुरु के पास जाने में दोष नहीं है ॥ १३१ ॥

**मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।**
**ज्ञानलुब्धस्तथा शिष्यः गुरोगुर्वन्तरं व्रजेत् ॥ १३२ ॥**

जिस प्रकार शहद का लोभी भौंरा एक फूल से दूसरे फूल को जाता है, उसी प्रकार ज्ञान के लोभी शिष्य को एक गुरु के पास से दूसरे गुरु के पास जाना चाहिये ॥ १३२ ॥

**इति ते कथितं किञ्चिल्लक्षणं गुरुशिष्ययोः ।**
**समासेन कुलेशानि किम्भूयः श्रोतुमिच्छसि ॥ १३३ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे गुरुशिष्य-लक्षणं नाम त्रयोदशोल्लासः ॥ १३ ॥**



इस प्रकार संक्षेप में मैंने आपसे गुरु शिष्य के कुछ लक्षण कहे । अब हे कुलेशानि ! आप और क्या सुनना चाहती हैं ? ॥ १३३ ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में गुरुशिष्य-लक्षणकथन नामक तेरहवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ १३ ॥**



# अथ चतुर्दशोल्लासः

**श्री देव्युवाच**

**कुलेश श्रोतुमिच्छामि परीक्षां गुरुशिष्ययोः ।**
**उपदेशक्रमं दीक्षाभेदांश्च वद मे प्रभो ॥ १ ॥**

**गुरुशिष्य परीक्षा**—श्री देवी ने कहा—हे कुलेश ! मैं गुरु और शिष्य को परीक्षा के सम्बन्ध में सुनना चाहती हूँ । साथ ही उपदेश का क्रम और दीक्षा के भेद भी मुझे बताइये ॥ १ ॥

**ईश्वर उवाच**

**शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।**
**तस्य श्रवणमात्रेण चित्तशुद्धिः प्रजायते ॥ २ ॥**

ईश्वर ने कहा—हे देवि ! सुनिए, जो आपने मुझसे पूछा है, उसे मैं बताऊँगा, जिसके सुनने मात्र से चित्त की शुद्धि होती है ॥ २ ॥

**विना दीक्षां न मोक्षः स्यात्तदुक्तं शिवशासने ।**
**सा च न स्याद्विनाचार्यमित्याचार्यपरम्परा ॥ ३ ॥**

**दीक्षा बिना मोक्ष नहीं, आचार्य बिना दीक्षा नहीं**—शिव के शासन में यह कहा गया है कि दीक्षा के बिना साधक का मोक्ष नहीं होता और वह दीक्षा आचार्य परम्परा के बिना नहीं होती ॥ ३ ॥

**तस्मात् सिद्धान्तं सम्प्राप्य सम्प्रदायादिहेतुभिः ।**
**अन्तरेणोपदेष्टारं मन्त्राः स्युर्निष्फला यतः ॥ ४ ॥**
**देवास्तमेव शंसन्ति पारम्पर्यप्रवर्त्तकम् ।**
**गुरुं मन्त्रागमाभिज्ञं समयाचारपालकम् ॥ ५ ॥**

अतः सम्प्रदाय आदि साधनों से सिद्धान्त को जान कर आन्तरिक उपदेश देने वाले को प्राप्त करे, अन्यथा मन्त्र निष्फल होते हैं । परम्परा के प्रवर्तक, मन्त्र और आगम के ज्ञाता और समयाचार के पालन करने वाले गुरु को ही देवता मानते हैं ॥ ४-५ ॥

**गुरुः शिष्याधिकारार्थं विरक्तोऽपि शिवाज्ञया ।**
**किञ्चित्कालं विधायेत्थं स्वशिष्याय समर्पयेत् ॥ ६ ॥**

शिव की आज्ञा से विरक्त होते हुये भी गुरु कुछ समय में शिष्य के अधिकार को समझकर उसे अधिकार देते हैं ॥ ६ ॥

**तस्यार्पिताधिकारस्य योगः साक्षात् परे शिवे ।**
**देहान्ते शाश्वती मुक्तिरिति शङ्करभाषितम् ॥ ७ ॥**

**दीक्षा से यहाँ परशिव से मिलन और देहान्त होने पर मुक्तिलाभ**—गुरु द्वारा अधिकार पाने वाले शिष्य को साक्षात् परशिव से 'योग' की प्राप्ति होती है और देहान्त होने पर उसे शाश्वत मोक्ष मिलता है, यह शङ्कर का वचन है ॥ ७ ॥

**तस्मात् सर्वप्रयत्नेन साक्षात्परशिवोदितम् ।**
**सम्प्रदायमविच्छिन्नं सदा कुर्यात् गुरुः प्रिये ॥ ८ ॥**

अत: हे प्रिये ! सब प्रयत्न करके साक्षात् परशिव द्वारा निर्दिष्ट सम्प्रदाय को गुरु सदा अग्रसर करता रहे ॥ ८ ॥

**शक्तिसिद्धिसुसिद्ध्यर्थं परीक्ष्य विधिवद् गुरुः ।**
**पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत् ॥ ९ ॥**

**मन्त्रोपदेश की विधि**—शक्ति की सिद्धि को सुनिश्चित करने के लिये गुरु विधिपूर्वक शिष्य की परीक्षा लेकर तब उसे उपदेश करे अन्यथा मन्त्र निष्फल होता है ॥ ९ ॥

**अन्यायेन तु यो दद्याद् गृहणात्यन्यायतश्च यः ।**
**ददता गृहणता देवि कुलशापो भविष्यति ॥ १० ॥**

जो अन्याय से मन्त्र देता है और जो अन्याय से लेता है, हे देवि ! वे मन्त्रदाता और मन्त्र प्राप्तकर्ता दोनों ही कुलशाप को प्राप्त करते हैं ॥ १० ॥

**गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ।**
**उपदेशं ददद् गृहणन् प्राप्नुयातां पिशाचताम् ॥ ११ ॥**

**बिना परीक्षा दीक्षादाता गुरु व शिष्य दोनों दोषी**—यदि कोई गुरु और शिष्य मोहवश एक दूसरे की परीक्षा लिये बिना ही उपदेश देते और लेते है, तो वे दोनों ही पिशाच होते हैं ॥ ११ ॥

**अशास्त्रीयोपदेशञ्च यो गृहणाति ददाति हि ।**
**भुञ्जाते तावुभौ घोरान्नरकानेकविंशतिम् ॥ १२ ॥**

अशास्त्रीय उपदेश को जो देते लेते हैं, वे दोनों ही अनेक वर्षों तक घोर नरक में वास करते हैं ॥ १२ ॥

**असंस्कृतोपदेशञ्च यः करोति स पातकी ।**
**विनश्यति च तन्मन्त्रं सैकते शालिबीजवत् ॥ १३ ॥**

जो असंस्कृत उपदेश देता है, वह पापी है और उसका मन्त्र बालू में शालि ( धान ) के बीज के समान नष्ट होता है ॥ १३ ॥

**अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन ।**
**तस्मात् परीक्ष्य कर्त्तव्यमन्यथा निष्फलं भवेत् ॥ १४ ॥**

अयोग्य के पास मन्त्र विज्ञान कभी नहीं ठहरता, अतः परीक्षा लेकर ही उपदेश करे, अन्यथा निष्फल होता है ॥ १४ ॥

**कृत्वा समयदीक्षाञ्च दत्त्वा समयपादुकाम् ।**
**सन्निधायात्मनः शिष्यं वदेन्मन्त्रं न चान्यथा ॥ १५ ॥**

**समयदीक्षा के बाद उपदेश**—समयदीक्षा कर समयपादुका देकर शिष्य को अपने पास बैठाकर मन्त्र कहे, अन्यथा मन्त्र न कहे ॥ १५ ॥

**सच्छिष्यायातिभक्ताय यज्ज्ञानमुपदिश्यते ।**
**तज्ज्ञानं तत्तुशास्त्रार्थं तद्विदध्यादखण्डितम् ॥ १६ ॥**
**असच्छिष्येष्वभक्तेषु यज्ज्ञानमुपदिश्यते ।**
**तत् प्रयात्यपवित्रत्वं गोक्षीरं श्वघृतादिव ॥ १७ ॥**

अत्यन्त भक्त, सत्‌शिष्य को जो ज्ञानोपदेश किया जाता है, वह ज्ञान अखण्ड शास्त्रार्थ का विधायक होता है किन्तु भक्तिहीन, असत् शिष्य को जो ज्ञान दिया जाता है, वह कुत्ते द्वारा स्पृष्ट गोदुग्ध के समान अपवित्र होता है ।

**धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ।**
**देवताशापमाप्नोति कृतञ्च निष्फलं भवेत् ॥ १८ ॥**

धन की इच्छा, भय एवं लोभादि से यदि अयोग्य को दीक्षा दी जाती है, तो वह निष्फल होती है और देवता का शाप मिलता है ॥ १८ ॥

**ज्ञानेन क्रियया वापि गुरु शिष्यं परीक्षयेत् ।**
**संवत्सरं तदर्द्धं वा तदर्द्धं वा प्रयत्नतः ॥ १९ ॥**

**शिष्यपरीक्षा की विधि**—शिष्य के ज्ञान और क्रिया दोनों की परीक्षा एक वर्ष तक या छः मास तक या तीन मास तक गुरु यत्न करके ले ॥१९॥

**उत्तमांश्चाधमे कुर्यान्नीचानुत्तमकर्मणि ।**
**प्राणद्रव्यप्रणामाद्यैरादेशैश्च स्वयं समैः ॥ २० ॥**

प्राण ( जीवन ), द्रव्य ( धन ) एवं प्रणामादि आदेशों द्वारा निम्न कर्मों में उत्तम और उत्तम कर्मों में निम्न क्रियाएँ गुरु स्वयं करे ॥ २० ॥

**तत्कर्मसूचकैर्वाक्यैर्मायाभिः क्रूरचेष्टितैः ।**
**पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः ॥ २१ ॥**
**आकृष्टस्ताडितो वापि यो विषादं न याति च ।**
**गुरुः कृपां करोतीति मुदा सञ्चिन्तयेत् सदा ॥ २२ ॥**
**श्रीगुरोः स्मरणे चापि कीर्त्तनं दर्शनेऽपि च ।**
**वन्दने परिचर्यायामाह्वाने प्रेषणे प्रिये ॥ २३ ॥**
**आनन्दकम्परोमाञ्चस्वरनेत्रादिविक्रियाः ।**
**येषां स्युस्तेऽत्र योग्याश्च दीक्षासंस्कारकर्मणि ॥ २४ ॥**

उन कर्मों के सूचक वाक्यों, मायाओं, क्रूर चेष्टाओं द्वारा पक्षपात और उदासीनता से बारम्बार शिष्य को आकृष्ट करे और ताड़ित होकर भी जो शिष्य दुःखी न हों, अपितु सदा प्रसन्न होकर यही सोचें कि 'गुरु कृपा कर रहे हैं' और श्रीगुरु का स्मरण, कीर्तन, दर्शन, वन्दन, परिचर्या एवं आज्ञा पालनादि करने में जिन्हें रोमाञ्च, कम्प, गद्‌गद् स्वर, डबडबाते नेत्रादि के साथ आनन्द का अनुभव हो, वे शिष्य इस दीक्षासंस्कार कर्म के योग्य हैं ॥ २३-२४ ॥

**शिष्योऽपि लक्षणैरेतैः कुर्याद् गुरुपरीक्षणम् ।**
**आनन्दाद्यैर्जपस्तोत्रध्यानहोमार्चनादिषु ॥ २५ ॥**
**ज्ञानोपदेशसामर्थ्यं मन्त्रसिद्धिमपीश्वरि ।**
**वेधकत्वं परिज्ञाय शिष्यो भूयान्न चान्यथा ॥ २६ ॥**

**शिष्य द्वारा गुरु-परीक्षा**—शिष्य भी निम्न गुणों से युक्त गुरु की परीक्षा करके ही शिष्य बने । जप, स्तोत्र, ध्यान, होम एवं पूजन आदि के करने में जिसे आनन्द मिलता हो, ज्ञानोपदेश करने को सामर्थ्य जिसमें हो और हे ईश्वरि ! जिसमें मन्त्रसिद्धि और वेधकत्व का परिज्ञान हो—इन लक्षणों से गुरु को पहचान कर शिष्य बने, अन्यथा नहीं ॥ २५-२६ ॥

**आदिमध्यावसानेषु योग्याः शक्तिनिपातिताः ।**
**अधमा मध्यमाः श्रेष्ठाः शिष्या देवि प्रकीर्त्तिताः ॥ २७ ॥**

**शिष्यों के तीन प्रकार**—हे देवि ! आदि ( आरम्भ ), मध्य और अवसान ( अन्त ) में शक्ति-निपात के योग्य तीन प्रकार के शिष्य क्रमशः १. अधम, २. मध्यम और ३. श्रेष्ठ कहे गये हैं ॥ २७ ॥

**आदौ भक्तिर्भवेद्देवि दीक्षार्थं समुदन्ति ये ।**
**पुनर्विपुलहृष्टास्ते आदियोग्या इतीरिताः ॥ २८ ॥**

**आदि योग्य (अधम)**—जिन्हें आरम्भ में भक्ति होती है, जो दीक्षा के लिये उत्सुक होते हैं और दीक्षा पाकर अति हर्षित होते हैं । वे 'आदियोग्य' शिष्य कहे गए हैं ॥ २८ ॥

**दीक्षासमयसम्प्राप्ता ज्ञानविज्ञानवर्जिताः ।**
**भक्त्या प्रध्वस्तपर्याया मध्ययोग्याश्च ते स्मृताः ॥ २९ ॥**

**मध्य योग्य (मध्यम)**—मध्य योग्य वे हैं, जो दीक्षा के समय में आकर ज्ञान अथवा अज्ञान से रहित होकर जो भक्ति द्वारा संशयहीन होते हैं, वे शिष्य 'मध्यमयोग्य' कहे गए हैं ॥ २९ ॥

**आदौ भक्तिविहीना ये मध्यभक्तास्तु ये नराः ।**
**अन्तप्रवृद्धभक्ताश्च अन्तयोग्या भवन्ति ते ।**

**अन्त योग्य (श्रेष्ठ)**—जो नर आदि में भक्तिहीन रहकर मध्य में भक्तिमान हो अन्त में अति भक्त होते हैं वे 'अन्तयोग्य' शिष्य होते हैं ॥ ३०॥

**उत्तमज्ञानसंज्ञाश्चेत्युपदेशस्त्रिधा प्रिये ॥ ३० ॥**

**उपदेश के तीन भेद**—हे प्रिये ! १. उत्तम कर्म, २. धर्म और ३. ज्ञान—ये तीन भेद उपदेश के हैं ॥ ३० ॥

**यथा पिपीलिका मन्दमन्दं वृक्षाग्रगं फलम् ।**
**चिरेणाप्नोति कर्मोपदेशश्चापि तथा स्मृतः ॥ ३१ ॥**

जैसे चींटी धीरे-धीरे वृक्ष के ऊपर लगे फल तक चिरकाल में पहुँचती है वैसा ही कर्म का उपदेश माना गया है ॥ ३१ ॥

**यथा कपिश्च शाखायां शाखामुल्लंघ्य यत्नतः ।**
**फलं प्राप्नोति धर्मस्य चोपदेशस्तथा प्रिये ॥ ३२ ॥**

हे प्रिये ! जैसे बन्दर यत्नपूर्वक एक डाली से दूसरी डाली को पारकर फल को प्राप्त करता है, वैसा ही क्रम धर्म के उपदेश का है ॥ ३२ ॥

**यथा वियद्गमः शीघ्रं फल एव निषीदति ।**
**तथा ज्ञानोपदेशश्च कथितः कुलनायिके ॥ ३३ ॥**

हे कुलनायिके ! जैसे आकाशगामी शीघ्र ही फल तक पहुँच जाता है, वैसे ही ज्ञानोपदेश की महिमा कही गई है ॥ ३३ ॥

**स्पर्शाख्या देवि दृक्संज्ञा मानसाख्या महेश्वरि ।**
**क्रियायासादिरहिता देवा दीक्षा त्रिधा स्मृता ॥ ३४ ॥**

**तीन प्रकार की क्रियारहिता दीक्षा**—हे महेश्वरि ! हे देवि ! कर्म से रहित दीक्षा तीन प्रकार की है—१. स्पर्श, २. दृक् और ३. मानस ॥ ३४ ॥

**यथा पक्षी स्वपक्षाभ्यां शिशून् संवर्द्धयेच्छनैः ।**
**स्पर्शदीक्षोपदेशच्च तादृशः कथितः प्रिये ॥ ३५ ॥**

जैसे चिड़िया अपने पंखों से बच्चों को धीरे-धीरे पालती है, हे प्रिये ! 'स्पर्शदीक्षा' भी वैसी ही कही गई है ॥ ३५ ॥

**स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत् ।**
**दृग्भ्यां दीक्षोपदेशश्च तादृशः परमेश्वरि ॥ ३६ ॥**

अपने बच्चों को जैसे मछली केवल देखकर ही पालती है, हे परमेश्वरि! उसी प्रकार 'दृग्दीक्षा' का उपदेश है ॥ ३६ ॥

**यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत् ।**
**वेधदीक्षोपदेशश्च मानसः स्यात् तथाविधः ॥ ३७ ॥**

जैसे कछुई (कच्छपी) अपने बच्चों का पालन केवल ध्यान द्वारा करती है, उसी प्रकार मानस 'वेधदीक्षा' का उपदेश होता है ॥ ३७ ॥

**शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ।**
**यत्र शक्तिर्न पतति तत्र सिद्धिर्न जायते ॥ ३८ ॥**

शक्तिपात की मात्रा के अनुसार शिष्य पर अनुग्रह करे । जिस पर शक्तिपात नहीं होता, उसे सिद्धि नहीं मिलती ॥ ३८ ॥

**क्रियावर्णकलास्पर्शवाग्दृङ्मानससंज्ञया ।**
**दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्त्तिता ॥ ३९ ॥**
**समयाख्या विशेषा च साधिका पुत्रिकाह्वया ।**
**वेधका पूर्णसंज्ञा चाचार्या निर्वाणसंज्ञिका ॥ ४० ॥**

**सात प्रकार की मोक्षदायिनी दीक्षा**— हे देवि ! मोक्ष प्रदान करने वाली दीक्षा सात प्रकार कही गई है—१. क्रिया, २. वर्ण, ३. कला, ४. स्पर्श, ५. वाग्, ६. दृङ् और ७. मानस संज्ञक है । इनके विशेष नाम क्रमशः ये हैं—१. समया, २. साधिका, ३. पुत्रिका, ४. वेधका, ५. पूर्णा, ६. चर्चा और ७. निर्वाण ॥ ३९-४० ॥

क्रियादीक्षाष्टधा प्रोक्ता कुण्डमण्डपपूर्विका ।
कलसादिसमायुक्ता कर्त्तव्या गुरुणा बहिः ।
देवेशि देहशुद्ध्यर्थं पूर्वोक्तविधिनाचरेत् ॥ ४१ ॥
वर्णदीक्षा त्रिधा प्रोक्ता द्विचत्वारिंशदक्षरैः ।
पञ्चाशद्वर्णैर्वा देवि द्विषष्टिलिपिभिस्तु ता ॥ ४२ ॥

कुण्ड, मण्डप और कलश आदि से युक्त 'क्रियादीक्षा' आठ प्रकार की है, जिसे बाह्यपूजा विधि से गुरु को करना चाहिये । हे देवेशि ! पूर्वोक्त विधि का देह शुद्धि के लिए आचरण करना चाहिए । 'वर्णदीक्षा' ४२, ५० या ६२ अक्षरों के ( न्यास के ) भेद से तीन प्रकार की है ॥ ४२ ॥

वर्णान् शिष्यतनौ न्यस्य प्रतिलोमेन संहरेत् ।
परमात्मनि संयोज्य तच्चैतन्यं गुरुः प्रिये ॥ ४३ ॥

हे प्रिये ! इस दीक्षा में शिष्य के शरीर में वर्णों का न्यास कर प्रतिलोम से उन्हें लय कर शिष्य के चैतन्य को परमात्मा से युक्त करे ॥ ४३ ॥

तस्मादुत्पाद्य तान् वर्णान् न्यसेच्छिष्यतनौ पुनः ।
सृष्टिक्रमेण विधिना चैतन्यञ्च प्रयोजयेत् ॥ ४४ ॥

पुनः उन वर्णों को उससे उत्पन्न कर शिष्य के शरीर में उनका न्यास करे और सृष्टिक्रम की विधि से चैतन्य को प्रयुक्त करे ॥ ४४ ॥

जायते देवताभावः परानन्दमयः शिशोः ।
एषा वर्णमयी प्रोक्ता दीक्षा पाशहरा प्रिये ॥ ४५ ॥

इस प्रकार शिष्य में देवभाव उत्पन्न होकर वह परानन्दमय होता है । हे प्रिये! यह वर्णमयी दीक्षा पाशों को काटने वाली (पापहारिणी) कही गईं हैं ।

कलादीक्षा त्रिधा ज्ञेया कर्त्तव्या विधिवत् प्रिये ।
निवृत्तिर्जानुपर्यन्तं तलादारभ्य संस्थिता ॥ ४६ ॥
जानुनोर्नाभिपर्यन्तं प्रतिष्ठा तिष्ठति प्रिये ।
नाभेः कण्ठावधि व्याप्ता विद्या शान्तिस्ततः परम् ॥ ४७ ॥
कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्माच्छिरोऽवधि ।
शान्त्यतीता कला चैषा कलाव्याप्तिरितीरिता ॥ ४८ ॥

हे प्रिये ! 'कलादीक्षा' तीन प्रकार की है, जिसे विधिवत् करे । १. पैरों के तलवे से लेकर घुटनों तक 'निवृत्ति', २. घुटनों से नाभि तक 'प्रतिष्ठा', ३. नाभि के कण्ठ तक 'विद्या', ४. कण्ठ से ललाट तक 'शान्ति',

५. ललाट से शिर तक 'शान्त्यतीता'—ये पाँच कलाएँ स्थित हैं । यही कलाएँ 'कलाव्याप्ति' नाम से जानी जाती हैं ॥ ४६-४८ ॥

**संहारक्रमयोगेन स्थानात् स्थानान्तरं प्रिये ।**
**संयोज्य विधिवत् सम्यग्विधिवेत्ता शिरोऽवधि ॥ ४९ ॥**
**इयं प्रोक्ता कुलेशानि दिव्यभावप्रदायिनी ।**
**अष्टत्रिंशत्कलाभिर्वा पञ्चाशद्भिरथापि वा ॥ ५० ॥**

हे प्रिये ! संहार क्रम के योग से एक स्थान से दूसरे स्थान में उक्त कलाओं के अनुक्रम के अनुसार शिरपर्यन्त विधिवत् संयोजन किया जाता है । हे कुलेशानि ! इससे शिष्य को दिव्यभाव प्राप्त होता है ॥ ४९-५० ॥

**तत्त्वन्यासक्रमेणैव सृष्टिसंहारमार्गतः ।**
**ज्ञात्वा गुरुमुखाद्देवि शिष्ये संयोज्य वेधयेत् ॥ ५१ ॥**

अथवा हे देवि ! ३८ या ५० कलाओं से तत्त्वन्यास के क्रम से सृष्टि संहार मार्ग से गुरुमुख से जानकर शिष्य में संयोजन कर वेधन करे ॥ ५१ ॥

**जायते देवताभावो योगिनीवीरमेलनम् ।**
**कलादीक्षा समुद्दिष्टा पशुपाशापहारिणी ॥ ५२ ॥**

इससे देवभाव उत्पन्न होकर योगिनी-वीर के मिलन का आनन्द मिलता है। यह 'कलादीक्षा' पशुपाशों को नष्ट करने वाली कही गई है ॥ ५२ ॥

**हस्ते शिवं गुरुं ध्यात्वा जपेन्मूलाङ्गमालिनीम् ।**
**गुरुः स्पृशेच्छिष्यतनुं स्पर्शदीक्षा भवेदियम् ॥ ५३ ॥**

श्री गुरुदेव अपने हाथ में शिव का ध्यान कर मूलाङ्गमालिनी का जप कर शिष्य के शरीर का स्पर्श करे । यह 'स्पर्शदीक्षा' है ॥ ५३ ॥

**चित्तं तत्त्वे समाधाय परतत्त्वोपबृंहितान् ।**
**उच्चरेत् संहतान्मन्त्रान् वाग्दीक्षेति निगद्यते ॥ ५४ ॥**

अपने चित्त को तत्त्व में स्थित कर परतत्त्व से उत्प्रेरित होकर गुरु संहत रूप से मन्त्रोपदेश करे । यह 'वागदीक्षा' है ॥ ५४ ॥

**निमील्य नयने ध्यात्वा परतत्त्वप्रसन्नधीः ।**
**सम्यक् पश्येद्गुरुः शिष्यं दृग्दीक्षा च भवेत् प्रिये ॥ ५५ ॥**

दोनों आँखें बन्द कर परतत्त्व का ध्यान करते हुये प्रसन्नबुद्धि से गुरुदेव शिष्य को अच्छी तरह देखें । हे प्रिये ! यह 'दृग्दीक्षा' होती है ॥ ५५ ॥

गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ।
सद्यः सञ्जायते ज्ञानं सा दीक्षा शाम्भवी मता ॥ ५६ ॥

गुरु के दर्शन, भाषण, स्पर्श मात्र से जब शिष्य को तुरन्त ज्ञान होता है, तो वह 'शाम्भवी दीक्षा' मानी जाती है ॥ ५६ ॥

मनोदीक्षा द्विधा प्रोक्ता तीव्रा तीव्रतरापि च ।
अध्वानं षड्विधं ज्ञात्वा शिष्यदेहे स्मरन् प्रिये ॥ ५७ ॥
कल्पयेद्भुवनं तत्त्वं कलां वर्णं पदं मनुम् ।
आजानुनाभिहृत्कण्ठतालुमूर्द्धान्तमम्बिके ॥ ५८ ॥
गुरूपदिष्टमार्गेण वेधं कुर्याद्विचक्षणः ।
पाशयुक्तः क्षणाच्छिष्यश्छिन्नपाशस्तदा भवेत् ।

'मनोदीक्षा' १. तीव्रा और २. तीव्रतरा दो प्रकार की है । हे प्रिये ! शिष्य के शरीर में १. भुवन, २. तत्त्व, ३. कला, ४. वर्ण, ५. पद, ६. मन्त्र—इन छः अध्वानों का स्मरण करते हुए क्रमशः १. जानु, २. नाभि, ३. हृदय, ४. कण्ठ, ५. तालु और ६. मूर्द्धा में हे अम्बिके ! गुरुपदिष्ट मार्ग से वेध करे ॥ ५७-५९ ॥

एषा मुक्तिप्रदा प्रोक्ता तीव्रदीक्षा कुलेश्वरि ॥ ५९ ॥

इससे क्षण मात्र में ही शिष्य पापों से मुक्त होकर उसी समय परानन्दमय को प्राप्त होता है । हे कुलेश्वरि ! हे देवि ! यह मुक्तिप्रदा 'तीव्रदीक्षा' कही गई है ॥ ५९ ॥

देवि तीव्रतरा चापि गुरुणा स्मृतमात्रतः ।
सम्यक् संवेधिनः शिष्यश्छिन्नपापस्तदा भवेत् ॥ ६० ॥
वाह्यव्यापारनिर्मुक्तो भूमौ पतति तत्क्षणात् ।
सञ्जातदिव्यभावोऽसौ सर्वं जानाति शाम्भवि ॥ ६१ ॥
यदस्ति वेधकाले तत् स्वयमेवानुभूयते ।
प्रबुद्धः सन् न शक्नोति तत् सुखं वक्तुमीश्वरि ॥ ६२ ॥

'तीव्रतरा दीक्षा' में गुरु के द्वारा स्मृतिमात्र से सम्यक् रूप से संवेधित होकर शिष्य उसी समय पापमुक्त हो जाता है और बाह्य क्रियाओं से शून्य होकर पृथ्वी पर तुरन्त गिर पड़ता है । हे शाम्भवि ! दिव्यभाव को प्राप्त कर वह सर्वज्ञ हो जाता है । वेधकाल में जो होता है, उसे वह स्वयं ही अनुभव करता है । हे ईश्वरि ! प्रबुद्ध होने पर उस सुख का वर्णन करने में वह समर्थ नहीं हो पाता ॥ ६०-६२ ॥

वेधविद्धः शिवः साक्षान्न पुनर्जन्मभाग् भवेत् ।
एषा तीव्रतरा दीक्षा भवबन्धविमोचनी ।
शिवभावप्रदा साक्षात् त्वां शपे कुलनायिके ॥ ६३ ॥

इस प्रकार वेधविद्ध शिष्य साक्षात् शिव होता है, उसका पुनर्जन्म नहीं होता। यह संसार के बन्धन से छुड़ाने वाली 'तीव्रतरा दीक्षा' है । यह साक्षात् शिवभाव प्रदान करती है । हे कुलनायिके ! इस प्रकार से मैं आपसे दृढ़तापूर्वक कहता हूँ ॥ ६३ ॥

आनन्दश्चैव कम्पश्चेद्भवो घूर्णा कुलेश्वरि ।
निद्रा मूर्च्छा च वेधस्य षडवस्थाः प्रकीर्त्तिताः ॥ ६४ ॥
दृश्यन्ते षड्गुणा ह्येते वेधकाले कुलेश्वरि ।
वेधितो यत्र कुत्रापि तिष्ठेन्मुक्ता न संशयः ॥ ६५ ॥

**वेध की छः अवस्थाएँ**—हे कुलेश्वरि ! वेध की छः अवस्थायें कही गई हैं—१. आनन्द, २. कम्प, ३. उद्भव, ४. घूर्णा, ५. निद्रा और ६. मूर्च्छा। वेध दीक्षा होने पर शिष्य में ये ६ गुण दिखाई पड़ते हैं । हे कुलेश्वरि! वेधित जहाँ कहीं भी रहे, मुक्त रहता है, इसमें सन्देह नहीं ॥ ६४-६५ ॥

वेधदीक्षाकरो लोके श्रीगुरुर्दुर्लभः प्रिये ।
शिष्योऽपि दुर्लभस्तादृक् पुण्ययोगेन लभ्यते ।
न दद्याद् यस्य कस्यापि इत्याज्ञा परमेश्वरि ॥ ६६ ॥

हे प्रिये ! वेधदीक्षा करने वाला गुरु संसार में दुर्लभ है, वैसा शिष्य भी दुर्लभ है, पुण्ययोग से ही मिलता है । अतः हे परमेश्वरि ! यह दीक्षा जिस किसी को न दे, ऐसी आज्ञा है ॥ ६६ ॥

कुलद्रव्यैः समभ्यर्च्य कुलचक्रं विधानतः ।
शिष्याय दर्शयेद्देवि दीक्षैषा कौलिकी स्मृता ॥ ६७ ॥

**कौलिकी दीक्षासिद्धाभिषेक की विधि एवं महिमा**—हे देवि ! कुलद्रव्यों से सविधि कुलचक्र पूजा कर शिष्य को उसे दिखाए, यह 'कौलिकी दीक्षा' है ॥ ६७ ॥

कुलद्रव्यं मुखे पूर्व पञ्चगव्यामृतान्वितम् ।
अभिषिञ्चेद् गुरुः शिष्यं गण्डूषाख्या समीरिता ॥ ६८ ॥

पञ्चगव्यामृत से युक्त कुलद्रव्य को मुख में भरकर गुरुदेव गण्डूष (कुल्ला) द्वारा शिष्य का अभिषेक करें ॥ ६८ ॥

सजीवमीनयुक्तेन सुरया पूरितेन च ।
पञ्चामृतैः सुसम्पूर्णशङ्खेन कलसेन वा ।
अभिषेकं ततः कुर्याद्बाह्ये तत् कथितं प्रिये ॥ ६९ ॥

हे प्रिये ! तब सजीव मीन से युक्त सुरा या पञ्चामृत से पूर्ण शङ्ख द्वारा या कलश के द्वारा बाह्य अभिषेक करें ॥ ६९ ॥

मीनस्तु लम्बिका देवि वक्त्रं कलस उच्यते ।
पञ्चगवयामृतापूर्णं शिष्यं तेनाभिषेचयेत् ॥ ७० ॥
अयं सिद्धाभिषेकः स्यादाचार्यस्यापि पार्वति ।
त्रिकालं दन्तकाष्ठञ्च पुष्पाञ्जलिरपि प्रिये ॥ ७१ ॥

हे देवि ! 'मीन' लम्बिका (जिह्वा) है और 'कलश' मुख को कहा है । इस प्रकार पञ्चगव्यामृत से पूर्ण मुख द्वारा शिष्य का अभिषेक करे । हे पार्वति ! यह सिद्धाभिषेक है और आचार्य के लिये भी वाञ्छनीय है ॥ ७०-७१ ॥

शङ्खे वेदकलान्यासस्तज्ज्ञानञ्चाष्टधा भवेत् ।
समयो दन्तकाष्ठेन साधकः कुसुमाञ्जलिः ॥ ७२ ॥
पुत्रं शङ्खाभिषेकेण बोधको वेधसंज्ञया ।
पूर्णाभिषेकेणाचार्यः पञ्चावस्थाः प्रकीर्त्तिताः ॥ ७३ ॥
कुलाचारैकनिरता गुरुभक्ता दृढव्रताः ।
पूर्णाभिषेकपूता ये ते मुक्ताश्चेह जन्मनि ॥ ७४ ॥

१-३. तीनों समय दन्तधावन, ४-६. तीनों समय पुष्पाञ्जलि, ७. शङ्खोदक से अभिषेक और ८. वेधन—इस प्रकार आठ क्रियायें हैं । फिर १. शङ्खाभिषेक, २. बोधन, ३. वेध, ४. पूर्णाभिषेक और ५. आचार्य—ये पाँच अवस्थायें कही गई हैं ।

**पूर्णाभिषिक्तों की प्रशंसा**—केवल कुलाचार में तत्पर, गुरुभक्त, दृढ़व्रती जो पूर्णाभिषेक से पवित्र है, वे इसी जन्म में मुक्त होते हैं ॥ ७४ ॥

पूर्णाभिषेकपूता ये मृताश्च कुलनायिके ।
पुनर्लब्ध्वोत्तमं जन्म गुरुणा शिवरूपिणा ॥ ७५ ॥
शुद्धाः पूर्णाभिषेकेण शिवसायुज्यदायिना ।
तेन मुक्तिं व्रजेयुस्ते शाम्भवी वाचमब्रवीत् ॥ ७६ ॥
पूर्णा(दीक्षा)भिषेकहीनो यः कौलिको म्रियते यदि ।
पिशाचत्वमवाप्नोति यावदाहूतसंप्लवम् ॥ ७७ ॥

हे कुलनायिके ! जो दिवङ्गत हैं, वे पूर्णाभिषेक से पवित्र होकर उत्तम

जन्म को प्राप्त करते हैं, यह शङ्कर का वचन है । यदि पूर्णाभिषेक से हीन जो कौलिक मरता है, वह प्रलय होने तक पिशाचयोनि में रहता है ॥ ७७ ॥

**दीक्षा च द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।**
**क्रियादीक्षा भवेद्बाह्या वेधाख्याभ्यन्तरी मता ॥ ७८ ॥**

**दीक्षा के दो प्रकार और दीक्षा की महिमा**—दीक्षा दो प्रकार की कही गई है—१. बाह्य, २. आभ्यन्तर । क्रियादीक्षा बाह्य है और वेध आभ्यन्तरी कही गई है ॥ ७८ ॥

**अन्तः शुद्धिर्बहिः शुद्धिर्द्विविधा परिकीर्त्तिता ।**
**अन्तरा च क्रियाशुद्धिर्बहिः शुद्धिश्च दीक्षया ॥ ७९ ॥**

अन्त:शुद्धि और बहि:शुद्धि—ये दो कही गई हैं । क्रियाशुद्धि अन्तरा है और दीक्षा से बहि:शुद्धि होती है ॥ ७९ ॥

**दीक्षया मोक्षदीपेन चण्डालोऽपि विमुच्यते ।**
**आभ्यां विना कुलेशानि कौलिको नैव मुच्यते ॥ ८० ॥**

मोक्षदीप के समान दीक्षा द्वारा चाण्डाल भी मुक्त होता है । हे कुलेशानि ! उक्त दोनों के बिना कौलिक की मुक्ति नहीं होती ॥ ८० ॥

**शरीरस्य न संस्कारो जायते न च कर्मणः ।**
**आत्मनः कारयेद्दीक्षामनादिकुलकुण्डलीम् ॥ ८१ ॥**

न तो शरीर का संस्कार होता है, न कर्मों का । अनादि शक्ति कुल कुण्डली है रूप दीक्षा के द्वारा अन्त:करण का संस्कार किया जाता है ॥ ८१॥

**दीक्षा ह्येताः कर्मसाम्ये भिन्नार्थप्रतिपादिकाः ।**
**अभिसन्धानतो देवि देशिकोत्तमशिष्ययोः ॥ ८२ ॥**

ये दीक्षाएँ कर्म की समता में उत्तम आचार्य और शिष्य के अनुसन्धान से हे देवि ! भिन्न फल की प्रतिपादका होती है ॥ ८२ ॥

**मन्त्रौषधैर्यथा हन्याद्विषशक्तिं कुलेश्वरि ।**
**पशुपाशं तथा छिन्द्याद्दीक्षया मन्त्रवित् क्षणात् ॥ ८३ ॥**

हे कुलेश्वरि! जैसे मन्त्र और औषधि द्वारा विष की शक्ति नष्ट की जाती है, वैसे ही दीक्षा द्वारा मन्त्रज्ञ पशुपाश को क्षण भर में काट देता है ॥ ८३ ॥

**अस्मात् प्रविततताद्ग्रन्थात् परसंस्थानबोधकात् ।**
**दीक्षैव मोक्षयेत् पूर्वं दिव्यं धाम नयत्यपि ॥ ८४ ॥**

इस बन्धन से छूटने से परम संस्थान का ज्ञान होता हैं दीक्षा ही मोक्ष देती है और दिव्य धाम तक पहुँचाती है ॥ ८४ ॥

**उपपातकलक्षाणि महापातककोटिशः ।**
**क्षणाद्दहति देवेशि दीक्षा हि विधिना कृता ॥ ८५ ॥**

हे देवेशि ! विधिपूर्वक दी गई दीक्षा से लाखों छोटे पाप और कोटि बड़े पाप क्षण भर में भस्म हो जाते हैं ॥ ८५ ॥

**यया चोन्मीलितात्मानो भवन्ति पशवः शिवाः ।**
**सा दीक्षा ह्युदिता देवि पशुपाशविमोचिका ॥ ८६ ॥**

जिसके द्वारा पशुओं की आत्मा स्वतन्त्र होती है, हे देवि ! वह 'दीक्षा' पशुपाश से छुड़ाने वाली है ॥ ८६ ॥

**यया दीक्षितमात्रेण जायन्ते प्रत्ययाः प्रिये ।**
**सा दीक्षा मोक्षदा ज्ञेया शेषास्तु जनसेविकाः ॥ ८७ ॥**

हे प्रिये ! जिससे दीक्षित होने मात्र से विश्वास उत्पन्न होता है, वही 'दीक्षा' मोक्षदायिनी है । शेष तो जनसेविका हैं ॥ ८७ ॥

**उपासनाशतेनापि यां विना नैव सिध्यति ।**
**तां दीक्षामाश्रयेद् यत्नात् श्रीगुरोर्मन्त्रसिद्धये ॥ ८८ ॥**

जिसके बिना सैकड़ों उपासनाओं द्वारा भी सिद्धि नहीं मिलती, उस 'दीक्षा' का आश्रय मन्त्रसिद्धि के लिये गुरुदेव से प्राप्त करे ॥ ८८ ॥

**रसेन्द्रेण यथा विद्धमयः सुवर्णतां व्रजेत् ।**
**दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते प्रिये ॥ ८९ ॥**

रसेन्द्र (पारद) से बिद्ध लौह जैसे सुवर्ण बन जाता है, हे प्रिये ! वैसे ही दीक्षा से बिद्ध आत्मा शिवत्व को प्राप्त करती है ॥ ८९ ॥

**दीक्षाग्निदग्धकर्मासौ मायाविच्छिन्नबन्धनः ।**
**गतः परां ज्ञानकाष्ठां निर्बीजस्तु शिवो भवेत् ॥ ९० ॥**
**गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता ।**
**दीक्षासंस्कारसम्पन्ने जातिभेदो न विद्यते ॥ ९१ ॥**

दीक्षा की अग्नि से जिसके कर्म दग्ध हो जाते हैं, वह माया के बन्धनों से मुक्त होकर ज्ञान की पराकाष्ठा को प्राप्त कर निर्बीज हो शिव हो जाता है । दीक्षासंस्कार से सम्पन्न होने पर शूद्र की शूद्रता और विप्र की विप्रता नहीं रहती और इस प्रकार जातिभेद नहीं रहता ॥ ९०-९१ ॥

**शिवलिङ्गे शिला बुद्धिं कुर्वन् यत् पापमश्नुते ।**
**दीक्षितश्चापि पूर्वत्वस्मृत्या तत् पापमाप्नुयात् ॥ ९२ ॥**

शिवलिङ्ग को शिला समझने से जो पाप होता है, वही पाप दीक्षित को पूर्वावस्था का स्मरण करने से लगता है ॥ ९२ ॥

**दार्वश्मलौहमृद्रत्नजातिलिङ्गप्रतिष्ठितम् ।**
**यथोच्यते तथा शुद्धाः सर्ववर्णास्तु दीक्षिताः ॥ ९३ ॥**

जिस प्रकार लिङ्गरूप में प्रतिष्ठित होने पर काष्ठ, पत्थर, लौह, मिट्टी, रत्न की जाति नहीं रह जाती, उसी प्रकार सभी वर्ण के मनुष्य दीक्षित होकर शुद्ध ही कहे जाते हैं ॥ ९३ ॥

**येन पूजितमात्रेण चाब्रह्मभुवनान्तिकम् ।**
**पूजितं तेन सर्वं स्याद्दीक्षितेन न संशयः ॥ ९४ ॥**

ब्रह्म से लेकर भुवन तक सभी दीक्षित द्वारा पूजा पाकर सब प्रकार से प्रसन्न होते हैं इसमें संशय नहीं है ॥ ९४ ॥

**दीक्षितस्य न कार्यं स्यात्तपोभिर्नियमव्रतैः ।**
**न तीर्थक्षेत्रगमनैर्न च शरीरयन्त्रणैः ॥ ९५ ॥**

दीक्षित व्यक्ति को तप, नियम, व्रत, तीर्थयात्रा करने और शरीर को कष्ट देने की आवश्यकता नहीं होती ॥ ९५ ॥

**अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ।**
**न फलन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥ ९६ ॥**

हे प्रिये ! दीक्षाहीन व्यक्ति जप पूजादि जो क्रियाएँ करते हैं, पत्थर में बोये हुये बीज के समान वे जपादि क्रियाएँ फल नहीं देतीं ॥ ९६ ॥

**देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।**
**तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ ९७ ॥**

दीक्षाविहीन को न सिद्धि मिलती है, न सद्गति । हे देवि ! अतः सब प्रयत्न करके गुरु से दीक्षित होना चाहिये ॥ ९७ ॥

**द्विजो यो दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितः ।**
**द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रार्थनिर्णयः ॥ ९८ ॥**

जो द्विज अन्त्यज के बाद दीक्षित होता है, वह द्विज अन्त्यज से कनिष्ठ होता है और अन्त्यज ज्येष्ठ होता है, शास्त्र का यही निर्णय है ॥ ९८ ॥

**गुरुशक्तिसुतानाञ्च यो वा स्यात् पूर्वदीक्षितः ।**
**गुरुवत्तेन ते पूज्या नावमान्याः कथञ्चन ॥ ९९ ॥**

गुरुशक्ति और गुरुपुत्रों में, जो पहले दीक्षा पाये हुये हैं, वे गुरु के समान पूजनीय हैं । उनकी कभी अवमानना न करे ॥ ९९ ॥

**शिष्यो दीक्षितमात्रश्चेद् यदि स्वर्गं गतो गुरुः ।**
**एकसन्तानकेनैव पूर्णसंस्कारमाचरेत् ॥ १०० ॥**

यदि शिष्य केवल दीक्षित हुआ हो और गुरु का स्वर्गवास हो जाय, तो उनकी सन्तान द्वारा संस्कार पूर्ण कराये ॥ १०० ॥

**दर्शनेषु च सर्वेषु गुरुणा ज्ञानशालिना ।**
**दीक्षितो यस्तु विधिना स युक्तो नापरः प्रिये ॥ १०१ ॥**

हे प्रिये ! सभी दर्शनों में ज्ञान रखने वाले गुरु द्वारा जो विधिपूर्वक दीक्षा लेता है, वही मुक्त होता है, अन्य नहीं ॥ १०१ ॥

**अधिवासनपूर्वन्तु चक्रपूजापुरःसरम् ।**
**दीक्षया शोधयेच्छिष्यमन्यथा निष्फलं भवेत् ॥ १०२ ॥**

पहले अधिवासन कर चक्रपूजा के साथ दीक्षा द्वारा शिष्य का शोधन करे। अन्यथा फल नहीं होता ॥ १०२ ॥

**शूद्रसङ्करजातीनामादिशुद्धिर्विधीयते ।**
**पादोदकप्रदानाद्यैः कुर्यात् पापविमोचनम् ॥ १०३ ॥**

**शूद्रादि जातियों और स्त्रियों की दीक्षा विधि—**

शूद्र और वर्णसङ्कर व्यक्तियों की पूर्वशुद्धि आवश्यक है । पादोदक आदि देकर उन्हें पापों से छुड़ाना चाहिए ॥ १०३ ॥

**एकाब्देन द्विजो योग्यः क्षत्रियो वत्सरद्वयात् ।**
**वैश्यो योग्यस्त्रिभिर्वर्षैश्चतुर्भिः शूद्र एव च ॥ १०४ ॥**

द्विज एक वर्ष में, क्षत्रिय दो वर्षों में, वैश्य तीन वर्षों में और शूद्र चार वर्षों में दीक्षा के योग्य होता है ॥ १०४ ॥

**विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।**
**नाधिकारः स्वतो नार्या भार्याया भर्त्तुराज्ञया ॥ १०५ ॥**

विधवा की दीक्षा पुत्र की अनुमति से, कन्या की पिता की अनुमति से

और विवाहिता की पति की अनुमति से दीक्षा करे । स्त्रियों को स्वतः दीक्षा लेने का अधिकार नहीं है ॥ १०५ ॥

**स्याद्वेदाध्ययने शूद्रो नाधिकारी यथा प्रिये ।**
**तथैवादीक्षितश्चापि नाधिकारी कुलेश्वरि ॥ १०६ ॥**

हे प्रिये ! जैसे वेद के अध्ययन में शूद्र अधिकारी नहीं है, हे कुलेश्वरि ! वैसे ही अदीक्षित साधना का अधिकारी नहीं होता ॥ १०६ ॥

**श्रीगुरुं गुरुपत्नीञ्च तत्पुत्रं शक्ति कौलिकान् ।**
**दीक्षितस्तोषयेद्देवि यथाविभवविस्तरम् ॥ १०७ ॥**

दीक्षा पाकर शिष्य श्री गुरुदेव, गुरुपत्नी, गुरुपुत्र, शक्तियों और कौलिकों को हे देवि ! यथाशक्ति सन्तुष्ट करे ॥ १०७ ॥

**इति ते कथितं किञ्चित् परीक्षा गुरुशिष्ययोः ।**
**दीक्षाभेदादिकं देवि किम्भूयः श्रोतुमिच्छसि ॥ १०८ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे गुरुशिष्य-परीक्षाकथनं नाम चतुर्दशोल्लासः ॥ १४ ॥**



इस प्रकार गुरुशिष्य की परीक्षा और दीक्षा भेदादि के सम्बन्ध में मैंने आपसे कुछ बताया । अब हे देवि ! आप क्या सुनना चाहती हैं ? ॥ १०८॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में गुरुशिष्यपरीक्षा-कथन नामक चौदहवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ १४ ॥**



# अथ पञ्चदशोल्लासः

**श्री देव्युवाच**

**कुलेश श्रोतुमिच्छामि पुरश्चरणलक्षणम् ।**
**स्थानाहारादिभेदञ्च वद मे परमेश्वर ॥ १ ॥**

**पुरश्चरणकथन**—श्री देवी ने कहा—हे कुलेश ! मैं पुरश्चरण के लक्षण सुनना चाहती हूँ । हे परमेश्वर! स्थान एवं आहारादि के भेद मुझे बताइये ॥१॥

**ईश्वर उवाच**

**शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।**
**तस्य श्रवणमात्रेण मन्त्रतत्त्वं प्रकाशते ॥ २ ॥**

**जप की श्रेष्ठता**—ईश्वर ने कहा- हे देवि ! सुनिए, जो आपने मुझसे पूछा है, उसे कहूँगा । उसके सुनने मात्र से मन्त्र का तत्त्व ज्ञात होता है ॥ २॥

**जपयज्ञात् परो यज्ञो नापरोऽस्तीह कश्चन ।**
**तस्माज्जपेन धर्मार्थकाममोक्षांश्च साधयेत् ॥ ३ ॥**

'जप'-यज्ञ से बड़ा अन्य कोई यज्ञ इस संसार में नहीं है । इसलिये 'जप' के द्वारा धर्म, अर्थ, काम और मोक्ष को सिद्ध करे ॥ ३ ॥

**सर्वपादान् परित्यज्य मन्त्रपादं समभ्यसेत् ।**
**अप्रमादाद् भवेत् सिद्धिः प्रमादादशुभं फलम् ॥ ४ ॥**

सब धर्मों को छोड़कर बिना किसी प्रमाद के मन्त्रराज का अभ्यास करे । प्रमाद अर्थात् विधि विधान की उपेक्षा करने से हानि होती है और विधि से सिद्धि होती है ॥ ४ ॥

**भोगापवर्गसङ्कल्पकल्पव्रतशुभो जपः ।**
**जपध्यानमयं योगं तस्माद्देवि समाचरेत् ॥ ५ ॥**

भोग और मोक्ष के सङ्कल्प से, कल्प और व्रत से 'जप' शुभदायक होता है । 'जप' और ध्यानमय होने से ही योग होता है । अतः हे देवि ! वैसा विधिपूर्वक आचरण करे ॥ ५ ॥

**आब्रह्मबीजदोषाश्च नियमातिक्रमोद्भवाः ।**
**ज्ञानाज्ञानकृताः सर्वं प्रणश्यन्ति जपात् प्रिये ॥ ६ ॥**

नियमों के अतिक्रमण और ज्ञान अज्ञान में किये गये कर्मों से उत्पन्न जन्म जन्मान्तर के सभी दोष 'जप' से नष्ट हो जाते हैं ॥ ६ ॥

**संसारे दुःखभूयिष्ठे यदीच्छेत् सिद्धिमात्मनः ।**
**पञ्चाङ्गोपासनेनैव मन्त्रजापी व्रजेत् सुखम् ॥ ७ ॥**

दुःखमय संसार में यदि अपने कल्याण की इच्छा है, तो पञ्चाङ्ग उपासना से मन्त्र जप करता हुआ सुख से रहे ॥ ७ ॥

**पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च ।**
**होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ ८ ॥**

**पुरश्चरण के पाँच अङ्ग—**

१. तीनों काल की नित्यपूजा, २. जप, ३. तर्पण, ४. होम और ५. ब्राह्मणभोजन—यह 'पुरश्चरण' कहा जाता है ॥ ८ ॥

**यद् यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।**
**कुर्याद् द्वित्रिचतुःपञ्च-संख्यां वा साधकः प्रिये ॥ ९ ॥**
**कुर्वीत चाङ्गसिद्ध्यर्थं तदशक्तौ स भक्तितः ।**
**तच्चेदङ्गं विहीयेत मन्त्री नेष्टमवाप्नुयात् ॥ १० ॥**

जो-जो अङ्ग न हो सके, उसकी संख्या का दुगना जप करे । अथवा हे प्रिये ! अशक्त होने पर भक्तिपूर्वक अष्टाङ्गसिद्धि के लिए क्रमशः अङ्गों का द्वि-त्रि-चतुः-पञ्चसंख्यक जप करे । अन्यथा अङ्गहीनता के दोष से अभीष्ट फल की प्राप्ति नहीं होती ॥ ९-१० ॥

**अन्नैश्चतुर्विधैर्देवि पदार्थैः षड्रसान्वितैः ।**
**सुभोजितेषु विप्रेषु सर्वं हि सफलं भवेत् ॥ ११ ॥**

चतुर्विध अन्न के पदार्थों से, जो छः रसों से युक्त हों, विप्रों को भोजन कराकर सन्तुष्ट करे, तो सभी कर्म सफल होते हैं ॥ ११ ॥

**सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च ।**
**सर्वमन्त्राश्च सिध्यन्ति त्वत्प्रसादात् कुलेश्वरि ॥ १२ ॥**

इस पञ्चाङ्ग उपासना से जो एक मन्त्र को सिद्ध कर लेता है, उसे सभी मन्त्र, हे कुलेश्वरि ! आपकी कृपा से सिद्ध हो जाते हैं ॥ १२ ॥

उपदेशस्य सामर्थ्यात् श्रीगुरोश्च प्रसादतः ।
मन्त्रप्रभावाद्भक्त्या च मन्त्रसिद्धिः प्रजायते ॥ १३ ॥

उपदेश के सामर्थ्य से, श्रीगुरु की प्रसन्नता से और मन्त्र के प्रभाव से एवं भक्ति से मन्त्र सिद्ध हो जाते हैं ॥ १३ ॥

सिद्धमन्त्राद् गुरोर्लब्धो मन्त्रो यः सिद्धिभाग्भवेत् ।
पूर्वजन्मकृताभ्यासान्मन्त्रो वा शीघ्रसिद्धिदः ॥ १४ ॥

सिद्ध गुरु से प्राप्त मन्त्र से सिद्धि प्राप्त होती है, अथवा पूर्वजन्म में किए मन्त्राभ्यास से शीघ्र सिद्धि मिलती है ॥ १४ ॥

दीक्षापूर्वं कुलेशानि पारम्पर्यक्रमागतम् ।
न्यायलब्धश्च यो मन्त्रः स च सिद्धो न संशयः ॥ १५ ॥

हे कुलेशानि ! परम्परा के क्रम से दीक्षापूर्वक विधिविधान पूर्वक जो मन्त्र मिलता है, वह सिद्ध होता है, इसमें सन्देह नहीं ॥ १५ ॥

सहस्रं प्रजपेन्मन्त्रं मातृकाक्षरसंपुटम् ।
अनुलोमविलोमेन मन्त्रसिद्धिः प्रजायते ॥ १६ ॥
त्रिषष्ट्यक्षरसंयुक्तमातृकाक्षरसंपुटम् ।
क्रमोत्क्रमात्सहस्रन्तु तस्य सिद्धो भवेन्मनुः ॥ १७ ॥

**भूतलिपि से पुटित मन्त्र जप**—भूतलिपि से मन्त्र को सम्पुटित कर एक मास तक जो क्रमशः एक सहस्र जप करता है, उसे मन्त्र सिद्ध हो जाता है। मातृकाक्षरों से सम्पुटित मन्त्र को अनुलोम क्रम एवं विलोम क्रम से एक सहस्र जप करने से मन्त्र सिद्धि होती है ॥ १६-१७ ॥

मातृकाजपमात्रेण मन्त्राणां कोटिकोटयः ।
जपिताः स्युर्न सन्देहो यतः सर्वं तदुद्भवम् ॥ १८ ॥

मातृका के जप मात्र से कोटि मन्त्रों का जप हो जाता है क्योंकि सभी मन्त्र मातृका से ही उत्पन्न हुए हैं ॥ १८ ॥

अनेककोटिमन्त्राणि चित्ताकुलकराणि च ।
मन्त्रं गुरुकृपाप्राप्तमेकं स्यात् सर्वसिद्धिदम् ॥ १९ ॥

अनेक कोटि मन्त्र चित्त को व्याकुल करने वाले हैं । गुरुकृपा से प्राप्त एक मन्त्र ही सभी सिद्धियों का देने वाला है ॥ १९ ॥

यदृच्छया श्रुतं मन्त्रं दृष्टेनापि छलेन च।
पत्रे स्थितं वा चाध्याप्य तज्जपः स्यादनर्थकृत् ॥ २० ॥

**अवधि से प्राप्त मन्त्र हानिकारक**—अचानक सुने या देखे हुएं मन्त्र, या छल से प्राप्त मन्त्र, या किसी पत्रे पर लिखे मन्त्र का जप करने से हानि होती है ॥ २० ॥

पुस्तके लिखितान्मन्त्रान् विलोक्य प्रजपन्ति ये।
ब्रह्महत्यासमं तेषां पातकं व्याधिदुःखदम् ॥ २१ ॥

पुस्तक में लिखे मन्त्रों को देखकर जो जपते हैं, उन्हें ब्रह्महत्या के समान दुःखदायी पाप लगता है ॥ २१ ॥

पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम्।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥ २२ ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥ २३ ॥
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम्।
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥ २४ ॥

**पुरश्चरण के लिये प्रशस्त एवं निषिद्ध स्थान**—पुण्यक्षेत्र, नंदीतट, गुफा, पर्वतशिखर, तीर्थस्थान, नदियों का सङ्गम, तपोवन, उद्यान, विल्वमूल, पर्वततट, देवमन्दिर, समुद्रतट और अपना घर मन्त्र साधकों के लिए ये साधना स्थान प्रशस्त कहे गए हैं अथवा साधक का जहाँ चित्त प्रसन्न हो, वहाँ निवास करना चाहिए ॥ २२-२४ ॥

सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च।
गोविप्रकुलवृक्षाणां सन्निधौ शस्यते जपः ॥ २५ ॥

सूर्य, अग्नि, गुरु, चन्द्रमा, दीपक, जल, गाय, विप्र और कुल वृक्षों के समीप जप करना श्रेयस्कर है ॥ २५ ॥

गृहे शतगुणं विद्याद् गोष्ठे लक्षगुणं भवेत्।
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥ २६ ॥

घर में सौगुना, गोष्ठ में लाख गुना, देवमन्दिर में करोड़ गुना और शिव के निकट जप करने का अनन्त फल होता है ॥ २६ ॥

म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जितः।
एकान्तपावने निन्दारहिते भक्तिसंयुते ॥ २७ ॥

**स्वदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।**
**राजभक्तजनस्थाने निवसेत्तापसाश्रये ॥ २८ ॥**

म्लेच्छ, दुष्ट, पशु, सर्पादि की शङ्का और भीति से रहित, एकान्त, पवित्र, अनिन्दित, भक्तियुक्त, स्वदेश, धार्मिक देश, अन्नादि से सम्पन्न, उपद्रव हीन ( विघ्नरहित ), रमणीय और तपोवन में निवास करे ॥ २७-२८ ॥

**राजानः सचिवा राज्ञां पुरुषाः प्रभवो जनाः ।**
**चरन्ति येन मार्गेण न वसेत्तत्र मन्त्रवित् ॥ २९ ॥**

जिस मार्ग से राजा, मन्त्री, राजकीय पुरुष और बहुत से लोग आते जाते हों, उसके पास मन्त्रज्ञ निवास न करे ॥ २९ ॥

**जीर्णदेवालयोद्यानगृहवृक्षतलेषु च ।**
**नदीतडागकूपेषु भूच्छिद्रादिषु नो वसेत् ॥ ३० ॥**

जीर्ण देवमंदिर में, दग्ध वृक्ष के नीचे, नदी, तालाब, कुएँ और भू छिद्रों में वास न करे ॥ ३० ॥

**दीपनाथमयष्ट्वा यो जपपूजादिकं चरेत् ।**
**तत्फलं गृह्यते तेन तस्यायासः फलं भवेत् ॥ ३१ ॥**

**दीपनाथ की पूजा आवश्यक**—दीपनाथ की पूजा किए बिना जो जप पूजादि करता है, उसका केवल परिश्रम ही होता है । उसके फल को दीपनाथ हर लेते हैं ॥ ३१ ॥

**वंशाश्मधरणीदारुतृणपल्लवनिर्मितम् ।**
**वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ॥ ३२ ॥**

**त्याज्य और ग्राह्य आसन**—बांस, पत्थर, मिट्टी, लकड़ी, तृण और पत्तों से बने आसनों को बुद्धिमान साधक त्याग दे । ये आसन दरिद्रता, व्याधि और दुःख देते हैं ॥ ३२ ॥

**तूलकम्बलवस्त्राणां सिंहव्याघ्रमृगाजिनम् ।**
**कल्पयेदासनं धीमान् सौभाग्यज्ञानवृद्धिदम् ॥ ३३ ॥**

तूल, कम्बल, वस्त्र या सिंह, व्याघ्र, मृगचर्म का आसन बनाए, जो सौभाग्य और ज्ञान की वृद्धि करते हैं ॥ ३३ ॥

**पद्मस्वस्तिकवीरादिष्वासनेषूपविश्य च ।**
**जपार्च्चनादिकं कुर्यादन्यथा निष्फलं भवेत् ॥ ३४ ॥**

पद्म, स्वस्तिक, वीरादि आसनों से बैठकर जपार्चन आदि करे । अन्यथा फल नहीं मिलता ॥ ३४ ॥

द्वादशावर्त्तयन् बुद्ध्या प्रणवन्तु त्रिमात्रकम् ।
मुञ्चेत् पिङ्गलया वायुमन्तःस्थं रेचको भवेत् ॥ ३५ ॥

**प्राणायाम-विधि और उसका फल**—तीन मात्रा वाले 'प्रणव' (ॐ) को बुद्धि द्वारा बारह बार जपता हुआ अन्तःस्थ वायु को पिङ्गला ( दाहिने नाक ) से छोड़े—यह रेचक है ॥ ३५ ॥

षोडशावर्त्तयन् तारं पूरयेद् बाह्यमारुतम् ।
शनकैरिडया बद्ध्वा पूरकं परिकीर्त्तितम् ॥ ३६ ॥

सोलह बार 'तार' (ॐ) को जपता हुआ बाह्य मारुत (वायु) को इडा ( बाँए नासिका ) से भरे—यह 'पूरक' है ॥ ३६ ॥

द्वादशावर्त्तयन् तारं वायुं मध्ये च कुम्भयेत् ।
शोषयेद्वायुबीजेन देहशोषणमीरितम् ॥ ३७ ॥
पुनश्च पूर्ववद्वायुं विरेच्यापूर्य कुम्भयेत् ।
दहेत् दहनबीजेन देहदाहनमीरितम् ॥ ३८ ॥
पुनश्च पूर्ववद्वायुं विरेच्यापूर्य कुम्भयेत् ।
शिवकुण्डलिनीयोगस्यन्दनामृतधारया ।
आपादमस्तकं देवि प्लावयेत् प्लावनं भवेत् ॥ ३९ ॥

बारह बार 'तार' (ॐ) को जपता हुआ मध्य में वायु का 'कुम्भक' करे । वायुबीज (यं) से देह का 'शोषण करे । फिर पूर्ववत् वायु को निकालकर भरे और कुम्भक करे और अग्निबीज (रं) से देह का 'दाहन' करे । पुनः पूर्ववत् वायु को निकालकर भरे और कुम्भक करे तथा शिव एवं कुण्डलिनी के योग से उत्पन्न अमृतधारा से हे देवि ! पैर से मस्तक तक देह का 'प्लावन' करे ॥ ३७-३९ ॥

जपध्यानं विनाऽगर्भः सगर्भस्तद्विपर्ययात् ।
अगर्भाद् गर्भसंयुक्तः प्राणायामः शताधिकः ॥ ४० ॥

जप और ध्यान से रहित प्राणायाम 'अगर्भ' होता है । 'अगर्भ' की अपेक्षा 'सगर्भ' प्राणायाम सौ गुना अधिक फलदायक है ॥ ४० ॥

तपांसि तीर्थयात्राद्या मखदानव्रतादयः ।
प्राणायामस्य तस्यैते कलां नार्हन्ति षोडशीम् ॥ ४१ ॥

तप, तीर्थयात्रा, यज्ञ, दान, व्रत आदि 'प्राणायाम' की १६ वीं कला के भी बराबर नहीं हैं ॥ ४१ ॥

**मानसं वाचिकं पापं कायिकं वापि यत् कृतम् ।**
**तत् सर्वं निर्दहेच्छीघ्रं प्राणायामत्रयं शिवे ॥ ४२ ॥**

उक्त तीनों 'प्राणायाम' मानस, वाचिक और कायिक—सभी पापों को तुरन्त भस्म कर देते हैं ॥ ४२ ॥

**दह्यते ध्मार्यमानानां धातूनाञ्च यथा मलम् ।**
**तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य संयमात् ॥ ४३ ॥**

जैसे धौंकनी द्वारा फूंकी गई धातुओं का मैल जल जाता है, वैसे ही प्राण का संयम करने से इन्द्रियों के दोष नष्ट हो जाते हैं ॥ ४३ ॥

**प्राणायामैर्विशुद्धात्मा यद् यत् कर्म करोति हि ।**
**तत्तत् फलत्यसन्देहस्त्वप्रयत्नेन वा कृतम् ॥ ४४ ॥**

प्राणायामों द्वारा विशुद्ध आत्मा वाला साधक जो जो भी कार्य करता है, वह सभी बिना प्रयत्न के फलदायक होता है, इसमें सन्देह नहीं ॥ ४४ ॥

**आगमोक्तेन मार्गेणाभ्यासं नित्यं करोति यः ।**
**देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥ ४५ ॥**

**न्यासादिसहित मन्त्र का जप**—आगमोक्त मार्ग से जो नित्य न्यास करता है, वह देवभाव को पाकर मन्त्रसिद्धि को प्राप्त करता है ॥ ४५ ॥

**यो न्यासकवचच्छन्दो मन्त्रं जपति तं प्रिये ।**
**विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्टवा यथा गजाः ॥ ४६ ॥**

न्यास, कवच और छन्द से युक्त मन्त्र का जो जप करता है, हे प्रिये ! उसके सभी विघ्न उसी प्रकार दूर हो जाते हैं, जैसे सिंह को देखकर हाथी भाग खड़े होते हैं ॥ ४६ ॥

**अकृत्वा न्यासजालं यो मूढात्मा प्रजपेन्मनुम् ।**
**वाध्यते सर्वविघ्नैश्च व्याघ्रैर्मृगशिशुर्यथा ॥ ४७ ॥**

न्यासजाल को किये बिना जो मूर्ख मन्त्र का जप करता है, उसे सभी विघ्न बाधा पहुँचाते हैं जैसे बाघ मृग के बच्चों को बाधित करता है ॥ ४७ ॥

**अक्षमाला द्विधा प्रोक्ता कल्पिताऽकल्पितेति च ।**
**कल्पिता मणिभिः क्लृप्ता मातृका स्यादकल्पिता ॥ ४८ ॥**

**अक्षमाला के दो भेद और उनमें जप का फल**—अक्षमाला दो प्रकार कही है—१. कल्पिता और २. अकल्पिता । कल्पिता 'मणियों' से बनती, है और अकल्पिता 'मातृकाओं' से बनती है ॥ ४८ ॥

**आदिक्षान्ताक्षवर्णत्वादक्षमालेति कीर्त्तिता ।**
**अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥ ४९ ॥**

'अ' से 'क्ष' तक के वर्णों से निर्मित होने के कारण इसे 'अक्षमाला' कहते हैं । अनुलोम क्रम से और विलोम क्रम से मन्त्रज्ञ साधक को जप की गणना करनी चाहिए ॥ ४९ ॥

**एकैकमङ्गुलीभिः स्याद्रेखाभिर्दशधा फलम् ।**
**मणिभिः शतसाहस्रं माणिक्याऽनन्तमुच्यते ॥ ५० ॥**

अंगुलि से जप की गणना का फल एक गुना, रेखाएँ खींच कर गणना करने का फल दस गुना, मणियों से गणना करने का फल सौ हजार गुना और माणिक्य से गणना करने का अनन्त फल कहा गया है ॥ ५० ॥

**त्रिंशद्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् ।**
**पञ्चविंशतिभिर्मोक्षं पञ्चदश्याभिचारके ।**
**पञ्चाशद्भिः कुलेशानि सर्वसिद्धिरुदीरिता ॥ ५१ ॥**

३० मणियों की माला से धन, २७ मणियों की माला से पुष्टि, २५ मणियों की माला से मोक्ष और १५ मणियों की माला से अभिचार होता है । हे कुलेशानि ! ५० मणियों की माला से सर्वसिद्धि होती है ॥ ५१ ॥

**अङ्गुष्ठेन च मोक्षः स्यात्तर्जनी शत्रुनाशिनी ।**
**मध्यमां धनदां विद्यात् शान्तिकर्मण्यनामिका ।**
**कनिष्ठा स्तम्भन्याकर्षण्यङ्गुली सुप्रकीर्त्तिता ॥ ५२ ॥**

**जप में अंगुलि नियम**—अंगुष्ठ से मोक्ष, तर्जनी से शत्रुनाश, मध्यमा से धनप्राप्ति, अनामिका से शान्तिकर्म, कनिष्ठा से स्तम्भन और सभी अँगुलियों से आकर्षण होता है ॥ ५२ ॥

**एतज्जपिष्यामीत्यादौ सङ्कल्प्य मन्त्रवित्तमः ।**
**स्थिरासनो जपित्वाऽथ देव्यै सोदकमर्पयेत् ॥ ५३ ॥**

आदि में 'इतना जप करूँगा' इस प्रकार सङ्कल्प कर मन्त्रज्ञ स्थिर आसन से बैठ कर जप करे और जल सहित देवी को जप का फल समर्पित करे ॥ ५३ ॥

**उच्चैर्जपोऽधमः प्रोक्त उपांशुमध्यमः स्मृतः ।**
**उत्तमो मानसो देवि त्रिविधः कथितो जपः ॥ ५४ ॥**

**जप के तीन भेद**—हे देवि ! जप तीन प्रकार का कहा गया है—१. उच्च स्वर से जप अधम है, २. उपांशु जप मध्यम कहा गया है, और ३. मानस जप उत्तम है ॥ ५४ ॥

**अतिह्रस्वो व्याधिहेतुरतिदीर्घस्तपःक्षयः ।**
**अक्षराक्षरसंयुक्तो यो मन्त्रः स न सिध्यति ॥ ५५ ॥**
**मनसा यः स्मरेत् स्तोत्रं वचसा वा मनुं जपेत् ।**
**उभयं निष्फलं देवि भिन्नभाण्डोदकं यथा ॥ ५६ ॥**

बहुत धीमे जप करने से व्याधि होती है और बहुत तेज जप करने से तप का नाश होता है । अक्षर से अक्षर को जोड़ता हुआ जो मन्त्र जप करता है एसे सिद्धि नहीं प्राप्त होती है । हे देवि ! मन में स्तोत्र का स्मरण करना और वाणी से मन्त्र का जप करना—ये दोनों निष्फल होते हैं, जैसे टूटे हुए बर्तन में जल नहीं ठहरता ॥ ५५-५६ ॥

**जातसूतकमादौ स्यात्तदन्ते मृतसूतकम् ।**
**सूतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति ॥ ५७ ॥**

**सूतकद्वय से मुक्त मन्त्र ही सिद्धिदायक**—आदि में जातसूतक और अन्त में मृतसूतक होता है । इन दोनो सूतकों से युक्त जो मन्त्र होता है वह सिद्ध नहीं होता ॥ ५७ ॥

**आद्यन्तरहितं कृत्वा मन्त्रमावर्त्तयेद्धिया ।**
**सूतकद्वयनिर्मुक्तो यो मन्त्रः सर्वसिद्धिदः ॥ ५८ ॥**

अतः इन दोनों से मन्त्र को सदा रहित कर मन्त्र का जप करे क्योंकि दोनों सूतकों से मुक्त मन्त्र ही सब सिद्धियों को देता है ॥ ५८ ॥

**मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।**
**शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥ ५९ ॥**

**मन्त्रार्थ आदि के ज्ञान बिना जप निष्फल**—मन्त्रार्थ, मन्त्रचैतन्य और योनिमुद्रा को जो नहीं जानता, वह सौ कोटि जप करे, तो भी उसे सिद्धि नहीं मिलती ॥ ५९ ॥

**सुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।**
**मन्त्रा चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ ६० ॥**

**चैतन्यरहित मन्त्र निष्फल**—हे प्रिये ! जिन मन्त्रों के बीज सुप्त हैं, वे फल नहीं देते । चैतन्य मन्त्र ही सर्वसिद्धिप्रद कहे गए हैं ॥ ६० ॥

**चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।**
**फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ॥ ६१ ॥**

चैतन्यरहित मन्त्र केवल वर्ण कहे गये है । वे लक्ष कोटि जप से भी फल नहीं देते ॥ ६१ ॥

**मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।**
**शतैः सहस्रैर्लक्षैर्वा कोटिजापेन् तत् फलम् ॥ ६२ ॥**

मन में एक बार मन्त्र के उच्चारण करने से उनका जैसा प्रभाव पहले होता है, वैसा ही प्रभाव शत, सहस्र, लक्ष या कोटि जप करने पर भी होता है ॥ ६२ ॥

**हृत्कण्ठग्रन्थिभेदश्च सर्वावयववर्द्धनम् ।**
**आनन्दाश्रु च पुलको देहावेशः कुलेश्वरि ।**
**गद्गदोक्तिश्च सहसा जायते नात्र संशयः ॥ ६३ ॥**
**सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसंयुते ।**
**दृश्यन्ते प्रत्यया यत्र पारम्पर्य तदुच्यते ॥ ६४ ॥**

हे कुलेश्वरि ! किन्तु चैतन्ययुक्त मन्त्र का एक बार भी उच्चारण करने से हृदय में कम्पन, ग्रन्थिभेद, सभी अङ्गों में वृद्धि, आनन्दाश्रु, पुलक, देहावेश, गद्-गद् वाणी आदि का अचानक ही अनुभव होता है । इसमें संशय नहीं । इस प्रकार के लक्षण दिखने पर समझे कि मन्त्र परम्परा से प्राप्त है ॥ ६३-६४ ॥

**रुद्धः कूटाक्षरो मुग्धो बद्धः क्रुद्धश्च भेदितः ।**
**बालः कुमारो युवकः प्रौढो वृद्धश्च गर्वितः ॥ ६५ ॥**
**स्तम्भितो मूर्च्छितो मत्तः कीलितः खण्डितः शठः ।**
**मन्दः पराङ्मुखश्छिन्नो बधिरोऽन्धस्त्वचेतनः ॥ ६६ ॥**
**किङ्करः क्षुधितः स्तब्धः स्थानभ्रष्टश्च पीडितः ।**
**निःस्नेहो विकलो ध्वस्तो निर्जीवः खण्डितारिकः ॥ ६७ ॥**
**सुप्तस्तिरस्कृतो नीचो मलिनश्च दुरासदः ।**
**निःसत्त्वो निर्जितो दग्धचपलश्च भयङ्करः ॥ ६८ ॥**
**निस्त्रिंशो निन्दितः क्रूरः फलहीनो निकृन्तनः ।**
**निर्वीर्यो भ्रमितो शप्त रुग्णः कष्टोऽङ्गहीनकः ।**
**जडो रिपुरुदासीनो लज्जितो मोहितोऽलसः ॥ ६९ ॥**

**मन्त्र के ये दोष हैं.**—१. रुद्ध, २. कूटाक्षर, ३. मुग्ध, ४. बद्ध, ५. क्रुद्ध, ६. भेदित, ७. बाल, ८. कुमार, ९. युवक, १०. प्रौढ़, ११. वृद्ध, १२. गर्वित, १३. स्तम्भित, १४. मूर्छित, १५. मत्त, १६. कीलित, १७. खण्डित, १८. शठ, १९. मन्द, २०. पराङ्मुख, २१. छिन्न, २२. वधिर, २३. अन्ध, २४. अचेतन, २५. किङ्कर, २६. क्षुधित, २७. स्तब्धं, २८. स्थानभ्रष्ट, २९. पीड़ित, ३०. निःस्नेह, ३१. विकल, ३२. ध्वस्त, ३३. निर्जीव, ३४. खण्डितारिक, ३५. सुप्त, ३६. तिरस्कृत, ३७. नीच, ३८. मलिन, ३९. दुरासद, ४०. निःसत्त्व, ४१. निर्जित, ४२. दग्ध, ४३. चपल, ४४. भयङ्कर, ४५. निस्त्रिंश, ४६. क्रूर, ४७. फलहीन, ४८. निकृन्तन, ४९. निर्वीर्य, ५०. भ्रमित, ५१. शप्त, ५२. रुग्ण, ५३. कष्ट, ५४. अङ्गहीन, ५५. जड़, ५६. रिपु, ५७. उदासीन, ५८. लज्जित, ५९. मोहित, ६०. अलस ॥ ६५-६९ ॥

**षष्ट्येतान् मन्त्रदोषांश्च योऽज्ञात्वा प्रजपेन्मनुम् ।**
**सिद्धिर्न जायते तस्य लक्षकोटिजपादपि ॥ ७० ॥**

**मन्त्र के ६० दोष**—मन्त्र के इन ६० दोषों को जाने बिना जो मन्त्र का जप करता है, उसे लक्ष कोटि जप करने पर भी सिद्धि नहीं मिलती ॥ ७० ॥

**कथ्यन्ते दश संस्कारा मन्त्रदोषहराः प्रिये ।**
**जननं जीवनं पश्चात्ताडनं बोधनं ततः ॥ ७१ ॥**
**अभिषेकोऽथ विमलीकरणाप्यायने तथा ।**
**तर्पणं दीपनं गुप्तिः संस्काराः कुलनायिके ॥ ७२ ॥**
**शाणोल्लोढानि शस्त्राणि यथा स्युर्निशितानि वै ।**
**मन्त्राश्च स्फूर्त्तिमायान्ति संस्कारैर्दशभिस्तथा ॥ ७३ ॥**

**मन्त्र के दस संस्कार**—हे प्रिये ! हे कुलनायिके ! मन्त्रदोषों को दूर करने वाले दस संस्कार ये हैं—१ जनन, २ जीवन, ३ ताडन, ४ बोधन, ५ अभिषेक, ६ विमलीकरण, ७ आप्यायन, ८ तर्पण, ९ दीपन एवं १० गुप्ति । सान पर चढ़ाने से जैसे शस्त्र तेज धार वाले होते है, वैसे ही इन दस संस्कारों से मन्त्र स्फूर्ति को प्राप्त करते हैं ॥ ७१-७३ ॥

**भक्ष्यं हविष्यं शाकादि विहितानि फलान्यपि ।**
**मूलं शक्तु यवानाञ्च शस्तान्येतानि मन्त्रिणाम् ॥ ७४ ॥**

**पुरश्चरणकाल में भोजनादि का नियम**—मन्त्रसाधकों को विहित शाक, फल, दूध सकरकन्द आदि मूल, सक्तु एवं यव आदि हविष्य का भोजन करना चाहिए ॥ ७४ ॥

**यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् ।**
**अन्नदातुः फलं चार्द्धं कर्तुश्चार्द्धं न संशयः ॥ ७५ ॥**

जिसके अन्न, पान आदि से शरीर पुष्ट होकर धर्म का सञ्चय करता है, उस अन्नदाता को साधक के कर्म का आधा फल मिलता है, इसमें कदापि सन्देह नहीं है ॥ ७५ ॥

**तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः ।**
**पुरश्चरणकाले च काम्यकर्मस्वपीश्वरि ॥ ७६ ॥**

अतः हे ईश्वरि ! पुरश्चरणकाल में और काम्य कर्मों में भी विद्वान् साधक प्रयत्न करके पराए अन्न को न ग्रहण करे ॥ ७६ ॥

**जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।**
**मनो दग्धं परस्त्रीभिः कार्यसिद्धिः कथं भवेत् ॥ ७७ ॥**

कहा भी है कि 'दूसरे के अन्न से जिसकी जीभ जली हुई है; दान लेने से जिसके दोनों हाथ जले हुए हैं और पराई स्त्री का चिन्तन करने से जिसका मन जला हुआ है, उसे कार्य में सिद्धि कैसे मिल सकती है ? ॥ ७७ ॥

**इन्द्राग्निरुद्रग्रहदृग्वेदार्कदिक्षडष्टसु ।**
**षोडशमनुबाणाब्धितिथित्रयोदशस्वपि ॥ ७८ ॥**
**लिखेत् षोडशकोष्ठेषु मातृकार्णान् विचक्षणः ।**
**स्वनामाद्यक्षराद् यावन्मन्त्राद्यक्षरदर्शनम् ॥ ७९ ॥**
**सिद्धादीन् कल्पयेन्मन्त्री कुर्यात् साध्यादिभिः पुनः ।**
**चतुश्चतुर्विभागेन सिद्धादीन् गणयेत् पुनः ॥ ८० ॥**

अकथह चक्र

| | | | |
|---|---|---|---|
| अ क थ ह<br>१ | उ ङ प<br>२ | आ ख द<br>३ | ऊ च फ<br>४ |
| ओ ड ब<br>५ | लृ झ म<br>६ | औ ढ श<br>७ | लॄ ञ य<br>८ |
| ई घ न<br>९ | ॠ ज भ<br>१० | इ ग ध<br>११ | ऋ छ व<br>१२ |
| अः त स<br>१३ | ऐ ठ ल<br>१४ | अं ण ष<br>१५ | ए ट र<br>१६ |

**सिद्धादि चक्रों का विचार**—सिद्धादि (अकथह) चक्र का प्रयोग मन्त्र साफल्य के ज्ञान के लिए होता है । इसी प्रकार नक्षत्र, राशि, कुलाकुल चक्रों से मन्त्र के सम्बन्ध में विचार कर ले । मन्त्र चार प्रकार के हैं—१. सिद्ध, २. साध्य, ३. सुसिद्ध, ४. अरि ।

इनमें से प्रत्येक के चार भेद हैं । यथा—**सिद्ध**—१. सिद्ध-सिद्ध, २. सिद्ध-साध्य, ३. सिद्ध-सुसिद्ध, ४.

सिद्ध-अरि । **साध्य**—१. साध्य-सिद्ध, २. साध्य-साध्य, ३. साध्य-सुसिद्ध, ४. साध्य-अरि । **सुसिद्ध**—१. सुसिद्ध-सिद्ध, २. सुसिद्ध-साध्य, ३. सुसिद्ध-सिद्ध, ४. सुसिद्ध-अरि । **अरि**—१. अरि-सिद्ध, २. अरि-साध्य, ३. अरि-सुसिद्ध, ४. अरि-रिपु ॥ ७८-८० ॥

**सिद्धसिद्धो जपात् सिद्धो द्विगुणात् सिद्धसाध्यकः ।**
**सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥ ८१ ॥**

१. 'सिद्ध-सिद्ध मन्त्र जप द्वारा सिद्ध होता है । २. 'सिद्ध-साध्य' दूने जप से और ३. 'सिद्ध-सुसिद्ध' आधे जप से सिद्ध होता है । ४. 'सिद्धधारि' मन्त्र का जप करने से बन्धु-बान्धव का नाश होता है ॥ ८१ ॥

**साध्यसिद्धोऽतिसंक्लेशात् साध्यसाध्यो निरर्थकः ।**
**साध्यसुसिद्धो भजनात् साध्यारिहन्ति गोत्रजान् ॥ ८२ ॥**

५. 'साध्य-सिद्ध' कठिनाई से सिद्ध होता है । ६. 'साध्य-साध्य' मन्त्र का जप व्यर्थ होता है । ७. 'साध्य सुसिद्ध' भजन करने से सिद्ध होता है और ८. 'साध्यारि' के जप से वंशजों का नाश होता है ॥ ८२ ॥

**सुसिद्धसिद्धोऽर्द्धजपात्तत्साध्यस्तु यथोक्ततः ।**
**तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा ॥ ८३ ॥**

९. 'सुसिद्ध सिद्ध' आधे जप से, १०. 'सुसिद्ध-साध्य' यथोक्त जप से, ११. 'सुसिद्ध-सुसिद्ध' ग्रहण मात्र में सिद्ध होता है । १२. 'सुसिद्धारि' अपने वंश का नाशक होता है ॥ ८३ ॥

**अरिसिद्धः सुतं हन्यादरिसाध्यस्तु योषितम् ।**
**तत्सुसिद्धः कुलं हन्ति स्वात्मानं हन्ति तद्रिपुः ॥ ८४ ॥**

१३. 'अरि-सिद्ध' पुत्र का, १४. 'अरि-साध्य' पत्नी का, १५. 'अरि-सुसिद्ध' कुल का और १६. 'अरि-अरि' अपनी आत्मा ( स्वयं ) का नाश करता है ॥ ८४ ॥

**सिद्धार्णा बान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः ।**
**सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः ॥ ८५ ॥**

इस प्रकार सिद्ध मन्त्र बान्धव, साध्य मन्त्र सेवक, सुसिद्ध मन्त्र पोषक और अरि मन्त्र घातक माने गये हैं ॥ ८५ ॥

**बान्धवा नवबार्णकाः स्युर्द्विषड्दश सेवकाः ।**
**वह्निरुद्रमुनयस्तु(पोषका) द्वादशाष्टकचतुरस्तु(घातकाः) ॥ ८६॥**

अकडम चक्र

| | | |
|---|---|---|
| उ ऊ ऋ वृषभ / मिथुन ॠ ऌ ॡ | मेष अ आ इ ई | य र ल व मीन / कुम्भ प फ ब भ म |
| कर्क ए ऐ | | मकर त थ द ध न |
| ओ औ / कन्या अं अः शषसहक्ष | तुला क ख ग घ ङ | ट ठ ड ढ ण धनु / वृश्चिक च छ ज झ ञ |

**अकडम चक्र विधान**—नौ, पाँच ( = बाण ) और एक खाने के वर्ण बान्धव हैं । दो, छः और दसवें खाने के वर्ण सेवक हैं । तीन ( स्वाहा ), ग्यारह ( रुद्र ) एवं सात ( मुनि ) खाने के वर्ण पोषक हैं । १२, ८, ४ खानों के वर्ण घातक हैं । अर्थात् ९, ५, १ खाने के वर्ण सिद्ध होते हैं । २, ६, १० खाने के वर्ण साध्य हैं । ३, ११, ७ खाने के वर्ण सुसिद्ध हैं । १२, ८, ४ खाने के वर्ण अरि मन्त्र होते हैं ॥ ८६ ॥

**प्राप लोभा पटु प्राह्यं रुद्रस्याद्रिरुरुः करम् ।**
**लोक लोप पटुः प्रायः खलोघोभेदिताः प्रिये ।**
**वर्णाः क्रमात् स्वरान्तौ तु रेवत्यंशगतौ तदा ॥ ८७ ॥**

**नक्षत्र चक्र विधान**—अश्विनी से लेकर रेवती तक २७ नक्षत्रों के चक्र में रखने का वर्णों को रखने का क्रम—प्राप—२, १ = अ । लोभा ३, ४ = आ। पटु—१, १ = उ । प्राह्यं—२, १ = अं । रुद्रास्य—२, २, १ । अद्रि—२। रुद्र—२, २ = अः । करम्—१, २ = अं । लोक—३, १ । लोप—३, १। पटु—१, १ । प्राह्य—१, १ । ख लो घो—२, ३, ४ । अर्थात् २, १, ३, ४, १, १, २, १, २, २, १, २, २, १, २, ३, १, ३, १, १, १, २, १, २, ३, ४— इन २६ गृहों में अकारादि स्वरों और व्यञ्जन वर्णों को रखना चाहिए । किन्तु २७ वें गृह में ल, क्ष, अं, अः—इन चार वर्णों को रक्खे ॥ ८७ ॥

नक्षत्र चक्र

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिरा | आर्द्रा | पुनर्वसु | पुष्य | आश्लेषा |
| अ आ | इ | ई उ ऊ | ऋॠऌॡ | ए | ऐ | ओ औ | क | ख ग |
| देव | नर | राक्षस | नर | देव | नर | देव | देव | राक्षस |
| मघा | पू०फा० | उ०फा० | हस्त | चित्रा | स्वाती | विशाखा | अनुराधा | ज्येष्ठा |
| घ ङ | च | छ ज | झ ञ | ट ठ | ड | ढ ण | त थ द | ध |
| राक्षस | नर | नर | देव | राक्षस | देव | राक्षस | देव | राक्षस |
| मूल | पूर्वाषाढा | उ०षाढा | श्रवण | धनिष्ठा | शतभिषा | पू०भा० | उ०भा० | रेवती |
| न प फ | ब | भ | म | य र | ल | व श | ष स ह | लक्षअंअः |
| राक्षस | नर | नर | देव | राक्षस | राक्षस | नर | नर | देव |

**जन्म सम्पद् विपत् क्षेम प्रत्यरिः साधको वधः ।**
**मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥ ८८ ॥**

१. जन्म, २. सम्पद्, ३. विपत्, ४. क्षेम, ५. प्रत्यरि, ६. साधक, ७. वध, ८. मित्र और ९. परम मित्र—ये ९ नक्षत्रों के गृहों के गुण के अनुसर नाम हैं । साधक के जन्म नक्षत्र से मन्त्र के नक्षत्र को मिलाकर गृहों के गुण के अनुसार फल की गणना करनी चाहिए ॥ ८८ ॥

**वालं गौरं खुरं शोणं शमीशोभेति राशिषु ।**
**क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृता ॥ ८९ ॥**

**राशि चक्र विधान**—मेषादि १२ राशियों के गृहों में वर्णों को रखने का क्रम यह है—बा = ४, लं = ३, गौ = ३, रम् = २, खु = २, ( १६ स्वर ), शो = ५, णं = ५, श = ५, मी = ५, शो = ५ और भ = ४ ( २९ व्यञ्जन ) । अर्थात् कन्या में श, ष, स और ह ये चार वर्ण होंगे ।

**विमर्श**—शारदातिलक ६-३, बृहत्तन्त्रसार पृ० ११ (दसवां संस्करण) एवं रुद्रयामल ३. ६२-६५ में कुछ भिन्न क्रम वर्णित है ॥ ८९ ॥

राशि चक्र

| | | |
|---|---|---|
| उ ऊ ऋ वृषभ<br>मिथुन ॠ ऌ ॡ | मेष<br>अ आ<br>इ ई | य र ल व मीन<br>कुम्भ प फ ब भ म |
| कर्क<br>ए ऐ | | मकर<br>त थ द ध न |
| ओ औ कन्या<br>अं अः<br>श ष स ह क्ष | तुला<br>क ख<br>ग घ ङ | ट ठ ड<br>ढ ण<br>वृश्चिक धनु<br>च छ ज झ ञ |

**लग्नो धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः ।**
**मरणं धर्मकर्माय व्यया द्वादश राशयः ॥ ९० ॥**

बारह राशियों के क्रमशः द्वादश (पारिभाषिक) नाम (उनके फल के अनुसार) इस प्रकार हैं—१. लग्न, २. धन, ३. भ्रातृ, ४. बन्धु, ५. पुत्र, ६. कलत्र, ८. मरण, ९. धर्म, १०. कर्म, ११. आय और १२. व्यय ॥ ९० ॥

**स्वराशेर्मन्त्रशश्यन्तं गणनीयं विचक्षणैः ।**
**अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः ॥ ९१ ॥**

बुद्धिमान् साधक राशि चक्र में गणना अपनी राशि से आरम्भ करे, अर्थात् अपनी राशि जिस गृह में हो वहाँ से गणना का आरम्भ होता है । यह गाना मन्त्र की राशि तक की जाती है । यदि अपनी राशि अज्ञात हो तो गणना अपने नाम की राशि से प्रारम्भ की जाती है ॥ ९१ ॥

नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
त्रिधा कृत्वा स्वरैभिन्द्यात्तदन्यद्विपरीतकम् ॥ ९२ ॥
कृत्वाधिकमृणं ज्ञेयं ऋणी चेन्मन्त्रवित्तमः ।
स्वयमृणी चेत्तन्मन्त्रं जपेत्पूर्वमृणी यतः ॥ ९३ ॥

**ऋणिधनीचक्र विधानम्**—इस चक्र में गणना करने पर १. यदि मन्त्राक्षर संख्या साधक (साध्याङ्क) की संख्या से अधिक हो तो मन्त्र ऋणि कहा जायगा और यदि मन्त्राक्षर संख्या साध्याङ्क से कम हो तो मन्त्र धनी होगा । इस प्रकार यदि साध्याङ्क अधिक हो तो मन्त्र धनी है और यदि साध्याङ्क कम हो तो मन्त्र ऋणि होगा । यदि दोनों की संख्या एक ही हो जाय तो अऋणि होगा ।

ऋणिधनी चक्र

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ |
| अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ | ए | ऐ | ओ | औ | अं | अः |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ |

साध्य नाम के प्रथमाक्षर से आरम्भ कर मन्त्राक्षर के प्रथमाक्षर तक गणना करनी चाहिए । इस प्रकार जो संख्या प्राप्त हो उसे तीन से गुणा करे । फिर उस गुणाङ्क को सात भाग में विभक्त करने पर साधक का अङ्क प्राप्त हो जाता है ।

पुनः विलोम क्रम से मन्त्र के प्रथमाक्षर से लेकर साधक के नाम के प्रथमाक्षर तक गणना करने पर उसे तीन से गुणा कर लब्धाङ्क को सात से भाग देने पर मन्त्र की संख्या प्राप्त होगी । यदि साध्याङ्क कम है तो मन्त्र ऋणि कहा जायेगा और ऋणि मन्त्र को ग्रहण करना मङ्गलकारक होता है ॥ ९२-९३ ॥

वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ।
पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः ।
कादयः पञ्चशः षक्षसहान्ताश्च प्रकीर्त्तिताः ॥ ९४ ॥

**कुलाकुल चक्र विधान**—अकार से क्षकार पर्यन्त५० वर्णों को ५ भागों में विभक्त करना चाहिए। प्रत्येक भाग एक-एक पृथ्वी आदि तत्त्वों को सूचित करता है। इनका विभाग इस प्रकार होगा—१. **वायु**—अ आ ऐ क च ट त प य ष, २. **अग्नि**—इ ई ए ख छ ठ थ फ र क्ष, ३. **पृथ्वी**—उ ऊ ओ ग ज ड द ब ल ळ, ४. **जल**—ऋ ॠ औ घ झ ढ ध भ व स, ५. **आकाश**—ऌ ॡ अं ङ ञ ण न म श ह ॥ ९४ ॥

कुलाकुलचक्र

| भूमि | जल | अग्नि | वायु | आकाश |
|---|---|---|---|---|
| उ | ऋ | इ | अ | ॡ |
| ऊ | ॠ | ई | आ | ऌ |
| ओ | औ | ए | ऐ | अं |
| ग | घ | ख | क | ङ |
| ज | झ | छ | च | ञ |
| ड | ढ | ठ | ट | ण |
| द | ध | थ | त | न |
| ब | भ | फ | प | म |
| ल | व | र | य | श |
| ळ | स | क्ष | ष | ह |

**महीसलिलयोर्मित्रमनिलानलयोरपि ।**
**शात्रवं वैपरीत्येन मैत्रं सर्वत्र चापरम् ॥ ९५ ॥**
**परस्परविरुद्धानां वर्णानां यत्र सङ्गतिः ।**
**वर्जयेत्तादृशं मन्त्रं नाशकृत्तत् कुलेश्वरि ॥ ९६ ॥**

पृथ्वी तत्त्व और जल तत्त्व में मित्रता है तथा अग्नि तत्त्व एवं वायु में शत्रुता है। किन्तु आकाश सभी तत्त्वों का मित्र है। अतः हे कुलेश्वरि ! जहाँ मन्त्राक्षर एवं साधकाक्षर में परस्पर मित्र हों वे शुभ हैं। यदि शत्रुता वाले गृह से मन्त्राक्षर ग्रहण किया गया है तो वह साधक के लिए हानिप्रद ही होगा। अतः शत्रुभाव के मन्त्र को त्याग देना चाहिए ॥ ९५-९६ ॥

**एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायिके ।**
**स्त्रीदत्ते स्वप्नलब्धे च सिद्धादीन्नैव शोधयेत् ॥ ९७ ॥**

**वे मन्त्र, जिनमें सिद्धादि का विचार अनावश्यक—**

हे मन्त्रनायिके ! एकाक्षरमन्त्र, कूटमन्त्र, त्रिपुरामन्त्र, स्त्री द्वारा दिए गए मन्त्र और स्वप्न में प्राप्त मन्त्र के सम्बन्ध में सिद्धादि का विचार न करे ॥९७॥

**मन्त्रसिद्धोपदिष्टेषु चतुराम्नायजेषु च ।**
**मालामन्त्रेषु देवेशि सिद्धादीन्नैव शोधयेत् ॥ ९८ ॥**

हे देवेशि ! इसी प्रकार सिद्ध पुरुष के द्वारा उपदिष्ट, चारों आम्नायों से उत्पन्न और मालामन्त्रों के सम्बन्ध में सिद्धादि का शोधन न करे ॥ ९८ ॥

**नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।**
**सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् ॥ ९९ ॥**

नृसिंह, सूर्य, वाराह, प्रासाद, प्रणव, सपिण्डाक्षर वाले मन्त्रों के सम्बन्ध में भी सिद्धादि का विचार न करे ॥ ९९ ॥

**मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।**
**न सिध्यति वरारोहे लक्षकोटिजपादपि ॥ १०० ॥**

**जप की सफलता में बाधक बातें**—हे वरारोहे ! मन कहीं हो, शिव कहीं हो, शक्ति कहीं हो और प्राण कहीं और हो, तो लक्ष कोटि जप से भी सिद्धि नहीं मिलती ॥ १०० ॥

**वादार्थं पठ्यते विद्या परार्थं क्रियते जपः ।**
**ख्यात्यर्थं दीयते दानं कथं सिद्धिर्वरानने ॥ १०१ ॥**

हे वरानने ! विवाद के लिए विद्या पढ़े, दूसरे के लिए जप करे, ख्याति के लिए दान दे, तो हे वरानने ! सिद्धि कैसे मिले ? ॥ १०१ ॥

**धनार्थं गम्यते तीर्थं दम्भार्थं क्रियते तपः ।**
**कार्यार्थे देवतापूजा कथं सिद्धिर्नु जायते ॥ १०२ ॥**

धन के लिए तीर्थ में जाय, दम्भ के लिए तप करे, स्वार्थ के लिए देवपूजा करें, तो सिद्धि कैसे हो ? ॥ १०२ ॥

**अमेध्येन तु देहेन न्यासं देवार्चनं जपम् ।**
**होमं कुर्वन्ति चेन्मूढास्तत् सर्वं निष्फलं भवेत् ॥ १०३ ॥**

हे प्रिये ! अशुद्ध देह से न्यास, देवपूजा, जप और होम जो मूर्ख करते हैं, उनका सारा कर्म निष्फल होता है ॥ १०३ ॥

**विण्मूत्रत्यागशेषादियुक्तः कर्म करोति यः ।**
**जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये ॥ १०४ ॥**

हे प्रिये ! मलमूत्र का त्याग किए बिना जो कर्म करता है, उसका जप पूजनादि सभी अपवित्र होता है ॥ १०४ ॥

**मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।**
**यो जपेत्तं दहत्याशु देवता सुजुगुप्सिता ॥ १०५ ॥**

मैले वस्त्र, केशादि और दुर्गन्धित मुख से युक्त जो जप करता है, उससे देवता रुष्ट होकर उसका शीघ्र ही नाश करते हैं ॥ १०५ ॥

**आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।**
**नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत् ॥ १०६ ॥**

आलस्य, जँभाई, नींद, भूख, प्यास, थूकना, भय, नीचाङ्ग का स्पर्श और क्रोध—इस सबको जपकाल में दूर रखे ॥ १०६ ॥

**अत्याहारः प्रलापश्च प्रजल्पो नियमाग्रहः ।**
**अन्यासङ्गश्च लौल्यञ्च षड्भिर्मन्त्रो न सिध्यति ॥ १०७ ॥**

१. अधिक भोजन, २. प्रलाप, ३. वाद-विवाद, ४. नियमाग्रह और ५. पराई स्त्री या ६. अन्य लोगों का साथ–इन छः बातों से मन्त्र सिद्ध नहीं होता।

**उष्णीशी कञ्चुकी नग्नो मुक्तकेशो गणावृतः ।**
**अपवित्रोत्तरीयश्चाशुचिर्गच्छंश्च नो जपेत् ॥ १०८ ॥**

टोपी पहनकर, कंचुकी धारण कर, नग्न और मुक्त केश होकर, लोगों से घिर कर, अपवित्र उत्तरीय धारण कर, अशुद्धावस्था में अथवा चलते हुये जप न करे ॥ १०८ ॥

**जाड्यं दुःखं तृणच्छेदं विवादं वा मनोरथम् ।**
**बहिस्तु देहवायुञ्च जपकाले विवर्जयेत् ॥ १०९ ॥**

जपकाल में जड़ता, दुःख, तिनका तोड़ना, विवाद या घमण्ड और अधोवायु का त्याग न करे ॥ १०९ ॥

**शान्तः शुचिमिताहारो भूशायी भक्तिमान् वशी ।**
**निर्द्वन्द्वः स्थिरधीमौनी संयतात्मा जपेत् प्रिये ॥ ११० ॥**

**जप की सफलता के लिये आवश्यक बातें**—हे प्रिये ! शान्त, पवित्र, अल्पाहारी, भूमि पर शयन करने वाला, भक्तिमान्, अनुशासनपूर्ण, निर्द्वन्द्व, स्थिरचित्त, मौनी और संयतात्मा होकर जप करे ॥ ११० ॥

**विश्वासास्तिक्यकरुणाश्रद्धानियमनिश्चयैः ।**
**सन्तोषौत्सुक्यधर्मादिगुणैर्युक्तो जपेन्नरः ॥ १११ ॥**

साथ ही साधक को विश्वास, आस्तिकता, करुणा, श्रद्धा, नियमपालन, दृढ़ निश्चय, सन्तोष, उत्सुकता और धर्मनिष्ठा आदि गुणों से युक्त होकर जप करना चाहिए ॥ १११ ॥

**सुगन्धिपुष्पाभरणवस्त्रादिभिरलङ्कृतः ।**
**तस्य हस्तगता सिद्धिर्नान्यस्य जपकोटितः ॥ ११२ ॥**

सुगन्धि, पुष्प, आभूषण और वस्त्रों से अलंकृत साधक के हाथ में सिद्धि रहती है । अन्य को कोटि जप से भी सिद्धि नहीं मिलती ॥ ११२ ॥

**तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।**
**तत्पदार्थानुसन्धानं कुर्वन् मन्त्रं जपेत् प्रिये ॥ ११३ ॥**

हे प्रिये ! इष्टदेव में निष्ठा, उन्हीं में प्राण, उन्हीं में चित्त, उन्हीं के तत्त्व चिन्तन में लगा हुआ जप करे ॥ ११३ ॥

**जपात् श्रान्तः पुनर्ध्यायेद्ध्यानात् श्रान्तः पुनर्जपेत् ।**
**जपध्यानादियुक्तस्य क्षिप्रं मन्त्रः प्रसिध्यति ॥ ११४ ॥**

जप से थक कर पुनः ध्यान करे । ध्यान से थक कर पुनः जप करे । इस प्रकार जप ध्यान से युक्त रहने वाले साधक को शीघ्र ही सिद्धि मिलती है ॥ ११४ ॥

**इति ते कथितं किञ्चित् पुरश्चरणलक्षणम् ।**
**समासेन कुलेशानि किं भूयः श्रोतुमिच्छसि ॥ ११५ ॥**

**॥ इति श्रीकुलार्णवे निर्वाणमोक्षद्वारे महारहस्ये सर्वागमोत्तमोत्तमे सपादलक्षग्रन्थे पञ्चमखण्डे ऊर्ध्वाम्नायतन्त्रे पुरश्चरणादि-कथनं नाम पञ्चदशोल्लासः ॥ १५ ॥**



इस प्रकार मैंने पुरश्चरण के कुछ लक्षण संक्षेप में आपसे कहे । अब हे कुलेशानि ! आप क्या सुनना चाहती हैं ? ॥ ११५ ॥

**॥ इस प्रकार श्रीकुलार्णवतन्त्र के ऊर्ध्वाम्नायतन्त्र में पुरश्चरणादिकथन नामक पन्द्रहवें उल्लास की पं० चित्तरञ्जन मालवीय कृत हिन्दी पूर्ण हुई ॥ १५ ॥**



# अथ षोडशोल्लासः

श्रीदेव्युवाच

कुलेश श्रोतुमिच्छामि करुणामृतवारिधे ।
काम्यकर्मविधानञ्च वद मे परमेश्वर ॥ १ ॥

**काम्यकर्म का विधान**—श्री देवी ने कहा—हे कुलेश, हे करुणा रूपी अमृत के समुद्र, हे परमेश्वर ! मैं काम्य कर्म के विधान को सुनना चाहती हूँ, कृपाकर उसे बताइए ॥ १ ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणामात्रेण प्रयोगनिपुणो भवेत् ॥ २ ॥

ईश्वर ने कहा—हे देवि ! सुनिए । जो आपने मुझसे पूँछा है उसे मैं कहता हूँ जिसके सुनने मात्र से श्रोता (काम्यकर्म के) प्रयोग में निपुण हो जाता है ॥ २ ॥

मन्त्री विशुद्धहृदयः पूर्वोक्तनियमान्वितः ।
श्रीप्रासादपरामन्त्रं तत्त्वलक्षं जपेत् प्रिये ॥ ३ ॥

**जप एवं होमादि का फल**—हे प्रिये ! मन्त्र साधक विशुद्ध हृदय से पूर्वोक्त (पूर्व के सभी उल्लसों में कहे गए) नियमों से युक्त होकर 'श्री प्रासाद परामन्त्र' का पाँच लाख जप करे ॥ ३ ॥

दशांशं जुहुयाद्देवि संस्कृते हव्यवाहने ।
दशांशं तर्पयेद्दुग्धैः सलिलैः शालितण्डुलैः ॥ ४ ॥

हे देवि ! (अग्नि संस्कार से) संस्कृत हव्यवाहन में (जप संख्या के) दशांश से होम करना चाहिए और उसके दशांश से दुग्ध, जल एवं शालि के चावल (अक्षत) से तर्पण करे ॥ ४ ॥

गन्धपुष्पाक्षताकल्पधनवस्त्रादिभिः प्रिये ।
भक्ष्याथोन्यान्नपानाद्यैर्हव्यद्रव्यैर्मनोहरैः ॥ ५ ॥
तोषयेद् योगिनीचक्रं यथाविभवविस्तरम् ।

हे प्रिये ! गन्ध, पुष्प, अक्षत मनः संकल्पित धन एवं वस्त्र आदि भक्ष्य एवं भोज्य अन्न तथा पानादि और अन्य मनोहर हव्य द्रव्यों से यथाशक्ति विभव एवं विस्तार के साथ योगिनी चक्र की पूजा करना चाहिए ॥ ५-६ ॥

**एवं न्यासजपध्यानसहोमार्च्चनतर्पणः ॥ ६ ॥**
**मन्त्री सिद्धिमनुर्द्देवि साक्षात् परशिवो भवेत् ।**

**सिद्ध मन्त्र वाले साधक को षट्कर्म में सफलता**—हे देवि ! इस प्रकार न्यास, जप, ध्यानपूर्वक होमार्चन और तर्पण करने से मन्त्र सिद्ध होकर साधक साक्षात् परशिव स्वरूप हो जाता है ॥ ६-७ ॥

**ततः स्वमनसोऽभीष्टान् प्रयोगान् कुलनायिके ॥ ७ ॥**
**मन्त्रेणानेन मतिमान् साधयेद् भुक्तिमुक्तये ।**
**सिद्धमन्त्रस्य सिध्यन्ति षट् कर्माणि न संशयः ।**
**नैव सिध्यन्त्यसिद्धस्य देवताशापमाप्नुयात् ॥ ८ ॥**

हे कुलनायिके ! इसके बाद ही बुद्धिमान् साधक भुक्ति एवं मुक्ति के लिए इस ( परा प्रासाद ) मन्त्र से अपने अभीष्ट प्रयोगों का साधन करे । इसमें सन्देह नहीं है कि सिद्धमन्त्र का षट्कर्म ( मारण, मोहन, वशीकरण, उच्चाटन, स्तम्भन और शान्ति ) में प्रयोग सिद्धि प्रदान करता है । असिद्ध मन्त्र सिद्ध नहीं होते और सांधक देवता का शाप प्राप्त करता है ॥ ७-८ ॥

**काम्यप्रयोगकर्त्तॄणां परलोको न विद्यते ।**
**प्रयोगसिद्धिरेवैषां फलमन्यन्न तु प्रिये ॥ ९ ॥**

**काम्यप्रयोगकर्त्ता को मोक्ष नहीं**—हे प्रिये ! काम्य प्रयोग करने वालों का मोक्ष नहीं होता । उन्हें अपने प्रयोगों में सिद्धि मिलती है, यही उनकी सफलता है ॥ ९ ॥

**एकस्यापि विधानस्य न कुत्रापि फलद्वयम् ।**
**देवेशि दृश्यते तस्मान्निष्कामो देवतां यजेत् ॥ १० ॥**

एक विधान के दो फल कहीं भी नहीं मिलते । हे देवेशि ! इसीलिए देवता का यजन निष्काम भाव से करना चाहिये ॥ १० ॥

**होमतर्पणमन्त्राद्यैर्न्यासध्यानविशेषकैः ।**
**आत्मनश्च परस्यापि षट् कर्माणि समाचरेत् ॥ ११ ॥**

**प्रयोग के दोषों की शान्ति चक्रपूजा से**—होम, तर्पण, मन्त्रादि से न्यास एवं ध्यान द्वारा अपने और दूसरों के षट्कर्मों को करे ॥ ११ ॥

प्रयोगान्ते चक्रपूजां विधिनैव समाचरेत् ।
लक्षमेकं जपेन्मन्त्रं न्यासध्यानसमन्वितः ॥ १२ ॥
प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेव च ।
न चेत् फलं न चाप्नोति देवताशापमाप्नुयात् ॥ १३ ॥

प्रयोग के दोषों की शान्ति के लिए और अपनी रक्षा के लिये प्रयोग के अन्त में विधि पूर्वक चक्रपूजा करे और न्यास ध्यानपूर्वक मन्त्र का एक लाख जप कर ले । नहीं तो, अभीष्ट फल नहीं मिलता, अपितु देवता का शाप मिलता है ॥ १२-१३ ॥

तिथिवारञ्च नक्षत्रं योगमासर्त्तु पक्षकम् ।
दीपेशं कुलचक्राणि ज्ञात्वा कर्माणि साधयेत् ॥ १४ ॥

**प्रयोग के पूर्व ज्ञातव्य बातें**–तिथि, वार, नक्षत्र, योग, मास, ऋतु, पक्ष, दीप एवं उनके स्वामियों और कुलचक्रों को जानकर कर्म को सिद्ध करे ॥१४॥

ऋषिच्छन्दोदेवताङ्गन्यासध्यानार्च्चनादिकम् ।
बीजं शक्तिं कीलकञ्च ज्ञात्वा मन्त्राणि साधयेत् ॥ १५ ॥

ऋषि, छन्द, बीज, शक्ति, कीलक, देवता, अङ्गन्यास, ध्यान और पूजन को जानकर मन्त्रों की साधना करे ॥ १५ ॥

पुत्रबान्धवदाराश्च राशिवर्णानुकूलता ।
भूतमैत्रीं तथोद्यन्तं ज्ञात्वा मन्त्राणि साधयेत् ॥ १६ ॥

पुत्र, बान्धव और पत्नी तथा राशि एवं वर्ण की अनुकूलता, भूतमैत्री तथा उदय अन्त को जानकर मन्त्र की साधना करें ॥ १६ ॥

मन्त्रविद्याऽभेदरूपं निद्राञ्च बोधरूपकम् ।
स्त्रीपुंनपुंसकादींश्च ज्ञात्वा कर्माणि साधयेत् ॥ १७ ॥
स्वरवर्णपदद्वित्वं विदुश्चैतन्यसूतकम् ।
ह्रस्वदीर्घप्लुतादींश्च ज्ञात्वा मन्त्राणि साधयेत् ॥ १८ ॥

मन्त्र और विद्या की अभिन्नता, उनके निद्रा और बोधरूपों तथा स्त्री-पुं-नपुंसकादि लिङ्गभेद को जानकर कर्मों को सिद्ध करे । स्वर, वर्ण और पद, चैतन्य और सूतक तथा ह्रस्व, दीर्घ, प्लुत आदि को जानकर मन्त्र की साधना करे ॥ १७ ॥

पञ्चशुद्ध्यासनप्राणायामन्यासाक्षमालिकाः ।
दोषसंस्कारमुद्रादीन् ज्ञात्वा कर्माणि साधयेत् ॥ १९ ॥

पञ्चशुद्धि, आसन, प्राणायाम, न्यास, अक्षमाला, मन्त्रदोष, मन्त्रसंस्कार और मुद्रा आदि को जानकर क्रिया करे ॥ १९ ॥

**तथैवासनदिग्बन्धनाडीबन्धादिसङ्गतिम् ।**
**देवताकालमुद्रादि ज्ञात्वा कर्माणि साधयेत् ॥ २० ॥**

इसी प्रकार आसन, दिग्बन्ध, नाडी बन्धादि, तत्त्व सङ्गति, देवता, काल एवं मुद्रादि को जानकर कर्म सिद्ध करे ॥ २० ॥

**साध्यसाधककर्माणि लेखनीद्रव्यपञ्चकम् ।**
**स्थानं यन्त्रं प्रमाणञ्च ज्ञात्वा कर्माणि साधयेत् ॥ २१ ॥**

१. साध्य, २. साधक, ३. कर्म, ४. लेखनी और ५. द्रव्य—इन पाँचों को तथा स्थान, यन्त्र और प्रमाण का जानकर कर्मसाधना करे ॥ २१ ॥

**उत्पत्तिवासनावर्णमूर्त्तिसंस्कारसंस्थितम् ।**
**कुण्डद्रव्यप्रमाणादीन् ज्ञात्वा होमं समाचरेत् ॥ २२ ॥**

उत्पत्ति, वासना, वर्ण स्वरूप, मूर्त्ति, संस्कारविधि, कुण्ड एवं उसके द्रव्यों की मात्रा को जानकर होम करे ॥ २२ ॥

**अग्निप्रभां धूम्रवर्णध्वनिगन्धशिखाकृतीः ।**
**शुभचेष्टादिकं ज्ञात्वा कल्पयेत्तु शुभाशुभम् ॥ २३ ॥**

अग्नि की प्रभा, धुएँ और वर्ण, ध्वनि, गन्ध, शिखा, आकृतियों और शुभ चेष्टादि को जानकर शुभ तथा अशुभ का निर्णय करे ॥ २३ ॥

**मन्त्रतत्त्वानुसन्धानदेहावेशादिलक्षणम् ।**
**मन्त्रोच्चारणभेदञ्च ज्ञात्वा कर्माणि साधयेत् ॥ २४ ॥**

मन्त्र तन्त्र के अनुसंधान से देहावेशादि लक्षण और मन्त्रोच्चारण के भेद को जानकर साधना करे ॥ २४ ॥

**मण्डलं कलसद्रव्यशुद्धि गन्धाष्टकादिकम् ।**
**दीक्षानामप्रदानादि ज्ञात्वा दीक्षां समाचरेत् ॥ २५ ॥**

मण्डल, कलश, द्रव्य, शुद्धि, गन्धाष्टक, दीक्षा, नामकरण आदि को जानकर दीक्षाकर्म करे ॥ २५ ॥

**नित्यं नैमित्तिकं काम्यं नियमं नाम वासनाम् ।**
**पूजाधारणयन्त्रादि ज्ञात्वा कर्माणि साधयेत् ॥ २६ ॥**

नित्य, नैमित्तिक, काम्य, नियम, नामों की भावना, पूजनविधि और धारण यन्त्रों आदि को जानकर साधना करे ॥ २६ ॥

पूजागृहप्रवेशादिकुलपूजकलक्षणम् ।
कुलद्रव्यादिशुद्धिञ्च ज्ञात्वा पूजां समाचरेत् ॥ २७ ॥
अन्तर्यागं बहिर्यागं घटार्घ्यस्थापनादिकम् ।
पञ्चपुष्पाञ्जलिं देवि ज्ञात्वा कर्माणि साधयेत् ॥ २८ ॥

पूजागृह में प्रवेश की विधि, कुलपूजा के लक्षण व कुलद्रव्यादि की शोधन विधि जानकर पूजा करे । अन्तर्याग, बहिर्याग, घट और अर्घ्यपात्र की स्थापना विधि आदि पञ्च पुष्पाञ्जलि की विधि जानकर साधना करे ॥ २७-२८॥

पात्राधारालिपिशितं कलामुद्राध्वमेलनम् ।
बटुकादिबलिं देवि ज्ञात्वा कर्माणि साधयेत् ॥ २९ ॥

हे देवि ! पात्र, आधार, अलि (मद्य), पिशित (मांस), कला, मुद्रा, अध्वमेलन और बटुकादि बलि की विधि को जानकर कर्म करे ॥ २९ ॥

कुलाकुलाख्यसहजशक्तिभेदञ्च लक्षणम् ।
शुभलक्षणसंयुक्तं स्त्रीसंस्कारार्चनादिकम् ।
देवि सम्भोगकालञ्च ज्ञात्वा शक्तिं परिग्रहेत् ॥ ३० ॥

हे देवि ! कुल अकुल नामक सहज गति, शक्तिभेद, शुभ लक्षण, स्त्री के संस्कार व अर्चन की विधि आदि और सम्भोग काल को जानकर साधक शक्ति ग्रहण करे ॥ ३० ॥

पानभेदं फलोल्लासप्रमाणं स्थितिलक्षणम् ।
तत्त्वत्रयस्य स्वीकारं ज्ञात्वा कुलसुधां पिबेत् ॥ ३१ ॥

साधक पानभेद, उनके फल, उल्लास के प्रमाण, स्थिति, लक्षण और तत्त्वत्रय स्वीकार करने की विधि को जानकर कुलसुधा का पान करे ॥ ३१ ॥

चक्रप्रवेशं प्रणति स्थिति निर्गमनं प्रिये ।
योगिनीभोगचेष्टादि ज्ञात्वा भवति कौलिकः ॥ ३२ ॥

हे प्रिये ! चक्र में प्रवेश करने की विधि, प्रणाम करना, चक्र में स्थित रहना और उससे बाहर जाना तथा योगिनी की योग चेष्टाओं को जानकर साधक 'कौलिक' होता है ॥ ३२ ॥

रत्युल्लासनकालञ्च कुलदीपनिवेदनम् ।
शान्तस्तवादिपठनं ज़ात्वा स्यात् कुलदेशिकाः ॥ ३३ ॥

रति के उल्लासकाल, कुलदीप के निवेदन और शान्तिस्तव आदि के पाठ की विधि को जानकर साधक 'कुलदेशिक' होता है ॥ ३३ ॥

**मिथुनानुग्रहाष्टाष्टपुष्पिणीकन्यकार्च्चनाम् ।**
**विशेषतिथिपूजाञ्च ज्ञात्वा कर्माणि साधयेत् ॥ ३४ ॥**

मिथुन के अनुग्रह, अष्टाष्टपूजन, पुष्पिणी कुमारी का अर्चन और विशेष तिथियों के पूजन को जानकर साधना करे ॥ ३४ ॥

**आम्नायभेदं सङ्केतं पुष्पसङ्कोचमेव च ।**
**गुरुत्रयं सम्प्रदाय ज्ञात्वा कर्माणि साधयेत् ॥ ३५ ॥**

आम्नायभेद, सङ्केत, पुष्प सङ्कोच, गुरुत्रय और ( कुल ) सम्प्रदाय को जानकर साधना करे ॥ ३५ ॥

**श्रौतविद्याकुलाचारं मनुभेदञ्च पादुकाम् ।**
**चरणत्रितयं देवि ज्ञात्वा कर्माणि साधयेत् ॥ ३६ ॥**

श्रौत विद्या, कुलाचार, मन्त्रों के भेद, पादुका और हे देवि ! चरणत्रितय को जानकर साधना करे ॥ ३६ ॥

**स्वाधिकस्य समन्यूनकौलिकाराधनक्रमम् ।**
**सिद्धमुद्राधरार्चादि ज्ञात्वा कर्माणि साधयेत् ॥ ३७ ॥**

अपने साधनक्रम से अधिक, समान और न्यून कौलिक आराधनक्रम को और सिद्ध मुद्राओं एवं अर्चन आदि को जानकर कर्म करे ॥ ३७ ॥

**गुर्वग्निप्रेतसंस्कारमन्त्येष्टिं दिग्बलिक्रमम् ।**
**मोक्षदीपविधानादि ज्ञात्वा कर्माणि साधयेत् ॥ ३८ ॥**
**इत्याद्याः कथिताः किञ्चिद्विशेषाः कुलनायिके ।**
**सर्वेषामेव मन्त्राणां विधिः साधारणक्रमः ॥ ३९ ॥**

गुरु एवं कुलाग्नि, प्रेतसंस्कार, अन्त्येष्टि, दिग्बलि और मोक्षदीप आदि की विधि विधान को जानकर साधना करे । हे कुलनायिके! ये सब कुछ विशेष बातें कही गई हैं, वैसे सभी मन्त्रों की विधि का क्रम सामान्य ही है ॥ ३८-३९ ॥

**मन्त्राः पुरुषदेवाः स्युर्विद्याः स्त्रीदेवताः प्रिये ।**
**मन्त्राः पुंसो हुंफडन्ताः प्राणे चरति दक्षिणे ।**
**प्रबुध्यन्तेऽग्निजायान्ता विद्याः स्त्रीदेवताः प्रिये ॥ ४० ॥**
**वामे प्राणे प्रबुध्यन्ते नमोऽन्ताः स्युर्नपुंसकाः ।**
**नाडीद्वयगते प्राणे सर्वे बोधं प्रयान्ति च ॥ ४१ ॥**

**मन्त्रों का लिङ्गभेद**—हे प्रिये ! मन्त्रों के पुरुष देवता होते हैं और विद्याओं की स्त्री देवता होती है । 'हुं' और 'फट्' जिन मन्त्रों के अन्त में हैं,

वे पुरुषमन्त्र हैं, उनमें प्राण दक्षिण ( पिङ्गला ) की ओर चलता है । जिन मन्त्रों के अन्त में 'स्वाहा' है, हे प्रिये ! वे स्त्रीदेवता वाले मन्त्र हैं और उनमें पाण बाई ( इडा की ) ओर चलता है । 'नम': से अन्त होने वाले मन्त्र नपुंसक होते हैं और उनमें प्राणवायु दोनों नासिकाओं से चलती है ॥ ४०-४१ ॥

**शान्तिके मनवः सौम्या भूयिष्ठेन्द्वमृताक्षराः ।**
**स्वाहान्ताः स्युर्वियत्प्रायाश्चाग्नेयाः क्रूरकर्मसु ॥ ४२ ॥**
**फट् च पुष्टौ वषट् वश्ये हुंफट् चैव तु मारणे ।**
**स्तम्भने च नमः प्रोक्तं स्वाहा शान्तिकपौष्टिके ॥ ४३ ॥**

**काम्यकर्म के भेद से मन्त्रभेद**—शान्तिकर्म में सौम्य' मन्त्र का प्रयोग किया जाता है और इनके अधिक वर्ण चन्द्र एवं अमृत तत्त्व वाले होते हैं तथा अन्त में 'स्वाहा' होता है । क्रूर कर्मों में आग्नेय मन्त्रों का प्रयोग होता है । पुष्टि ( समृद्धि ) कर्मों में 'फट्' से युक्त मन्त्रों का, वशीकरण में वषट् से युक्त और मारण कर्मों में 'हुं फट्' का प्रयोग होता है । स्तम्भन कर्मों में नमः का और शान्ति, पुष्टि कर्मों में 'स्वाहा' का प्रयोग होता है ॥ ४२-४३ ॥

**होमतर्पणयोः स्वाहा न्यासपूजनयोर्नमः ।**
**मन्त्रान्ते योजयेन्मन्त्री जपकाले यथास्थितम् ॥ ४४ ॥**

होम और तर्पण में 'स्वाहा', न्यास और पूजन में 'नमः' का प्रयोग मन्त्र के अन्त में करना चाहिए । साधक को जपकाल में परिस्थिति के अनुसार इनका प्रयोग करना चाहिये ॥ ४४ ॥

**शान्तिके राजतं ताम्रं भूर्जपत्रन्तु वश्यके ।**
**सर्वकार्येषु सौवर्णे क्रूरे स्यात् प्रेतकर्पटम् ॥ ४५ ॥**

शान्तिकर्म में रजत और ताम्रपत्र, वश्य में भोजपत्र, सभी कर्मों में स्वर्णपत्र और क्रूर कर्मों में प्रेतकर्पट ( कफन ) विहित है ॥ ४५ ॥

**त्रिगन्धं शान्तिके प्रोक्तं पञ्चगन्धश्च वश्यके ।**
**सर्वकार्यष्वष्टगन्धं क्रूरे चाष्टविषाणि च ॥ ४६ ॥**

शान्तिकर्म में त्रिगन्ध, वश्य में पञ्चगन्ध, सभी कार्यों में अष्टगन्ध, और क्रूर कर्मों में अष्ट विषों का प्रयोग करे ॥ ४६ ॥

**शान्तके लेखनी दूर्वा वश्यादौ शिखिपुच्छिका ।**
**हेम्ना तु सर्वकार्याणि क्रूरे स्यात् काकपुच्छिका ॥ ४७ ॥**

शान्तिकर्म में दूर्वा की कलम, वश्य में मयूरपुच्छ की, सभी कर्मों में स्वर्ण की और क्रूर कर्मों में काग पुच्छ की लेखनी का प्रयोग करे ॥ ४७ ॥

**स्वगृहे शान्तिकर्म स्याद्वश्याद्यं चण्डिकालये ।**
**सर्वकार्यं देवगृहे श्मशाने क्रूरकर्म च ॥ ४८ ॥**

शान्तिकर्म अपने घर में, वश्यादि देवी मन्दिर में, सभी कार्य देवालय में और क्रूर कर्म श्मशान में करे ॥ ४८ ॥

**लक्षणान्येवमादीनि ज्ञात्वा गुरुमुखात् प्रिये ।**
**सर्वकर्माणि कुर्वीत मन्त्री तत्तत्फलाप्तये ॥ ४९ ॥**

हे प्रिये ! इस प्रकार मन्त्रज्ञ साधक उक्त लक्षणों को गुरुमुख से जानकर सभी कर्मों को उनका फल पाने के लिये विधिपूर्वक अनुष्ठान करे ॥ ४९ ॥

**मूले प्रासादबीजञ्च तरुणादित्यसन्निभम् ।**
**उत्तमाङ्गे पराबीजं चन्द्रायुतसमप्रभम् ॥ ५० ॥**
**परस्परजनस्पर्शजनितानन्दनिर्भरः ।**
**मूलादिब्रह्मरन्ध्रान्तं अनवच्छिन्नरूपिभिः ॥ ५१ ॥**
**परामृतरसासेकैः सिक्तमापादमस्तकम् ।**
**आत्मानं भावयेन्नित्यं स भवेदजरामरः ॥ ५२ ॥**

**निज रूप की भावना**—मूलाधार में तरुण सूर्य के समान आभा वाले प्रासाद बीज का और शिर में अयुत चन्द्रों के समान प्रभा वाले पराबीज का ध्यान करते हुये उनके परस्पर स्पर्श से उत्पन्न आनन्द से पुलकित होते हुये मूलाधार से ब्रह्मरन्ध्र तक अबाध रूप से परामृत रस के सिञ्चन द्वारा पैरों से मस्तक तक अपने को जो नित्य आप्लावित अनुभव करता है, वह अजर और अमर होता है ॥ ५०-५२ ॥

**एवं ध्यात्वा कुलेशानि सर्वकर्माणि साधयेत् ।**
**सिध्यन्ति तरसा देवि नात्र कार्या विचारणा ॥ ५३ ॥**

हे कुलेशानि ! इस प्रकार ध्यान करते हुये जो सभी कर्मों की साधना करता है, हे देवि ! उसे शीघ्र सिद्धि मिलती है, इसमें सन्देह नहीं ॥ ५३ ॥

**ध्यानभेदं प्रवक्ष्यामि सर्वसिद्धिकरं प्रिये ।**
**ईप्सितं लभते येन पूजाहोमादिकं विना ॥ ५४ ॥**

**सात्त्विक ध्यान और उसका फल**—हे प्रिये ! सब सिद्धियों के देने वाले ध्यान के भेद बताऊँगा, जिससे पूजा और होमादि के बिना अभीष्ट की प्राप्ति होती है ॥ ५४ ॥

**स्थाने मनोहरे देवि साधकः स्थिरमानसः ।**
**स्थितो मृद्वासने ध्यायेद् गुरुवन्दनपूर्वकम् ॥ ५५ ॥**

**मस्तकस्थितसम्पूर्णचन्द्रमण्डलमध्यगम् ।**
**श्रीप्रासादपराबीजं षोडशस्वरसंयुतम् ॥ ५६ ॥**
**शुद्धस्फटिककर्पूरकुन्देन्दुधवलं प्रिये ।**

किसी मनोहर स्थान में स्थिर मन होकर साधक सुखासन पर बैठे । फिर गुरु वन्दनापूर्वक अपने मस्तक में स्थित पूर्ण चन्द्र के उज्ज्वल मण्डल का ध्यान करे । हे प्रिये ! उस मण्डल के मध्य में मोती, स्फटिक, कर्पूर, कुन्द, पुष्प और चन्द्रमा के समान धवल तथा सोलह स्वरों से युक्त श्री प्रासाद पराबीज का चिन्तन करे ॥ ५५-५७ ॥

**सच्चन्द्रबिम्बसञ्जातसुधाप्लावितविग्रहम् ॥ ५७ ॥**
**आत्मानं भावयेन्नित्यं निश्चलेनान्तरात्मना ।**
**सर्वारिष्टं विलीयेत शुभश्रीपुष्टिकारकम् ॥ ५८ ॥**

निश्चल अन्तरात्मा में स्थित उस चन्द्रमण्डल से निकलती हुई सुधा से अपने शरीर को आप्लावित होता हुआ नित्य अनुभव करे । इससे सभी अरिष्ट नष्ट होकर शुभ, श्री और पुष्टि का लाभ होता है ॥ ५७-५८ ॥

**श्रीप्रासादपरामन्त्रमष्टोत्तरसहस्रकम् ।**
**तरुणोल्लाससहितो मण्डलं पूजयेत् प्रिये ॥ ५९ ॥**

हे प्रिये ! तरुणोल्लास से युक्त होकर श्री प्रासादपरा मन्त्र का १००८ बार जप कर मण्डलपूजा करे ॥ ५९ ॥

**अपमृत्युमहारोगजरामरणजं भयम् ।**
**ग्रहापस्मारवेतालभूतोन्मादादिजं भयम् ॥ ६० ॥**
**जित्वाधिव्याधिरहितः पुत्रपौत्रसमन्वितः ।**
**जीवेद्वर्षशतं साग्रं पूजितः सर्वमानवः ॥ ६१ ॥**

इससे अपमृत्यु, महान् रोग, जरा और मरणजन्य भय तथा ग्रह, अपस्मार, वेताल भूतोन्माद से होने वाले भय दूर होकर आधि व्याधि से रहित होकर साधक पुत्र पौत्र से सम्पन्न होता हुआ सौ वर्ष तक जीवित रहता है । साथ ही सभी मनुष्यों द्वारा पूजित होता है ॥ ६०-६१ ॥

**अश्रुतं बुध्यते शास्त्रं कविता निर्मला भवेत् ।**
**चिन्मयो जायते साक्षान्नात्र कार्या विचारणा ॥ ६२ ॥**

अश्रुत शास्त्र को वह समझ लेता है, निर्मल कविता रचने लगता है और साक्षात् चिन्मय हो जाता है, इसमें सन्देह नहीं ॥ ६२ ॥

ज्वरोन्मादादिरोगेषु जपेच्छिरसि चिन्तयन् ।
शूलवातव्रणग्रन्थिमूत्रकृच्छ्रादिसम्भवे ।
तत्तत्स्थानेषु देवेशि पूर्ववच्चिन्तयन् जपेत् ॥ ६३ ॥
महारोगेषु जातेषु सर्वाङ्गेषु विचिन्तयेत् ।
तत्क्षणाच्छान्तिमायान्ति रोगाः सर्वे न संशयः ॥ ६४ ॥

ज्वर एवं उन्मादादि रोगों में शिर में ध्यान करता हुआ जप करे । शूल, वात, व्रण, ग्रन्थि, मूत्रकृच्छ्र आदि के होने पर हे देवेशि! उन उन स्थानों में पूर्ववत् ध्यान करता हुआ जप करे । महारोग के उत्पन्न होने पर सभी अङ्गों में ध्यान करे। इससे तुरन्त सभी रोग शान्त होते हैं, इसमें सन्देह नहीं ॥६३-६४॥

दशेन्द्रियेषु यो ध्यायेल्लभेदिन्द्रियसौष्ठवम् ।
यत्र बीजं स्मरेत्तत्र तत्फलं भवति ध्रुवम् ॥ ६५ ॥

दसों इन्द्रियों में जो ध्यान करता है, उसकी इन्द्रियाँ सुसंयत हो जाती है। जहाँ बीज का स्मरण किया जाता है, वहीं वैसा फल निश्चय ही होता है ।

सदा यश्चिन्तयेन्मूर्ध्नि स भवेदजरामरः ।
सर्वरोगप्रहरणं विद्यारोग्यप्रदं प्रिये ॥ ६६ ॥
अस्मात् परतरध्यानं नास्ति सत्यं न संशयः ।
सात्त्विकध्यानजं देवि फलमेतदुदीरितम् ॥ ६७ ॥

जो सदा मूर्ध्नि में ध्यान करता है, वह अजर और अमर होता है । हे प्रिये! सब रोगों को नष्ट करने वाले, ज्ञान और आरोग्यदायक इस ध्यान से श्रेष्ठ अन्य कुछ नहीं है, यह सत्य है, इसमें सन्देह नहीं । हे देवि ! सात्त्विक ध्यान का ऐसा ही फल कहा गया है ॥ ६६-६७ ॥

शान्तिकर्माणि सर्वाणि विधिनानेन कारयेत् ।
विधिनानेन देवेशि सौभाग्यमतुलं भवेत् ॥ ६८ ॥

सभी शान्तिकर्मों को इसी विधि से सम्पन्न करे । हे देवेशि ! इस विधि से अतुल सौभाग्य होता है ॥ ६८ ॥

द्वादशाधारपद्मेषु द्वादशस्वरसंयुतम् ।
बीजं सञ्चिन्तयेद् यस्तु स भवेदजरामरः ॥ ६९ ॥
षडाधारेषु षड्दीर्घयुक्तं बीजं विचिन्तयेत् ।
षडाधारस्थदेवीभिः पूज्यते कुलनायिके ॥ ७० ॥

**राजस ध्यान और उसका फल**—बारह आधार पद्मों में बारह स्वरों से

संयुक्त बीज का ध्यान करने से साधक अजर अमर होता है। छः आधारों में, छः दीर्घ स्वरों से युक्त बीज का ध्यान करने से हे कुलनायिके ! उन आधारों में स्थित देवियों द्वारा साधक पूजित होता है ॥ ६९-७० ॥

**हृत्पद्मकर्णिकामध्ये सूर्यमण्डलसंस्थितम् ।**
**पराप्रासादबीजन्तु तरुणारुणसन्निभम् ॥ ७१ ॥**
**जवाबन्धूकसिन्दूरपद्मरागप्रभोज्ज्वलम् ।**
**पञ्चविंशतिभिः स्पर्शाक्षरैः संवीतमम्बिके ॥ ७२ ॥**
**तत्प्रभापटलच्छायाव्यक्तीकृतजगत्त्रयम् ।**
**आत्मानञ्च स्मरेद्देवि निश्चलेनान्तरात्मना ॥ ७३ ॥**

हृदयकमल की कर्णिका के मध्य में सूर्यमण्डल में स्थित पराप्रासाद बीज का ध्यान इस प्रकार करे कि वह तरुण अरुण के समान प्रकाशमान है, जवा, बन्धूक, पद्मराग जैसी उसकी उज्ज्वल सिन्दूरी प्रभा है। पचीस स्पर्शाक्षरों से वेष्टित उसके प्रभा पटल की छाया से तीनों लोक रक्ताभ दिखाई देते हैं और हे देवि! निश्चल अन्तरात्मा से अपने को भी उसी से अभिभूत अनुभव करे ॥७१-७३॥

**पराप्रासादबीजन्तु तरुणोल्लाससंयुतः ।**
**अष्टोत्तरसहस्रन्तु मण्डलं प्रजपेत् सुधीः ॥ ७४ ॥**

विद्वान् साधक तरुणोल्लास के सहित परा प्रासाद बीज का १००८ बार जप मण्डल में करे ॥ ७४ ॥

**देवदानवगन्धर्वसिद्धकिन्नरगुह्यकान् ।**
**विद्याधरान्मुनीन् यक्षान् नागानप्सरसः स्त्रियः ॥ ७५ ॥**
**सिंहव्याघ्रोरगेन्द्रादीनन्यान् दुष्टमृगानपि ।**
**वश्यान् करोत्यसन्देहं किं पुनर्मानवादिकान् ॥ ७६ ॥**

इस विधान से देव, दानव, गन्धर्व, सिद्ध, किन्नर, गुह्यक, विद्याधर, मुनि, यक्ष, नाग, अप्सराएँ, स्त्रियाँ, सिंह, व्याघ्र, सर्प आदि और अन्य सभी दुष्ट पशु भी साधक के वशीभूत हो जाते हैं, फिर साधारण मनुष्यों की क्या बात है ॥ ७५-७६ ॥

**महदैश्वर्यमाप्नोति स्वर्गभोगादिकं प्रिये ।**
**यस्य मूर्ध्नि स्मरन् जप्यात् स वश्यो जायते हठात् ॥ ७७ ॥**

हे प्रिये ! ( ज़प से ) साधक महान् ऐश्वर्य और स्वर्गीय भोगादि को प्राप्त करता है। मस्तक में जिसका स्मरण करते हुये जप किया जाता है, वह शीघ्र ही वश में हो जाता है ॥ ७७ ॥

राजसध्यानजं देवि फलमेतदुदीरितम् ।
वश्यकर्माणि सर्वाणि विधिनानेन कारयेत् ॥ ७८ ॥

हे देवि ! राजस ध्यान का ऐसा ही फल कहा है । सभी वश्य कर्मों को इसी विधि से सम्पन्न करे ॥ ७८ ॥

सर्ववश्यकरं देवि सर्वैश्वर्यफलप्रदम् ।
अस्मात् परतरं ध्यानं नास्ति सत्यं न संशयः ॥ ७९ ॥

हे देवि ! यह सभी वश्य कर्मों को सिद्ध करने वाला एवं सभी ऐश्वर्यों का फल देने वाला है । इस ध्यान से श्रेष्ठ ध्यान अन्य नहीं है, यह सत्य है, इसमें सन्देह नहीं ॥ ७९ ॥

लिखेत्त्रिकोणं षट्कोणं अष्टारञ्च महीपुरम् ।
मूलमन्त्रं लिखेन्मध्ये साध्यनामसमन्वितम् ॥ ८० ॥

**तामस ध्यान और उसका फल**—हे परमेश्वरि! त्रिकोण, षट्कोण, अष्टार और भूपुर की रचना करे तथा उसके मध्य में साध्यनाम से युक्त मूलमन्त्र को लिखे ॥ ८० ॥

षट्कोणेषु षडङ्गानि विलिखेत् परमेश्वरि ।
केशरेषु स्वरानष्टौ वर्गान् पत्रेषु पार्वति ॥ ८१ ॥

षट्कोणों में षडङ्गों को लिखे । हे पार्वति ! केशरों में आठ स्वरों को और पत्रों में वर्गों को लिखे ॥ ८१ ॥

भूगृहस्य चतुष्कोणे विलिखेन्मूलमम्बिके ।
पञ्चवर्णरजोभिश्च शुभं दृष्टिमनोहरम् ॥ ८२ ॥
एवं यन्त्रं समालिख्य विधिवन्मन्त्रवित्तमः ।
एकत्रिषड्वसुचतुःकलसान् स्थापयेत् प्रिये ॥ ८३ ॥
मध्यादिचतुरस्रान्तं द्वात्रिंशत् कलसान् प्रिये ।
अथवाष्टादशेशानि सप्त वा दश वा प्रिये ॥ ८४ ॥
चतुरो वाप्यथैकं वा कुर्यात् साधकसत्तमः ।

हे अम्बिके ! भूपुर के चार कोनों में मूलमन्त्र को लिखे । पाँच रंगों की मिट्टी से यन्त्र को सुन्दर बनाये । इस प्रकार विधिवत् यन्त्र को लिखकर मन्त्रवेत्ता साधक यन्त्र के मध्य में और हे प्रिये ! भूपुर के चारों कोनों में क्रमशः एक, तीन, छः, आठ, चार—कुल बाईस कलशों की स्थापना करे । हे प्रिये ! हे ईशानि ! अथवा अथवा उत्तम साधक यथासामर्थ्य १८, १०, ७, ४ या केवल एक ही कलश स्थापित करे ॥ ८२-८५ ॥

अस्थिरक्तशिरातन्तुमृण्मांसं रुधिरं जलम् ॥ ८५ ॥
चर्मवस्त्रशिलाकूर्मनारिकेलफलं शिरः ।
मन्त्रप्राणसमायुक्तां यजेत् कलसदेवताम् ॥ ८६ ॥
सावित्रीनापराङ्गानि मातरोज भैरवान्विताः ।
विदिक्षु गुरुविघ्नेशदुर्गाक्षेत्रपतीन् प्रिये ॥ ८७ ॥
कलसेषु समभ्यर्च्य विधिवन्मन्त्रवित्तमः ।
अभिषिञ्चेत् प्रियं शिष्यं सर्वपापप्रशान्तये ॥ ८८ ॥

कलशों में विधिवत् अस्थि, रक्त, शिरा, तन्तु, मिट्टि रूप मांस और चर्म वस्त्रादि से युक्त, रुधिररूप जल और प्राणप्रतिष्ठा मन्त्र से प्रतिष्ठित कलश देवताओं और उनके अङ्ग देवताओं एवं भैरवों के सहित माताओं का तथा हे प्रिये! विदिशाओं में गणेश, दुर्गा, क्षेत्रपाल आदि का पूजन कर सभी पापों की शान्ति के लिये कलशस्थ जल से प्रिय शिष्य का अभिषेक करे ॥ ८५-८८ ॥

आयुः श्रीकान्तिसौभाग्यविद्यारोग्यादिकं भवेत् ।
राजाभिषिक्तो लभते चतुःसागरगां महीम् ॥ ८९ ॥

इससे आयु, लक्ष्मी, कान्ति, सौभाग्य, ज्ञान, आरोग्य आदि की प्राप्ति होती है । इस प्रकार अभिषिक्त राजा को चारों दिशाओं में सागर तक व्याप्त पृथ्वी पर अधिकार मिलता है ॥ ८९ ॥

अकिञ्चनोऽभिषिक्तश्च महदैश्वर्यमाप्नुयात् ।
वन्ध्याभिषिक्ता लभते पुत्रं सर्वगुणान्वितम् ॥ ९० ॥

अभिषिक्त अकिञ्चन को महान् ऐश्वर्य और अभिषिक्त वन्ध्या को सर्वगुणसम्पन्न पुत्र प्राप्त होता है ॥ ९० ॥

भूतापमृत्युरोगाद्या विनश्यन्ति न संशयः ।
त्रिलौहे वापि भूर्जे वा लिखित्वा यन्त्रमुत्तमम् ॥ ९१ ॥
विधृतं बाहुना देवि सर्वरक्षाकरं भवेत् ।
आयुरारोग्यमैश्वर्यं विद्यालाभं यशो जयम् ॥ ९२ ॥
यद् यत् स्वमनसोऽभीष्टं तत्तदाप्नोत्यसंशयः ।

भूतबाधा, अकाल, मृत्यु, रोगादि इसके प्रभाव से दूर होते हैं, इसमें सन्देह नहीं । त्रिलौह या भोजपत्र में उत्तम यन्त्र को बाहु में धारण करे, तो हे देवि! वह सब प्रकार से रक्षा करता है और आयु, आरोग्य, ऐश्वर्य, विद्यालाभ, यश और विजय जो-जो अभीष्ट होता है, उसकी प्राप्ति होती है, इसमें सन्देह नहीं ॥ ९१-९३ ॥

खड्गवश्यं वयःस्तम्भं यक्षिण्यञ्जनपादुकाम् ॥ ९३ ॥
अणिमाद्यष्टसिद्ध्यादि महारसरसायनम् ।
सञ्जीवयोगगुटिकाप्रमुखाखिलसिद्धयः ॥ ९४ ॥
पराप्रासादमन्त्रज्ञैर्दृश्यन्ते नात्र संशयः ।

पराप्रासादमन्त्र के जानने वाले को खड्गवश्य, वयःस्तम्भ, यक्षिणीसिद्धि, अञ्जनसिद्धि, पादुकासिद्धि, अणिमादि अष्टसिद्धियाँ, महारसरसायन, सञ्जीवयोग गुटिका आदि सभी मुख्य सिद्धियाँ निःसन्देह सुलभ होती हैं ॥ ९३-९५ ॥

षट् कर्माणि प्रयुञ्जीत नान्यथा भवति प्रिये ॥ ९५ ॥

हे प्रिये ! षट्कर्मों के प्रयोग कभी निष्फल नहीं होते ॥ ९५ ॥

पीतद्रव्यैर्हरिद्राद्यैः समित्पत्रफलादिभिः ।
जुहुयात् पूर्ववन्मन्त्री देवताध्यानतत्परः ॥ ९६ ॥

देवता का ध्यान करते हुये साधक पूर्ववत् पीले द्रव्यों और हरिद्रा आदि से समिधा एवं पत्रफलों सहित हवन करे ॥ ९६ ॥

वाक्श्रोत्रगतिदृक्सेनानदीग्रहरिपून् प्रिये ।
नानादुष्टमृगान् देवि स्तम्भयेन्नात्र संशयः ॥ ९७ ॥

हे प्रिये ! इससे वाणी, श्रवण, गति, दृष्टि, सेना, नदी, ग्रह, शत्रु, और हे देवि ! विविध दुष्ट पशुओं का निःसन्देह स्तम्भन होता है ॥ ९७ ॥

ग्रहवेगादिदुष्टानां विनाशनकरं प्रिये ।
अस्मात् परतरं ध्यानं नास्ति सत्यं न संशयः ॥ ९८ ॥

हे प्रिये ! ग्रहों के कोप, रोगों और दुष्टों का विनाश करने वाले ध्यान से श्रेष्ठ अन्य नहीं है, यह सत्य है, इसमें सन्देह नहीं ॥ ९८ ॥

तामसध्यानजं देवि फलमेतदुदीरितम् ।
दुष्टमारणकर्माणि विधिनानेन साधयेत् ॥ ९९ ॥

हे देवि ! तामस ध्यान का ऐसा ही फल कहा है । दुष्टों के मारणकर्मों को इसी विधान से करे ॥ ९९ ॥

इत्यादि ध्यानभेदेन ज्ञात्वा गुरुमुखात् प्रिये ।
षट् कर्माणि प्रयुञ्जीत नान्यथा वीरवन्दिते ॥ १०० ॥

हे प्रिये ! गुरुमुख से इन ध्यान भेदों को जानकर षट्कर्मों को करे, हे वीरवन्दिते ! अन्य प्रकार से नहीं करना चाहिए ॥ १०० ॥

